TRIVANDRUM SANSKRIT SERIES.

NO. XVIII.

THE

# NÂRÂYAṆÎYA

OF

## NÂRÂYAṆA BHAṬṬA

WITH THE COMMENTARY, BHAKTAPRIYÂ

OF

DESAMANGALA VARYA

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts,*

TRIVANDRUM.



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.



TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1912.





अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १८.

# नारायणीयं

## नारायणभट्टप्रणीतं

देशमङ्गलवार्यकृतया भक्तप्रियाख्यव्याख्यया समेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः १०८७, क्रैस्ताब्दाः १९१२.

# PREFACE.

This *stotra*, *Nârâyanîya*, so called because of the deity *Nârâyaṇa* whom it extols as well as because it is composed by *Nârâyana*, summarises, in order, the whole story of *Srímad-Bhâgavata*. It consists of 100 *Dasakas* (decades) of more or less 10 *slokās* each, and contains, on the whole, 1036 *slokas*. This is not only an excellent *stotra*, in itself, being an effusion of devotional sentiment, but also a *Kâvya*, on account of its wealth of poetic merits. It is regarded in *Kerala* as much a work of devotion as *Srìmad-Bhâgavata*, and the pious people make it their duty to recite it daily with the utmost faith and reverence. It was thought advisable to publish a commentary also for the elucidation of certain concise and abstruse portions. Hence the gloss of *Desamangala Vārya* is added to this. It is now issued in Devanagari characters to secure wider circulation. The present edition of the text is based on five manuscripts, and the commentary, on three manuscripts, all obtained from the Palace Library.

The author of the work, *Nârâyana Bhatta* was the son of a Brahmin of *Kerala*, named *Mâtridatta*. He was born in Mepputtur Illam, in the village of Perumanam, near the temple of *Tirunâvâ*, on the northern bank of the river, *Nila*, in North Malabar. He studied *Vyākarana* and other subjects under one *Achyuta Pisharodi*. Tradition has it that he was once attacked with rheumatism, and to get himself freed from this dire disease he propitiated his favourite deity, *Srîkrishna* of Guruvâyûr composing in His honor a *Dasaka* of this work each day and that he was completely cured of the disease. In course of time, his fame as a poet and an author grew high, and the excellence of his works was recognized by all. *Devanârâyana*, King of Ambalapuzha, entertained him at his court and honoured him by his munificient patron-

age. It was at his instance that he composed his masterpiece *Prakriyâsarvasva*, a voluminous *Vyâkarana* work, which is said to have elicited unstinted praise from the great *Bhottoji Dikshita.* The following works are now known to have been written by the author:—

1. Nârâyanîya.
2. Mânameyôdaya.
3. Prakriyâsarvasva.
4. Dhâtukâvya.
5. Ashtamîchampukâvya.
6. Kailâsasailavarnanâ.
7. Kounteyâshtaka.
8. Ahalyāsâpamoksha.
9. Commentary of the sloka 'पुष्पोद्भेद....' in Amaruka.
10. Sûrpanakhâpralâpa.
11. Râmakathâ.
12. Dûtavâkyaprabandha.
13. Nâlâyanîcharita.
14. Nrigamokshaprabandha.
15. Ràjasûyaprabandha.
16. Subhadrâharanaprabandha.
17. Svâhâsudhákara.
18. Kotiyaviraha — Sangîtaketusringâralîlācharita.

It is traditionally known that the *Kalidina* on which the composition of *Nârâyanîya* was completed is indicated by the last word "आयुरारोग्यसौख्यम्" in the book. This is about 1590 A.D., and the date of the author is therefore conclusively fixed in the latter half of the 16th century A.D.

Trivandrum. T. GANAPATI SÂSTRÎ.

# निवेदना।

C⊥

इदं स्तोत्रं **नारायण**विषयत्वाद् **नारायण**रचितत्वाच्च **नारायणीयम्** इत्याख्यायते। इहानुपूर्व्येण **श्रीभागवत**गताः कथाः सर्वाः संक्षिप्ताः। अत्र शतं श्लोकदशकानि वर्तन्ते। तत्रैकमेकोनम्, अन्यानि निरग्राणि साग्राणि च। श्लोकाश्चात्राहत्य १०३६ भवन्ति। इदं न केवलं भक्तिरसपरिपोषशालितया स्तोत्ररत्नं, किन्तु काव्यगुणपुष्कलतया काव्यरत्नमपि भवति। **श्रीभागवतस्येवैतस्य** पारायणमभ्युदयकामाः **केरलेषु** शिष्टा भक्तिपूर्वमाद्रियन्ते। इदं प्रौढत्वाद् बहुत्र व्याख्यासापेक्षम्। अतो **देशमङ्गलवार्य**कृतया ललितया व्याख्यया समेतं कृत्वा संशोध्य चेदमिदानीं देवनागरलिपिभिः प्रचारबाहुल्याय मुद्रितम्। संशोधनाधारतया **मूलस्य** ५, व्याख्यायाः २ आदर्शा राजकीयग्रन्थशालात उपलब्धाः।

अस्य कवि**र्नारायणभट्टः** केरलेषु **निला**नद्या उत्तरतीरवर्तिनि **तिरुनावा**क्षेत्रासन्ने **पेरुमनं**ग्रामे **मेप्पुत्तूर**नाममठे **मातृदत्ता**भिधानस्य विप्रश्रेष्ठस्य पुत्रः। अयम् **अच्युतपिषारोटि**सकाशाद् व्याकरणादिविद्या अधीतवान्। कदाचिदेष वातरोगाभिभूतो **गुरुवायुपुरेश्वरं श्रीकृष्ण**मस्य स्तोत्ररत्नस्य प्रत्यहमेकैकदशकनिर्माणसपर्यया परितोष्य कल्यो बभूव। अथ लोकोत्तरेण कवित्वेन, पाण्डित्येन, चारित्रेण, ग्रन्थनिर्माणेन च प्रथमानोऽयम् **अम्बलप्पुळ**पुराधिपेन, राज्ञा **देवनारायणेन** सविशेषमुपलालितस्तदास्थानभूषणतां प्रतिपेदे। **देवनारायणस्यैव** चोदनयानेन **प्रक्रियासर्वस्वं** नाम विपुलललितो व्याकरणग्रन्थः प्रणीतः; यं **श्रीभट्टोजिदीक्षितः** श्लाघितवानिति प्रथास्ति। एतत्प्रणीता ग्रन्थास्तावदेते —

१ नारायणीयम्।
२ मानमेयोदयः।
३ प्रक्रियासर्वस्वम्।
४ धातुकाव्यम्।
५ अष्टमीचम्पुकाव्यम्।
६ कैलासशैलवर्णना।
७ कौन्तेयाष्टकम्।
८ अहल्याशापमोक्षः।
९ 'पुष्पोद्भेदम् ....' इत्यमरुकश्लोकव्याख्यानम्।
१० शूर्पणखाप्रलापः।
११ रामकथा।
१२ दूतवाक्यप्रबन्धः।
१३ नालायनीचरितम्।
१४ नृगमोक्षप्रबन्धः।
१५ राजसूयप्रबन्धः।

१६ सुभद्राहरणप्रबन्धः ।

१७ स्वाहासुधाकरम् ।

१८ कोटियविरहः —
सङ्गीतकेतुशृङ्गारलीलाचरितम् ।

**नारायणीय**स्यान्तिमपद्ये 'आयुरारोग्यसौख्यम्' इति पदेन तत्समाप्तिकलिदिनसंख्या सूच्यत इति शिष्टोपदेशपरम्परा । सा च संख्या १७१२२१० इत्येवंरूपा १५९०-तमः क्रैस्ताब्दो भवतीति स एव महाकवे**र्नारायणभट्ट**स्य जीवितसमयो निश्चितः ।

अनन्तशयनम्.

**त. गणपतिशास्त्री.**

# विषयानुक्रमः ।

## प्रथमस्कन्धपरिच्छेदः.



## अथ द्वितीयस्कन्धपरिच्छेदः.



## अथ तृतीयस्कन्धपरिच्छेदः.

---

## अथ चतुर्थस्कन्धपरिच्छेदः.



---

## अथ पञ्चमस्कन्धपरिच्छेदः.



---

## अथ षष्ठस्कन्धपरिच्छेदः.



---

## अथ सप्तमस्कन्धपरिच्छेदः.

## अथाष्टमस्कन्धपरिच्छेदः



---

## अथ नवमस्कन्धपरिच्छेदः



---

## अथ दशमस्कन्धपरिच्छेदः

---

अथ एकादशस्कन्धपरिच्छेदः.



---

अथ द्वादशस्कन्धपरिच्छेदः.



---

॥ श्रीः ॥

श्रीनारायणभट्टकृतं

# नारायणीयं

## देशमङ्गलवार्यकृतया भक्तप्रियाख्यया व्याख्यया संवलितम् ।

---

गजाननं गिरां देवीं व्यासं कंसहनं गुरून् ।
भूतेशमीशमाशासितार्थदान् प्रणमाम्यहम् ॥

श्रीमद्भागवतार्थसङ्ग्रहमयं नारायणीयाह्वयं
स्तोत्रं हृद्यमनर्घमुज्ज्वलतरं ध्वस्तान्धकारोदयम् ।
यत् कण्ठेषु सतामनुत्तमगुणं प्रत्यग्रमुद्भासते
तस्येयं क्रियते यथामति मया व्याख्या हि भक्तप्रिया ॥

कीर्तनं भगवत्कीर्तेर्मत्कृतावानुषङ्गिकम् ।
इत्येव प्रयते नास्मद्व्याख्यातृत्वप्रसिद्धये ॥

इह खलु समधिगतनिखिलनिगमार्थसतत्त्वतया, शाब्दपरब्रह्मपारावारपारीणतया, परमभागवततया च सकलसहृदयमहितयशाः **श्रीनारायण**कविः परमकारुणिकतया भक्तानुग्रहाय श्रीभागवतार्थानुसारि नारायणीयाभिधं स्तोत्ररत्नं चिकीर्षुः प्रथमं प्रथमश्लोकेन प्रारिप्सितस्य स्तोत्रस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां श्रोतृजनसकलसमीहितसिद्धये च स्तोत्रप्रतिपाद्यजगत्सर्गविसर्गादिदशलक्षणलीलानिदानभूतपरतत्त्वानुस्मरणरूपं मङ्गलमाचरति —

**सान्द्रानन्दावबोधात्मकमनुपमितं कालदेशावधिभ्यां**
**निर्मुक्तं नित्यमुक्तं निगमशतसहस्रेण निर्भास्यमानम् ।**

---

१. 'णतोऽस्म्य' ख. पाठः. २. 'ल्हृ' ख. पाठः. ३. 'धानं स्तो' ख. पाठः.
४. 'निखिल' ख. पाठः.

अस्पष्टं दृष्टमात्रे पुनरुरुपुरुषार्थात्मकं ब्रह्म तत्त्वं
तत्तावद् भाति साक्षाद् गुरुपवनपुरे हन्त भाग्यं जनानाम् ॥ १ ॥

सान्द्रेति। ब्रह्म गुरुपवनपुरे साक्षाद् भातीति सम्बन्धः। ब्रह्म सर्वाश्रयं सर्वानुस्यूतं शुद्धचैतन्यम्। गुरुपवनपुरे गुरुपवनपुरमिति प्रसिद्धे क्षेत्रे। साक्षाद् भाति भक्तानुग्रहायातिस्वच्छतरशुद्धसत्त्वमयमूर्ति सद् आच्छादितनिजसच्चिदानन्दरूपं प्रतिमामिषेण सकलजनचाक्षुषज्ञानगोचरीभवतीत्यर्थः। ननु किं सकलं निष्कलं वा ब्रह्म साक्षाद् भातीत्युच्यत इत्याशङ्कायामाह — तत्तावदिति। तावच्छब्दोऽवधारणे। यद् उक्तविशेषणविशिष्टं निष्कलं ब्रह्म, तदेवेत्यर्थः। शुद्धसत्त्वस्य च निष्कलब्रह्मानन्यत्वं 'निष्कम्प' (श्लो. ४) इत्यत्रोपपादयिष्यते। अथवा तावच्छब्दः क्रमार्थः। तद् ब्रह्म तावत् क्रमानुरोधेन साक्षाच्चाक्षुषतया मानसतया स्वप्रकाशसंविद्रूपेण च भातीत्यर्थः। अयं चाशयः — श्रीगुरुपवनपुराधीशं चक्षुषा साक्षात्कृत्य श्रवणकीर्तनादिलक्षणया भक्त्या भजतां झटिति सञ्जातया प्रेमलक्षणया भक्त्या निखिलकल्मषनाशे सति निर्मलचेतस्तयाविलम्बितमेव साधनचतुष्टयसम्पत्तेरधिकारित्वे जाते सकललोकगुरोः श्रीहरेरेव प्रभावेणाहमखण्डं ब्रह्मास्मीति चित्तवृत्तिरुदेति। सा च ब्रह्मविषया सती ब्रह्मगताज्ञानबाधनद्वारा तत्कार्यभूतं शरीरादिप्रपञ्चं, तदन्तर्भूतामखण्डाकारां चित्तवृत्तिमपि बाधते। तदा दर्पणाद्यभावे बिम्बप्रतिबिम्बैक्यवत् प्रत्यगभिन्नं सच्चिदानन्दं ब्रह्म स्वप्रकाशसंविद्रूपेणावतिष्ठत इति। एवमनायासेनैव परमपुरुषार्थलब्धिः सुकृतपरिपाकैकमूलेत्याह — हन्त भाग्यं जनानामिति। जनानां भाग्यं पुरुषार्थलब्धिसामग्र्यानुमीयत इत्यर्थः। जनानामित्यविशेषोक्त्या सर्वेषामपि भगवद्भजनाधिकार इति द्योत्यते। हन्तेति हर्षे। जनानां भाग्ये सति हर्षाविर्भावोऽस्य शुकनारदादिभगवदधिकारिपुरुषाणामिव परमकारुणिकतया परार्थघटनकुतुकित्वं द्योतयति। ननु किमर्थमिदमुच्यते 'ब्रह्म भाति, हन्त भाग्यं जनानामि'ति। न तावत् स्वप्रतिपत्त्यर्थं, वाक्यप्रयोगवैयर्थ्यात्। न परं बोधयितुं, 'भजध्वमि'त्यादितदुपपादकवाक्यशेषाश्रवणादिति चेद्, मैवम्। यथा केनाचिल्लाक्षणिकेन 'निधिगर्भेयं भूमिः, हन्त भाग्यवन्तो यूयम्' इत्युक्ते श्रोतार-

१. 'क्तजनानु' क. पाठः. २. 'तत्त्वस्य नि' क. पाठः. ३. 'व पु' क. पाठः.

स्तदर्थिभिर्निधिग्रहणं कर्तव्यमित्यनेनोक्तमित्यध्याहृत्य वाक्यशेषं कल्पयन्ति, तद्वदत्रापि वाक्यशेषोऽध्याहर्तव्यः । एवञ्च कथञ्चिद् बहुजन्मार्जितसुकृतपरिपाकवशेन लब्धमनुष्यजन्मानो यूयं भक्तियोगपुरःसरं भक्तानुग्रहायाङ्गीकृतसत्त्वविग्रहं श्रीगुरुवायुपुरनाथं परं ब्रह्म संसेव्य परमपुरुषार्थमनुभवतेत्युपदेशरहस्यमेवैतदित्यवगन्तव्यम् । ननु भाग्यमिति कर्मफलमुच्यते । तज्जन्यत्वे परमपुरुषार्थस्यानित्यत्वप्रसङ्ग इति चेद्, न, अधिकारित्वसम्पादनेनोपक्षीणत्वात् कर्मफलानाम् । तदुक्तम् 'एषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनम्' इति । ब्रह्मणः स्वरूपलक्षणमाह— सान्द्रानन्दावबोधात्मकं तत्त्वमिति । आनन्दः सुखम्, अवबोधो ज्ञानं, सान्द्रौ घनीभूतौ आनन्दावबोधावात्मा स्वरूपं यस्य तत् तथोक्तम् । आनन्दस्य सान्द्रत्वं नाम स्रक्चन्दनाद्युपाध्यनवच्छिन्नत्वम् । अवबोधस्य[3] च घटादिविषयानवच्छिन्नत्वम् । यदुक्तमभियुक्तैः—

'यस्मिन्यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे ।
यद् बोधमात्रं तद् ब्रह्मेत्येवं वेदान्तनिश्चयाद् ॥'

इति । तत्त्वं परमार्थं सत्, सर्वस्याप्यात्मत्वेन प्रसिद्धत्वात् । कस्यापि हि न नाहमस्मीति प्रतीतिरुदेति । एवञ्चाहंप्रत्यय एव प्रत्यगात्मत्वेन ब्रह्मणः सिद्धत्वान्न तत्सत्त्वे विप्रतिपत्तिरिति भावः । आभ्यां विशेषणाभ्यां सच्चिदानन्दं ब्रह्मेति स्वरूपलक्षणमुक्तं, यथा प्रकृष्टप्रकाशश्चन्द्रमा इति । नन्वेवंलक्षणमपि ब्रह्म नानुभवपदवीमवतरति । अत ईदृशं तदिति सदृष्टान्तं प्रदर्श्यतामित्याशङ्क्याह — अनुपमितमिति । सजातीयस्य विजातीयस्य वान्यस्याभावाद् ब्रह्मणः केनाप्युपमानमशक्यमिति भावः । अनेन च ब्रह्मणोऽद्वितीयत्वमप्यर्थादुक्तम् । ननु जीवेश्वरयोर्जीवानां तदुपाधीनां च भेदे जाग्रति कथमद्वितीयत्वं ब्रह्मण इति चेद्, मैवं, भेदप्रपञ्चस्य ब्रह्मण्यनाद्यविद्याकल्पितत्वेन स्रग्भुजङ्गवन्मिथ्यात्वात् । तेन तावन्न सद्वितीयत्वम् । अविद्या चेन्द्रजालविद्येव स्वाश्रयमैन्द्रजालिकमविमोहयन्ती ब्रह्माश्रिता काचिदशेषप्रपञ्चनिर्माणशक्तिः । शक्तिशक्तिमतोरभेद इति ब्रह्माद्वैतत्वसिद्धिः । ननु जीवेश्वरौ भिन्नौ विरुद्धधर्मत्वाद् दहनतुहिनवदिति भेदानुमानमस्तीति चेद्, न, एकत्वश्रुतिस्मृतिबाधितविषयत्वादस्यानुमानस्य । नन्वीश्वरस्य जीवैकत्वे संसारित्वं स्याद्, जीवानां चेश्वरत्वे संसाराभाव-

१. 'क्यार्थं क' ख. पाठः. २. 'त्वे च पु' क. पाठः. ३. 'स्य घ' क. पाठः. ४. 'त् के' ख. पाठः. ५. 'रात्र' ख. पाठः.

प्रसङ्ग इति चेद्, न, विद्याविद्ययोर्भेदादुभयोपपत्तेः। तथाहि विद्या नाम विक्षेपशक्तिप्रधानेश्वरोपाधिः, ययेश्वरः सृष्ट्यादि करोति। अविद्या नामावरणशक्तिप्रधाना जीवोपाधिः, ययेश्वरः सन्नपि जीवस्तत्कृतोपाधिभेदेन संसारी भवति। अतो जीवेश्वरयोरेकत्वेऽप्यविद्यया संसारो विद्यया[1] च तदभावो नानुपपन्नः। अनादित्वान्निर्गुणत्वाच्चेश्वरस्य जरामरणादिसांसारिकधर्माश्च न भवन्ति, यथा स्वप्नादुत्थितस्य स्वाप्नाः कर्तृत्वभोक्तृत्वादय इत्यलमतिप्रसङ्गेन। ननु कर्तृत्वभोक्तृत्वादिरात्मनः स्वाभाविको धर्म इति न कदाचिदपि तेन वियोगः स्यादित्याशङ्क्याह — कालदेशावधिभ्यां निमुक्तमिति। कालतो योऽवधिर्देशतश्च, ताभ्यां निर्मुक्तं[2], विरहितमित्यर्थः। ततश्च व्योमवदमूर्तस्य कूटस्थस्य ब्रह्मणः क्रियादिसंयोगानुपपत्तेर्न कर्तृत्वभोक्तृत्वे इत्यर्थः। नित्यत्वं च ब्रह्मणः कार्यप्रपञ्चस्योत्पत्तेः प्राक् पश्चादपि विद्यमानत्वम्। विभुत्वं च यथा मृत्सुवर्णादेर्घटकुण्डलादिषूपादानकारणत्वेनानुगमः, तद्वत् सर्वोपादानस्य ब्रह्मणोऽपि सर्वत्र शरीरादौ कारणत्वेनानुस्यूतत्वात् सर्वव्याप्तत्वम्। अतोऽनेन जगत्कारणं ब्रह्मेति[3] अयावल्लक्ष्यभावि तटस्थलक्षणमप्यर्थादुक्तं वेदितव्यम्। एवं लक्षणद्वयसिद्धस्य वस्तुनः प्रमाणापेक्षायामाह — निगमेति। निगमा उपनिषदः, तासां[4] शतसहस्रमिति बहुत्वाभिप्रायम्। बहुभिरुपनिषद्वाक्यैरित्यर्थः। अस्पष्टं यथा भवति तथा निर्भास्यमानमिति, उपक्रमोपसंहारादिभिर्लिङ्गैस्तात्पर्येण[5] लक्षणया प्रतिपाद्यमानमित्यर्थः। यद्वा दृष्टमात्रेऽस्पष्टमिति सम्बन्धः। वाक्यार्थज्ञाने सत्यपि विपरीतान्यथाभावनादि दिङ्मोहवत्[6] सहसा न निवर्तते। अतः श्रवणमननादिना तन्निवृत्तावेव ब्रह्मज्ञानमनुभवपर्यवसाय्यवतिष्ठत इति भावः। नन्वेवंभूतब्रह्मदर्शने[7] सति किं फलं, तत्राह — पुनरुरुपुरुषार्थात्मकमिति। पुनः ब्रह्मज्ञानानन्तरमित्यर्थः। उरुः पुरुषार्थो मोक्षः। तस्य चोरुत्वं दुःखानुषङ्गाभावात् कालदेशानवच्छेदाच्च परिपूर्णत्वम्, इतरपुरुषार्थानां कर्मजन्यतया तदभावात्[8]। पुरुषार्थात्मकमिति। ब्रह्मज्ञानसमनन्तरमेव ब्रह्म पुरुषार्थरूपेणावतिष्ठत इत्यर्थः। एवं ब्रह्मभूतस्य न पुनरावृत्तिरित्यभिप्रायेण ब्रह्म विशिनष्टि — नित्यमुक्तमिति। नित्यमेव मुक्तं मायातत्कार्योपरागरहितम्। परमार्थतोऽद्वितीयस्यावि-

---

१. 'या त' क. पाठः. २. 'क्तमिति वि' क. पाठः. ३. 'ति या' ख. पाठः. ४. 'तेषां श' ख. पाठः. ५. 'ण ब्र' क. पाठः. ६. 'हादिव' क. पाठः. ७. 'ने किं' क. पाठः. ८. 'त्। ब्र' ख. पाठः.

यातत्कल्पितशरीरादिसम्बन्धस्यासम्भावनीयत्वादिति भावः । एवञ्च मुक्तावस्थाया अजन्यत्वान्न पुनरावृत्तिरिति भावः । एवं सान्द्रानन्दावबोधात्मकं तत्त्वमिति पद-द्वयेन सच्चिदानन्दं ब्रह्मेति स्वरूपलक्षणमुक्तम् । अनुपमितपदेन तस्याद्वितीयत्व-मुक्तम् । कालदेशावधिभ्यां निर्मुक्तमिति ब्रह्मणो जीवैक्येऽपि कर्तृत्वादिजीवधर्मा-सम्भव उक्तः । अर्थात् तटस्थलक्षणमप्युक्तम् । निगमशतसहस्रेण निर्भास्यमान-मित्युपनिषदां प्रामाण्यं चोक्तम् । एवम्भूतं ब्रह्म गुरुपवनपुरे साक्षाद् भातीत्यतिप्र-याससाध्यस्य ब्रह्मदर्शनस्य सकलजनसुसम्पाद्यत्वमुक्तम् । हन्त भाग्यं जनानामिति ब्रह्मदर्शनाधिकारस्य सुकृतैकमूलत्वं चोक्तम् । दृष्टमात्रे अस्पष्टमिति ब्रह्मानन्दानु-भवस्य श्रवणादिसाध्यत्वमुक्तम् । पुनरुरुपुरुषार्थात्मकमिति संसारदुःखोच्छेदो ब्रह्मानन्दावाप्तिश्चेति ब्रह्मदर्शनस्य फलद्वितयं दर्शितम् । नित्यमुक्तमिति ब्रह्म प्राप्त-स्य 'अनावृत्तिः शब्दाद्' (ब्र. सू. ४. ४. २२) इति न्यायेनापुनरावृत्तिश्च दर्शिता । एवं ब्रह्मण उपास्यत्वोक्तेः 'ब्रह्म भाति, परं धीमही'त्यादिपदानां तात्पर्यैक्यादप्य-नेन श्लोकेन श्रीभागवतप्रथमश्लोकार्थ एव प्रदर्शितः । अत्र च स्तोत्रे ब्रह्म प्रतिपा-द्यत्वेन विषयः, तत्प्राप्तिः प्रयोजनं, भाग्यवन्तोऽधिकारिण इत्यपि सूचितम् ॥ १ ॥

एवं तावन्मङ्गलाचरणपरेण प्रथमश्लोकेनार्थात् प्रतिपादिते[२] अपि विषयप्र-योजने श्रोतृजनसुखप्रतिबोधनाय मुखतः प्रतिपादयति—

**एवं *दुर्लभ्यवस्तुन्यपि सुलभतया हस्तलब्धे यदन्यत्**
**तन्वा वाचा धिया वा भजति बत जनः क्षुद्रतैव स्फुटेयम् ।**
**एते तावद् वयं तु स्थिरतरमनसा विश्वपीडापहत्यै**
**निश्शेषात्मानमेनं गुरुपवनपुराधीशमेवाश्रयामः ॥ २ ॥**

एवमिति । अत्र[३]विशिष्टेन वस्तुशब्देन परमार्थसद्ब्रह्मोच्यते, मिथ्यार्थे विशिष्टस्यैव प्रयोगदर्शनात् । तद् दुर्लभ्यं दुःखेन ज्ञातुं प्राप्तुं वा शक्यं, साध-नचतुष्टयसम्पन्नैर्गुरूपसत्तिद्वारा श्रवणमननादिभिरेवावगन्तुं शक्यत्वात्, तस्मिन् । एवम् उक्तेन प्रकारेण सुलभतया अनायासेन । हस्तलब्ध इत्यनेन तज्ज्ञानप्रा-

---

१. 'ता । ब्रह्म भा' ख. पाठः २. 'ते वि' क. पाठः. ३. 'त्र वि' क. पाठः.

---

* दुःशब्दस्य लभ्यशब्देन समासः.

प्त्योः सौकर्यं द्योत्यते। दुर्लभ्यवस्तुन्येवं सुलभतया हस्तलब्धे सत्यपि अन्यद् देवतान्तरं विषयादिकं वा तन्वा वाचा धिया वा भजति जन इति यत्, तद् बत कष्टम्[1]। इयं क्षुद्रता असारतैव, अविवेकितैवेति यावत्। स्फुटा सर्वसम्मतेत्यर्थः। विवेकिनो विशेषमाह— एत इति। वयमित्यात्मनि बहुवचनम्। एत इति स्वस्य भगवद्भजनसंरम्भं दर्शयति। यद्वा एते वयमिति श्रोतारोऽपि गृह्यन्ते। एते वयं तावत् तु तथा क्षुद्रतां न कुर्मः, किन्तु स्थिरतरेण एतद्भजनमेव श्रेय इति निश्चितेन मनसा गुरुपवनपुराधीशं परं ब्रह्मैव आश्रयामः सेवामहे। अत्र ये सकामास्तान् प्रति फलं दर्शयति— विश्वेति। विश्वपीडानामाध्यात्मिकादीनां सर्वपीडानाम्, अपहत्यै नाशाय। अथवा विश्वपीडापहृतिर्मोक्षः, तस्यैव सकलपीडानिवृत्तिरूपत्वात्। अनेन च येऽकामनयैनं सेवन्ते, त उत्तमाधिकारिणः, ये तु फलकामनया सेवन्ते, ते मध्यमाधिकारिणः, ये तु[2] भेददृष्ट्यान्यद् देवतान्तरं सकामाः सेवन्ते, तेऽधमाधिकारिण इति स्तोत्रेऽधिकारिभेदोऽपि[3] प्रदर्शितः। विश्वपीडापहत्यै इति प्रयोजनमुक्तम्। निश्शेषात्मानामिति भगवद्विशेषणेन विषयो निर्दिश्यते। निश्शेषाणां चराचराणाम् आत्मा कारणम्, अथवा निश्शेषश्चराचरप्रपञ्च आत्मा स्वरूपं यस्य स तथा सर्वात्मा, यद्वा निश्शेषाणामात्मा अन्तर्यामी, यदिवा निश्शेषाणां ब्रह्मविष्णुगिरीशादीनाम् आत्मा स्वरूपभूतः, तं सर्वदेवमयमित्यर्थः। अत्र क्रियारूपा साधनभक्तिरपि विषयत्वेन निर्दिश्यते— तन्वा वाचा धिया वेति। तदुक्तं—

"भक्तिर्हि द्विविधा प्रोक्ता साध्यसाधनभेदतः।
साध्या ह्यहैतुकी प्रीतिः क्रिया स्यात् साधनात्मिका॥
सा पुनर्नवधा प्रोक्ता पुराणे साधनात्मिका।"

इति। अत्र वाचेति कीर्तनमुच्यते, तन्वेत्यर्चनवन्दननमस्काराः, धियेति श्रवणस्मरणदास्यसख्यात्मनिवेदनानीति। अथवा दुर्लभ्यं वस्तु मनुष्यजन्म तस्मिन्[4]। एवं ब्राह्मण्यविद्यापटुकरणत्वाद्याश्रयतया हस्तलब्ध इति कैङ्कर्यादिराहित्यं द्योतयति[5]। एवं सत्यपि अन्यद् अन्यशरीरेष्वपि सुलभं विषयादि जनो भजति

१. 'म्। सा इ' क. पाठः. २. 'अवि' क. पाठः. ३. 'रभेदो द' क. पाठः. ४. 'न् ब्र' क. पाठः. ५. 'त्यते' क. पाठः.

बत । वयं त्वित्यादि समानम् । एवञ्च स्तोत्रे अधिकारिविषयप्रयोजनानि दर्शितानि। अत्र च 'धर्मः प्रोज्झितकैतवोऽत्र'='तन्वा वाचा धिया वा भजति', 'वास्तवं वस्तु'='दुर्लभ्यवस्तुनि', 'किं वा परैः'='अन्यत् तन्वा वाचा धिया वा भजति बत', 'तापत्रयोन्मूलनं'='विश्वपीडापहत्यै', 'सद्यो हृद्यवरुध्यते'='स्थिरतरमनसा', 'ईश्वरः'='निश्शेषात्मानमि'त्यादिपदानामर्थसाम्यादस्य श्रीभागवतद्वितीयश्लोकार्थता च द्रष्टव्या । अयं चापरोऽर्थः सहृदयहृदयमनुरञ्जयति—दुर्लभ्यं वस्तु श्रीभागवतं पुराणम् । तस्मिन्नेवं ब्रह्मनारदव्यासपरम्परया सुलभतया हस्तलब्धे सत्यपि जनोऽन्यत् पुराणं काव्यादि वा भजतीति यत्, सेयं क्षुद्रता स्फुटैव। एते तावद् वयं तु तन्वा परिमितया श्रीभागवतार्थसङ्क्षेपणरूपया वाचा एनं श्रीभागवतप्रधानप्रतिपाद्यं गुरुपवनपुराधीशमेवाश्रयामः गुरुपवनपुराधीशस्तोत्ररूपेण श्रीभागवतार्थं सङ्क्षिपाम इति भावः । किं भागवतार्थैकदेशं, नेत्याह — निश्शेषात्मानमिति । निश्शेषो दशलक्षणलीलालक्षणद्वादशस्कन्धार्थरूप आत्मा यस्य । अवान्तरप्रयोजनमाह — विश्वेति । विश्वेषां स्त्रीशूद्रादीनामपि पीडापहत्यै मोक्षाय । स्तोत्रपठने हि स्त्रीशूद्रादीनामप्यधिकारः । स्थिरतरमनसेति मनसः सारोद्धारस्थिरीकरणेनास्य स्तोत्रस्य सारसङ्ग्रहरूपत्वं व्यज्यते । तन्वा वाचेति साधिकसहस्रसङ्ख्यापरिमितपद्यात्मकत्वं, धियेति भगवत्स्मरणवाचिना तदनुग्रहलब्धमाधुर्यादिगुणयुक्तत्वं च व्यज्यते । एवञ्चैवंविधं स्तोत्रं रचयाम इति चिकीर्षितप्रतिज्ञापि कृता। अस्मिन् पक्षे 'दुर्लभ्यवस्तुनि'='निगमकल्पतरोः फलं भागवतं रसं', 'सुलभतया हस्तलब्धे'='शुकमुखाद् भुवि गलितं', 'जनोऽन्यद् भजतीति यत् सा क्षुद्रतैव'='पिबत भागवतम्', 'एते वयं'='रसिका भावुका' इत्यादिपदानां बिम्बप्रतिबिम्बवदर्थसादृश्यप्रतीतेः श्रीभागवततृतीयश्लोकार्थोऽप्यनेन परामृष्ट इति द्रष्टव्यम् । श्लोकद्वयार्थस्यैकेनोपादानमपि अस्य सङ्ग्रहरूपत्वं द्योतयति । इदं च स्तोत्रं भक्तियोगपरतया सर्वैरादरेण पठनीयमित्यप्यनेनैव सूचितं, भक्तियोगप्राधान्यस्याप्यनेनैव सूच्यमानत्वात् । तथाहि—दुर्लभ्यं वस्तु भक्तियोगाख्यं, तस्मिन् हस्तलब्धे सत्यप्यन्यद् ज्ञानं कर्म वा भजतीति यत्, सा क्षुद्रतैव । अन्यदूहनीयम् । एवं भगवत्कृपापात्रीभूतश्रीनारायणकविवाक्यस्यानेकार्थगम्भीरमहिम्नो महिमेति

---

१. 'या ह' ख. पाठः. २. 'त्सने' ख. पाठः.

दिङ्मात्रं प्रदर्शितामिति । *ननु भक्तियोगपरतया भक्तेरादरणीयमिदामित्युक्तम् । अथ केयं भक्तिर्नाम । उच्यते । उपायपूर्वकं भगवति मनसः स्थिरीकरणं भक्तिः । स च भक्तिरसो विहिताविहितकर्मज्ञानमिश्रादिभेदेन बहुधा । पुनरपि शृङ्गाराद्युपायभेदान्नवधेति बोप्पदेवः । अन्ये त्वेवं भक्तावपि वाच्यमिति वदन्तो भक्तेररसतामाचक्षते । तथाहि — भक्तिर्न रसः, रसलक्षणाभावाद्,

"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥"

इति हि रसलक्षणम् । यथा शृङ्गारादिरसे रत्यादिः स्थायी भावः । नायिकानायकचन्द्रमन्दानिलादयो विभावाः । कटाक्षवीक्षणादयोऽनुभावाः । स्तम्भस्वेदादयः सात्त्विकाः । निर्वेदग्लान्यादयो व्यभिचारिणः । एवंविधविभावादिसंयोगाभावान्न भक्ती रसतामापद्यत इति, मैवम्, अत्रापि रससामग्रीसद्भावात् । केनाप्युपायेन श्रीकृष्णे मनोनिवेशः स्थायी भावः । 'तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेद्' (स्क. ७. अ. १. श्लो. ३१.) इति श्रीभागवतवचनात् । तत्रोपायो नवधा । तदुक्तं बोप्पदेवेन 'भक्तिरसस्यैव हास्यशृङ्गारकरुणरौद्रभयानकबीभत्सशान्ताद्भुतवीररूपेणानुभवाद्' इति, 'व्यासादिभिः कविभिर्वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरित्रस्य नवरसात्मकस्य श्रवणादिना जनितश्चमत्कारो भक्तिरस' इति च । अत एते भगवति प्रयुज्यमाना भक्तिरसतामापद्यन्ते । गोविन्दो गोप्यश्चालम्बनविभावाः । चन्द्रमन्दानिलचरित्रश्रवणादय उद्दीपनविभावाः । कटाक्षवीक्षणस्तम्भस्वेदादयोऽनुभावाः । निर्वेदग्लानिशङ्काधृत्यादयो यथायोगं व्यभिचारिणः । एवं सामग्रीसद्भावेऽपि भक्तेर्बहिष्करणं स्वयं भक्तिरसास्वादबहिरङ्गतामात्रशरणम् । न च वाच्यमसर्वविषयत्वाद् भक्ते रसपदव्यनारोह इति । तथा च श्रोत्रियब्रह्मचार्याद्यविषयतया शृङ्गारादीनामप्यरसतापातादिति सिद्धं भक्ते रसत्वम् । एवंविधभक्त्यनुभवाद् भक्ता अपि नवविधाः ।

"गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ! ॥"
(स्क. ७. अ. १. श्लो. ३०.)

१. 'णश्च । ए' क. पाठः. २. 'भा' ग. पाठः. ३. 'न्द्रातपच' क. पाठः. ४. 'णश्च' पाठः. ५. 'भा' ग. पाठः.

* 'ननु' इत्यारभ्य 'सुगमम्' इत्यन्तं तृतीयश्लोकव्याख्यानमध्ये' उपरिस्थमुपादीयते' इत्येतदन्तं व्यतिक्षिप्तं मुद्रितपुस्तके ।

इति भागवतोक्तेः । एवम्भूतैर्भक्तैरुपास्यं विष्णुरूपमपि पञ्चविधं पुरुषब्रह्मगिरिश-विष्णुनिर्गुणभेदात् । तत्र शुद्धसत्त्वमयं विष्णुरूपमेवोपास्यतममिति बोप्पदेवः । उपासनक्रमं तु वक्ष्यामः । एतत् सर्वं द्वितीयश्लोकसूचितमुपरि चानुसन्दधतां सुगमम् ॥ २ ॥

एवं विषयप्रयोजनप्रदर्शनेन श्रोतॄनभिमुखीकृत्य तेषामुपासनासिद्ध्यै भगवद्रूपं वर्णयन् भगवन्तं स्तौति —

**सत्त्वं यत्तत् पराभ्यामपरिकलनतो निर्मलं तेन तावद्**
**भूतैर्भूतेन्द्रियैस्ते वपुरिति बहुशः श्रूयते व्यासवाक्यम् ।**
**तत् स्वच्छत्वाद् यदच्छादितपरसुखचिद्गर्भनिर्भासरूपं**
**तस्मिन् धन्या रमन्ते श्रुतिमतिमधुरे सुग्रहे विग्रहे ते ॥ ३ ॥**

**सत्त्वमिति** । तत् प्रसिद्धम् । पराभ्यां रजस्तमोभ्याम् । परिकलनम् इतरेतरमेलनं, तदभावोऽपरिकलनं, तेन । निर्मलं शुद्धं सत्त्वं यत्, तेन तावदिति तेनैवोपादानकारणेन । भूतैर्महदादिक्रमेणोत्पन्नैः । भूतेन्द्रियैः पञ्चभूतैरेकादशेन्द्रियैः । एतच्च प्राणादीनामप्युपलक्षणम् । हे भूमन्निति सिंहावलोकितन्यायेनोपरिस्थमुपादीयते । एतैः स्वेच्छया विरचितं ते तव वपुर्लीलाशरीरमित्यस्मिन्नर्थे प्रमाणतया व्यासस्य 'मुनीनामप्यहं व्यास' इति तवात्मत्वेनाभिमतस्य वाक्यम् । बहुशो वारंवारं पुराणेषु श्रूयत इत्यर्थः[1] । वाक्यं च – 'जगृहे पौरुषं रूपम्', 'विशुद्धं सत्त्वमूर्जितम्', 'सत्त्वं विशुद्धं क्षेमाय', 'नारायणकलात्मकम्', 'श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इत्यादि[2] । तद् बहुशः श्रुतं वपुः । स्वच्छत्वात् स्फटिकवदतिनिर्मलतया । अच्छादिता अनुपहिता या परसुखचित् चिदानन्दैकरसं ब्रह्म, सा प्रतिबिम्बतः प्रविष्टा गर्भे यस्य, तदच्छादितपरसुखचिद्गर्भम्, अत एव निर्भासरूपं च । वपुर्विशेषणमेतत् । अयं भावः — शुद्धसत्त्वमयस्य वपुषोऽतिस्वच्छतया तत्प्रविष्टया परानन्दचिदा तन्निर्भास्यांशस्य जाड्यस्य तिरस्कृतत्वात् परसुखचिदेकतामापन्नमिति । तदुक्तममृततरङ्गिण्यां — त्वद्वपुरतिस्वच्छतया स्वस्मिन् प्रतिफलता चिदानन्दैक-

---

१. 'र्थः । ज' ख. पाठः.　　२. 'दि वाक्यम् । त' ख. पाठः.

रसेन ब्रह्मणा तिरस्कृतजाड्यं चिदानन्दैकरसमेव भवतीति। स्वच्छत्वादच्छादित-परसुखचिद्गर्भनिर्भासरूपं तद्वपुर्यदिति सम्बन्धः। तस्मिन्निति 'स वा अयं ब्रह्म महद्भिर्मृग्यम्', 'कृष्णस्तु भगवान् स्वयम्' इत्यादिभिः परचिदभेदेन प्रतिपादिते वपुषीत्यर्थः[1]। धन्याः अभ्युपगतभक्तिमार्गतयेतरमार्गोक्तबहुसाधनपरिश्रमरहिताः[2]। रमन्ते प्रेमलक्षणां भक्तिं कुर्वन्तीत्यर्थः। अत्र हेतुमाह — श्रुतिमतिमधुर इति। माधुर्ययुक्तत्वाच्छ्रवणस्मरणादिषु सकलेन्द्रियाह्लादक इत्यर्थः। अत एव सुग्रहे सुखग्राह्ये विग्रहे मूर्तौ ॥ ३ ॥

एवं भगवतः शुद्धसत्त्वमयीं मूर्तिमुपपाद्य तस्या निष्कलब्रह्माभेदमुपपादयति—

**निष्कम्पे नित्यपूर्णे निरवधिपरमानन्दपीयूषरूपे**
**निर्लीनानेकमुक्तावलिसुभगतमे निर्मलब्रह्मसिन्धौ।**
**कल्लोलोल्लासतुल्यं खलु विमलतरं सत्त्वमाहुस्तदात्मा**
**कस्मान्नो निष्कलस्त्वं सकल इति वचस्त्वत्कलास्वेव भूमन्! ॥ ४ ॥**

**निष्कम्प** इति। तत्र ब्रह्मणः सिन्धुसाम्यमापादयति चतुर्भिर्विशेषणैः। निष्कम्पे निर्विकारे, अन्यत्र[3] अक्षोभ्ये गम्भीरे इत्यर्थः। नित्यपूर्णे अखण्डे, अन्यत्र वर्षासु प्रभूतनार्[4]नानदीजलौघे सति ग्रीष्मे तस्मिन्नसति चैकरूपे। निरवधिः कालतो देशत उपाधितश्चापरिच्छिन्नः परमानन्द एव पीयूषं मुक्तैरास्वादनीयत्वात्, तद्रूपे। अन्यत्र निरवधिः परमानन्दः स्रक्चन्दनवनितादिसुखातिशायि सुखं यस्मात्, तस्य पीयूषस्य रूपं प्रकाश उत्पत्तिर्यस्मात्, स तथा। निर्लीनानामपुनरावृत्तिं गतानामनेकेषां मुक्तानां ब्रह्मसायुज्यं प्राप्तानामावलिः समूहः, तेन सुभगतमे अतिमनोहरे। अन्येषामपि मुमुक्षाजनक इति भावः। अन्यत्र मुक्तावलिभिः मुक्तारत्ननिकरैः सुभगतमे शोभिते[5]। निर्मलब्रह्मसिन्धाविति। ब्रह्मणो निर्मलत्वं मायातत्कार्योपरागराहित्यम्। सिन्धौ त्वनाविलत्वम्। एवम्भूते ब्रह्मसिन्धौ यः कल्लोलोल्लासः कल्लोलानां तरङ्गाणामुल्लासस्तेन[6] तुल्यम्। विमलतरं शुद्धं सत्त्वमित्यर्थः। अयमभिप्रायः[7]—

---

१. 'र्थः। अ' ख. पाठः. २. 'ता धन्या र' ख. पाठः. ३. 'त्र सिन्धौ अ' क. पाठः. ४. 'नाज' ख. पाठः. ५. 'त इत्यर्थः। नि' क. पाठः. ६. स्तत्तु' क. पाठः. ७. 'यः त' ख. पाठः.

यथा तरङ्गाणां कल्लोलादिशब्दवाच्यत्वव्यतिरेकेण सिन्धोर्भेदं नोपलभामहे, एवं शुद्धसत्त्वस्यापि ब्रह्मणोऽभेद इति । अत्र प्रमाणमाह — आहुरिति । आचार्या इति शेषः । ते ह्याहुः — अथवा चिदानन्दजलनिधेरेकोऽभिनवस्तरङ्ग एव सत्त्वम् इत्यादि । नन्वेवं शुद्धसत्त्वस्य ब्रह्मानन्यत्वे भगवन्मूर्तेः किमायातं, तत्राह — तदात्मेति । तत् सत्त्वमेवात्मा श्रीमूर्त्तिर्यस्य सः । त्वं कस्मान्नो निष्कलः निष्कलं ब्रह्मैव त्वमित्युक्तिर्युक्तिमतीत्यर्थः । नन्वेवं तर्हि सकलमूर्तिशब्दोऽनन्यगतेर्निरालम्बः स्यादित्याशङ्क्याह — सकल इति । त्वत्कलासु अंशावतारेष्वेव सकलशब्दः प्रयुज्यत इति शेषः । हे भूमन्! परिपूर्ण! त्वं तु निष्कलब्रह्मैवेत्यर्थः ॥ ४ ॥

एवं भगवन्मूर्तेः स्वरूपोत्पत्तिं विमृश्य सम्प्रति तस्या उत्पत्तिं विमृशति—

**निर्व्यापारोऽपि निष्कारणमज! भजसे यत् क्रियामीक्षणाख्यां**
**तेनैवोदेति लीना प्रकृतिरसतिकल्पापि कल्पादिकाले ।**
**तस्याः संशुद्धमंशं कमपि तमतिरोधायकं सत्त्वरूपं**
**स त्वं धृत्वा दधासि स्वमहिमविभवाकुण्ठ! वैकुण्ठ! रूपम् ॥५॥**

**निर्व्यापार** इति । हे अज! विष्णो! त्वं निर्व्यापारो निष्क्रियः सन्नपि ईक्षणाख्यां मायाप्रेरणात्मिकां क्रियां भजसे अङ्गीकरोषि । यथा अयस्कान्तमणिर्निष्क्रियोऽपि सन्निधिमात्रेण लोहधातुमाकर्षति, तद्वदित्यर्थः । निष्कारणं निर्गतं कारणं प्रयोजनं यस्मादिति क्रियाविशेषणम् । तव मायाप्रेरणे कारणमस्मदादिभिर्न ज्ञातव्यमिति भावः । एवं त्वमीक्षणाख्यां क्रियां भजस इति यत्, तेनैव कारणेन लीना द्विपरार्धावसाने त्वयि लयं प्राप्ता प्रकृतिर्माया उदेति प्रकाशते । अत्र लीनोदेतिशब्दौ प्रकृतेरुत्पत्तिविनाशाभावं सूचयत इति न तस्या अनादित्वहानिः । कदोदेतीत्यत आह— कल्पादिकाल इति । कल्पानां ब्रह्मणो दिनानामादिकाले आद्यदिनारम्भकाले ब्रह्मप्रलयावसान इत्यर्थः । न तु कल्पस्यादिकाले, तदा प्रकृतिलयोदयाभावात् । मायां विशिनष्टि — असतिकल्पेति । प्रायेणासती सदसत्त्वाभ्यामनिर्वचनीयेत्यर्थः । हे वैकुण्ठ! विकुण्ठनिलय! सः मायाप्रेरकस्त्वं तस्या मायायाः तं पूर्वोक्तं सत्त्वरूपं कमप्यंशं धृत्वा उद्धृत्य रूपं लीलाविग्रहं दधासि भक्तानुग्रहाय गृह्णासि । ननु विग्रहवांश्चेत् संसारप्रसङ्ग इत्याशङ्क्याह— अतिरोधायकमिति । तत्र हेतुमाह — संशुद्धमिति । अयं भावः — शुद्धसत्त्वरूपस्य माया-

---

१. 'मू । न' ख. पाठः.

शस्यातिस्वच्छतया चैतन्यपरिच्छेदकत्वाभावात् तन्मये लीलाविग्रहेऽहंममाभिमानासम्भवात् तन्निबन्धनस्य संसारस्यापि भगवत्यसम्भव एवेति। ननु शरीरसम्बन्धे समानेऽप्येकः संसरत्यन्यः संसारयतीति कुत एतद् वैषम्यमिति शङ्कां परिहरन् भगवन्तं सम्बोधयति – स्वमहिमाविभवाकुण्ठेति। स्वस्य महिमा योगैश्वर्यं, स एव विभवः शक्तिः, तेनाकुण्ठः अप्रतिहतचिच्छक्तिरित्यर्थः। अयमाशयः— जीवो मायापरतन्त्रः संसरति, ईश्वरस्तु स्वाधीनया माययाङ्गीकृतलीलाविग्रहः सन् सर्गादिलीलाः करोतीति महदिदं वैषम्यम् ॥ ५ ॥

सम्प्रति भगवन्मूर्तेः सौन्दर्यं वर्णयति द्वाभ्यां—

**तत्ते प्रत्यग्रधाराधरललितकलायावलीकेलिकारं**
**लावण्यस्यैकसारं सुकृतिजनदृशां पूर्णपुण्यावतारम् ।**
**लक्ष्मीनिश्शङ्कलीलानिलयनममृतस्यन्दसन्दोहमन्तः**
**सिञ्चत् सञ्चिन्तकानां वपुरनुकलये मारुतागारनाथ! ॥ ६ ॥**

तदिति। हे मारुतागारनाथ! ते तत् शुद्धसत्त्वमयं वपुः अनुकलये स्मरामीत्यर्थः। प्रत्यग्रेति सजलजलधरवत् प्रतिनवकलायकुसुमवच्चातिमनोहरं, श्यामलमित्यर्थः। लावण्यस्यैकसारमिति लावण्यद्रव्यस्य केवलसारांशेनैव विरचितमित्यर्थः। सुकृतिजनदृशां पूर्णपुण्यावतारमिति। अत्र फलाभिसन्धिरहितानि विहितसकलकर्माणि सुकृतान्युच्यन्ते, तदनुष्ठातारः सुकृतिजनाः, तेषां दृशां पूर्णस्य निश्शेषस्य पुण्यस्यावतारः (तं), सुकृतिजनानां चक्षुरिन्द्रियैरनुभवनीयं[३] पुण्यपूरमेव भगवन्मूर्त्याकारेण परिणतमित्यर्थः। अपिच लक्ष्म्याः प्रेमप्रतिपत्तिविस्रम्भाद्येकविषयतया निश्शङ्कलीलानिलयनम्। किञ्च सञ्चिन्तकानाम् उपासकानाम् अन्तः हृदये अमृतस्यन्दसन्दोहं ब्रह्मानन्दामृतद्रवझरीं सिञ्चद्, उपासकानां हृदयं ब्रह्मानन्दामृतद्रवेणाप्लाव्य सकलसन्तापं शमयतीत्यर्थः ॥ ६ ॥

**कष्टा ते सृष्टिचेष्टा बहुतरभवखेदावहा जीवभाजा-**
**मित्येवं पूर्वमालोचितमजित! मया नैवमद्याभिजाने ।**

१. 'लां क' ख. पाठः. २. 'लम्। ला' ख. पाठः. ३. 'यपु' क. पाठः.

**नो चेज्जीवाः कथं वा मधुरतरमिदं त्वद्वपुश्चिद्रसार्द्रं**
**नेत्रैः श्रोत्रैश्च पीत्वा परमरससुधाम्भोधिपूरे रमेरन् ॥ ७ ॥**

**कष्टेति** । हे अजित! मायापारतन्त्र्यरहित! ते तव सृष्टिचेष्टा कष्टा । कुत इत्यत आह — जीवभाजां बहुतरभवखेदावहेति । अत्र जीवशब्देन लिङ्गशरीरमुच्यते, तद् भजन्तीति जीवभाजो जीवा एव, तेषाम् । भवखेदा जननमरणदुःखानि, तानावहतीति तथा । इत्येवं मया मूढमतिना पूर्वमालोचितं चिन्तितम् । तत्तु तथा नेत्याह — नैवमद्याभिजान इति । इदानीं त्वद्रूपास्वादनव्यापृते मनसि महानुपकार एवास्माकमिति निश्चिनोमीत्यर्थः । निश्चितमाह — नो चेदिति । यदि त्वं त्वय्यनुशयितान् जीवान् तद्भोग्यं प्रपञ्चं च न सृजसि, तर्हि जीवाः कथं केन प्रकारेण चिद्रसार्द्रं चिदानन्दामृतद्रवेणान्तर्बहिश्च व्याप्तं त्वद्वपुः नेत्रैः श्रोत्रैश्च पीत्वा तद्दर्शनतदुपासनतत्कथाश्रवणद्वारेण हृदये कृत्वा परमरससुधाम्भोधिपूरे परमानन्दामृताम्भोधौ रमेरन् उन्मज्जननिमज्जनाभ्युक्षणास्वादनादिक्रियां कुर्युरित्यर्थः ॥ ७ ॥

एवं भगवतः सौन्दर्य[2]गुणस्य लोकोत्तरत्वमुक्त्वा फलदातृत्वस्यापि लोकोत्तरत्वं वर्णयति —

***नम्राणां सन्निधत्ते सततमपि पुरस्तैरनभ्यर्थितान-**
**प्यर्थान् कामानजस्रं वितरति परमानन्दसान्द्रां गतिं च ।**
**इत्थं निश्शेषलभ्यो निरवधिकफलः पारिजातो हरे! त्वं**
**क्षुद्रं तं शक्रवाटीद्रुममभिलषति व्यर्थमर्थिव्रजोऽयम् ॥ ८ ॥**

**नम्राणामिति** । लोके हि पारिजातोऽभीष्टफल[3]द इति भगवतस्तदतिशायिगुणानाह — हे हरे! त्वं पारिजातः त्वदात्मकः कल्पवृक्षः नम्राणां नमस्कारमात्रेणापि भजतां पुरः पुरतः सततमपि सन्निधत्ते वरदित्सया प्रादुर्भवति । अन्यस्[4]तु कल्पवृक्षः स्वयं न सन्निधत्ते, न च नमस्कारमात्रेण, न च सततं[5], किन्तु

१. 'जः, ते' ख. पाठः.  २. 'र्यस्य' ख. पाठः.  ३. 'लं ददाति भ' ख. पाठः.
४. 'स्तु स्व' ख. पाठः.  ५. 'तं स्व' ख. पाठः.

* ख-पुस्तके तु 'कारुण्याद्' इत्यादिनवमश्लोकोऽष्टमत्वेन, 'नम्राणाम्' इत्याद्यष्टमश्लोको नवमत्वेन च व्याख्यायते ।

स्वकर्मभिर्देवान् प्रसाद्य स्वर्गं गतानां पुरत एव सन्निधत्ते। किञ्च, अजस्रम् इहामुत्रं च तैर्भक्तैः अनभ्यर्थितान् कामान् अभीष्टान् अर्थान् पुरुषार्थान् वितरति ददाति। अन्यस्त्वनभ्यार्थितान् न ददाति, न च सर्वान्[2] कामान्, न चाजस्रं, किन्तु अमुत्रैवाभ्यर्थितेषु कांश्चिदेवार्थान् ददाति। अपिच अकामनया ये सेवन्ते, तेभ्यः परमानन्दसान्द्रां गतिं मोक्षं च ददाति। अन्यस्तु सकामेभ्योऽकामेभ्यो[3] वा मोक्षं न ददाति। एवं निश्शेषलभ्यः सकलजीवनिवहैः प्राप्यस्त्वदात्मकः पारिजातः निरवधिकफलः अपरिच्छिन्नमोक्षाख्यफलप्रदः। अन्यस्तु परिच्छिन्नफलप्रदः। एवं त्वदात्मके पारिजाते तिष्ठति अयमर्थिव्रजः कामिसमूहः व्यर्थं वृथैव क्षुद्रम् असारं तं मुधा पारिजातशब्दवाच्यं शक्रवाटीद्रुमम् इन्द्रोद्यानवृक्षम् अभिलषति बहुक्लेशेन प्राप्तुमिच्छतीत्यर्थः ॥ ८ ॥

ननु ब्रह्मरुद्रादयोऽपीश्वरत्वसाम्याद् भक्ताभीष्टफलदाः। अतस्तेऽपि सेव्या इत्याशङ्क्य भगवतस्तेभ्यो विशेषमाह —

**कारुण्यात् काममन्यं ददति खलु परे स्वात्मदस्त्वं विशेषा-**
**दैश्वर्यादीशतेऽन्ये जगति पर[4]जने स्वात्मनोऽपीश्वरस्त्वम्।**
**त्वय्युच्चैरारमन्ति प्रतिपदमधुरे चेतनाः स्फीतभाग्या-**
**स्त्वं चात्माराम एवेत्यतुलगुणगणाधार! शौरे! नमस्ते ॥ ९ ॥**

**कारुण्यादि**ति। परे ब्रह्मादयः। कारुण्याद् भक्तवत्सलतया। अन्यं मोक्षाव्यतिरिक्तं कामं वरं ददति। त्वं विशेषाद् विशिष्टाद् ब्रह्माद्यतिशयितात् कारुण्यात् स्वात्मदः स्वात्मानं स्वरूपं मोक्षमपि ददासीत्यर्थः। किञ्च, अन्ये ब्रह्मादयः ऐश्वर्याद् जगति अस्मिन् प्रपञ्चे परजने स्वव्यतिरिक्तेषु स्थिरचरेष्वेव ईशते निग्रहीतुमनुग्रहीतुं वा शक्ता भवन्ति। त्वं तु स्वात्मनः स्वरूपस्य ब्रह्मणोऽपीश्वरः। स्वात्मानमेव जीवरूपेण संसारार्णवे निक्षिप्य निग्रहीतुं, तत्समकालमेव स्वानन्दानुभवपदे (सं)स्थाप्यानुग्रहीतुमपि शक्तो भवसीत्यर्थः। ननु सेवकानां स्वात्मदाने किं फलमित्याशङ्क्य भगवतः स्वस्यैव फलरूपतां दर्शयति — त्वयीति। त्वयि[5] ब्रह्मणि। स्फी-

---

१. 'त्रापि तै' क. पाठः. २. 'न् न' ख. पाठः. ३. 'भ्य एव। न मोक्षं द' ख. पाठः. ४. 'रि' क. पाठः. ५. 'यि स्फी' क. पाठः.

तभाग्याः जन्मजन्मान्तरार्जितपुण्यसञ्चयेनाधिगतभक्तिज्ञानमार्गाः चेतना जीवाः उच्चैरारमन्ति अतिशयेन मोदन्ते । त्वं चात्माराम एव[1], चस्त्वर्थः, त्वं तु त्वय्येव रमसे, तव चान्येषां च त्वमेव निरतिशयसुखभूत इत्यर्थः । इति अतो हेतोः अतुलानां लोकोत्तराणां गुणानामाधार! आश्रयभूत! हे शौरे! श्रीकृष्ण! ते तुभ्यं नमः नमस्करोमीत्यर्थः ॥ ९ ॥

षड्गुणाश्रयताया अप्यसाधारणतामाह—

**ऐश्वर्यं शङ्करादीश्वरविनियमनं विश्वतेजोहराणां**
**तेजस्संहारि वीर्यं विमलमपि यशो निस्पृहैश्चोपगीतम् ।**
**अङ्गासङ्गा सदा श्रीरखिलविदसि न क्वापि ते सङ्गवार्ता**
**तद् वातागारवासिन्! मुरहर! भगवच्छब्दमुख्याश्रयोऽसि ॥ १० ॥**

**ऐश्वर्यमिति**। हे वातागारवासिन्! मुरहर! ते तवैश्वर्यं शङ्करादीनामीश्वराणां विनियमनं तत्तदधिकारप्रवर्तकम्। किञ्च, तव वीर्यं विश्वेषां सर्वेषां तेजः पराक्रमं हरन्तीति विश्वतेजोहराः श्रीशङ्करादयः, तेषां तेजः प्रभावं संहर्तुं शीलमस्येति तथा । वक्ष्यति च 'मुहुस्तावच्छक्रम्' (दश.८२.श्लो.९) इत्यादि । तव यशोऽपि विमलं पापशोधकम्। निस्पृहैर्मुक्तैरप्युपगीतं, त्वच्चरिताकृष्टचेतस्तया तैर्वर्णितमित्यर्थः। श्रीश्च सदा अङ्गासङ्गा तव वक्षःस्थलमाश्रित्यैवास्ते । अखिलविदसीति । अखिलं स्वमात्मानं स्वमायां तत्कार्यं च वेत्तीत्यखिलविदसि[2] त्वम् । अन्ये त्वां तत्त्वतो न जानन्तीति भावः। क्वापि विषये[3]। ते सङ्गस्य वार्तापि कथापि न श्रूयत इत्यर्थः । तत् तस्मात्, यस्मादैश्वर्ययशःश्रीवीर्यज्ञानासङ्गतानां भगवच्छब्दवाच्यानां त्वय्यतिशयेन वृत्तिस्तस्मादित्यर्थः । भगवच्छब्दस्य मुख्याश्रयो वाच्यार्थो भवसि, अन्येषु भगवच्छब्दस्य लाक्षणिकी वृत्तिरित्यर्थः ॥ १० ॥

**इति भगवन्महिमानुवर्णनं प्रथमं दशकम्**

---

१. 'वेत्यर्थः' क. पाठः.　२. 'सि । अ' ख. पाठः.　३. 'येषु ते' क. पाठः.

एवं भगवद्गुणप्रस्तावेन झटिति हृदयदेशसमुदितपरचिद्रसार्द्रभगवद्रूपार्द्रहृद[1]-यतया रोमाञ्चितशरीरस्य मौलौ बद्धाञ्जलेर्बाष्पसंरुद्धवाक्प्रसरस्य कवेर्मुखतः सगद्गदानि कानिचित् पदानि निर्गच्छन्ति —

**सूर्यस्पर्धिकिरीटमूर्ध्वतिलकप्रोद्भासिफालान्तरं**
**कारुण्याकुलनेत्रमार्द्रहसितोल्लासं सुनासापुटम् ।**
**गण्डोद्यन्मकराभकुण्डलयुगं कण्ठोज्ज्वलत्कौस्तुभं**
**त्वद्रूपं वनमाल्यहारपटलश्रीवत्सदीप्रं भजे ॥ १ ॥**

**सूर्यस्पर्धीति** । एकीकृतानेकादित्यबिम्बवदत्युज्ज्वलकनककिरीटयुक्तम् । ऊर्ध्वतिलकेति । ऊर्ध्वाग्रविन्यस्तकस्तूरीतिलकोल्लसितफालदेशम् । कारुण्याकुलनेत्रं भक्तजनविषयकरुणा[2]रसार्द्रतया मुहुरुन्मीलननिमीलनव्यापृतनयननलिनयुगलम् । आर्द्रहसितोल्लासं प्रेमार्द्रतयात्युल्लसितमन्दस्मितयुक्तम् । सुनासापुटं सुवर्णतिलकुसुमवदतिसुन्दरश्रीनासिकोदरयुक्तम् । गण्डोद्यन्मकराभकुण्डलयुगं गण्डमण्डलावलम्बमानमकररेखाङ्कितमणिकुण्डलयुग्मम् । कण्ठोज्ज्वलत्कौस्तुभं श्रीमत्कण्ठदेशभा[3]समानकौस्तुभरत्नम् । वनमाल्यहारपटलश्रीवत्सदीप्रं वनमालामुक्ताहारश्रीवत्सैः दीप्रं दीपनशीलम् । त्वद्रूपं भजे[4] सम्प्रति स्मरामीत्यर्थः ॥ १ ॥

**केयूराङ्गदकङ्कणोत्तममहारत्नाङ्गुलीयाङ्कित-**
**श्रीमद्बाहुचतुष्कसङ्गतगदाशङ्खारिपङ्केरुहाम् ।**
**काञ्चित् काञ्चनकाञ्चिलाञ्छितलसत्पीताम्बरालम्बिनी-**
**मालम्बे विमलाम्बुजद्युतिपदां मूर्तिं तवार्तिच्छिदम् ॥ २ ॥**

**केयूरेति** । अंसावलम्बिकेयूराख्याभरणविशेषाणां तदधस्ताद् धृतानामङ्गदानां प्रकोष्ठस्थानां कङ्कणानां शिञ्जद्वलयानां* चोत्तमैः श्रेष्ठैः प्रत्युप्तानि महान्ति

---

१. 'द्रीभूतहृ' क. पाठः. २. 'ण' ख. पाठः. ३. 'शोभमा' ख. पाठः. ४. 'जे ॥' क. पाठः.

---

* यस्मान्निर्धार्यते, यश्च निर्धार्यते, यश्च निर्धारणहेतुः, एतत्त्रितयस्यासान्निधानाद् 'न निर्धारण' इति न निषेध इति व्याख्यातुराशयः.

पराध्यानि रत्नानि येषु, तैरङ्गुलीयै(श्चा)ङ्कितेनालङ्कृतेन श्रीमता शोभमानेनाजानुलम्बिना पीवरेण बाहुचतुष्केण सङ्गतानि गृहीतानि गदाशङ्खारिपङ्केरुहाणि यस्यां सा तथा, ताम् । काञ्चनकाञ्चिलाञ्छितेति । काञ्चनकाञ्च्या उपरिविन्यस्तया लाञ्छितं सञ्जातपरभागं स्वतः समुल्लसत्पीताम्बरमालम्बितुं परिधातुं शीलमस्या इति तथा, ताम् । विमलाम्बुजद्युतिपदां प्रतिनवारुणसरोजवद् विराजमानपदयुगलाम् । भक्तानां हृदि सन्निविष्टा सती तेषामाध्यात्मिकाद्यार्तिं पीडां छिनत्तीत्यार्तिच्छित्, ताम् । काञ्चिद् ब्रह्मादिभिरप्यशक्यवर्णनसौभाग्याम् । तव मूर्तिमालम्बे आश्रयामि, ऊर्ध्वमुखीकृतोन्निद्रहृदयकमलकर्णिकायां न्यस्योपास्महे इत्यर्थः ॥ २ ॥

सम्प्रति भगवन्मूर्तेः सौभाग्यं वर्णयति —

**यत् त्रैलोक्यमहीयसोऽपि महितं सम्मोहनं मोहनात्**
**कान्तं कान्तिनिधानतोऽपि मधुरं माधुर्यधुर्यादपि ।**
**सौन्दर्योत्तरतोऽपि सुन्दरतरं त्वद्रूपमाश्चर्यतो-**
**ऽप्याश्चर्यं भुवने न कस्य कुतुकं पुष्णाति विष्णो! विभो! ॥ ३ ॥**

**यदिति** । त्रैलोक्येऽस्मिन् जगति यद् महीयः अतिशयेन महत् पूजितम् उत्कृष्टं वस्तु, तस्मादपि महितम् अत्युत्कृष्टं यत् । यच्च त्रैलोक्ये मोहनं वस्तु, तस्मादप्यतिमोहनमाह्लादकम् । यच्च कान्तिनिधानतः शोभापात्रीभूताद् वस्तुनोऽपि कान्तमतिशोभनं सकलेन्द्रियाकर्षणसिद्धौषधम् । यच्च माधुर्यधुर्याद् माधुर्यकार्यसमर्थाद् वस्तुनोऽपि मधुरमतिमाधुर्ययुक्तं सन्तापशान्तिकरम् । यच्च सौन्दर्येणोत्तरमुत्कृष्टमतिसुन्दरं च यद्वस्तु, तस्मादपि सुन्दरतरम् । यच्चाश्चर्यम् अद्भुतरसालम्बनभूतं वस्तु, तस्मादप्याश्चर्यतरं च । हे विभो! संसारार्णवोत्तारणसमर्थ! हे विष्णो! तादृशं त्वद्रूपं भुवने कस्य कुतुकं न पुष्णाति, बद्धमुक्तमुमुक्षुजनानामप्यतिशयेन श्रवणस्मरणाद्यौत्सुक्यं ददात्येवेत्यर्थः ॥ ३ ॥

**तत्तादृङ्मधुरात्मकं तव वपुः सम्प्राप्य सम्पन्मयी**
**सा देवी परमोत्सुका चिरतरं नास्ते स्वभक्तेष्वपि ।**
**तेनास्या बत कष्टमच्युत! विभो! त्वद्रूपमानोज्ञक-**
**प्रेमस्थैर्यमयादचापलबलाच्चापल्यवार्तोदभूत् ॥ ४ ॥**

---

१. 'ञ्च्या ला' ख. पाठः. २. 'ति । उपरि विन्यस्तया काञ्चनमय्या काञ्च्या ला' क.पाठः. ३. 'ष्टं च' ख. पाठः ४. 'च यत् । हे' क. पाठः.

तदिति। तदेव तादृक् तत्सदृशं यस्य तत् तत्तादृग्, अनुपममित्यर्थः। तादृशमाधुर्ययुक्त आत्मा स्वरूपं यस्य तत् तव वपुः सम्प्राप्य वक्षस्यधिवासं लब्ध्वा सा देवी महालक्ष्मीः स्वभक्तेष्वपि सम्पन्मयी धनधान्यादिरूपिणी भूत्वा चिरतरं चिरकालं नास्ते चञ्चलैव भवति। अत्र हेतुमाह—परमोत्सुकेति, त्वद्वपुः-सौभाग्यातिशयेनापहृतहृदयतयेतरत्र गन्तुमशक्यत्वादित्यर्थः। तेन यस्मादेवं तस्माद् हे अच्युत! विभो! अस्यास्तव महिष्याः त्वद्रूपमानोज्ञकप्रेमस्थैर्यमयात् त्वद्रूपस्य मानोज्ञके सौभाग्ये यत् प्रेम्णः स्थैर्यं तन्मयात् तद्रूपाद् अचापलस्य चापल्याभावस्य बलादेव चापल्यवार्ता चपलेयमिति[१] वार्ता दुष्कीर्तिरुदभूद् उद्भूता। कष्टं बतेति खेदे। गुण एव दोषहेतुर्जात इति खेदहेतुः। किञ्च[२], त्वत्सौभाग्याति-शयेनोद्भूता त्वत्प्रियतमाया दुष्कीर्तिः त्वामपि स्पृशतीति मम खेद इति भावः॥

ननु अस्याः सेवकजनसेवाकादाचित्कतया चापल्यं जातं, किमत्र मया कर्त-व्यमित्याशङ्कां परिहरति—

> लक्ष्मीस्तावकरामणीयकहृतैवेयं परेष्वस्थिरे-
> त्यस्मिन्नन्यदपि प्रमाणमधुना वक्ष्यामि लक्ष्मीपते!।
> ये त्वद्ध्यानगुणानुकीर्तनरसासक्ता हि भक्ता जना-
> स्तेष्वेषा वसति स्थिरैव दयितप्रस्तावदत्तादरा॥ ९॥

लक्ष्मीरिति। इयं लक्ष्मीः तावकं[३] त्वदीयं यद् रामणीयकं सौभाग्यं, तेन हृतै-वापहृतहृदयतयैव परेषु त्वदन्येषु स्वभक्तेष्वप्यस्थिरा चपलेत्यस्मिन्नर्थे नैतिह्यमात्रं प्रमाणं, किन्तु अन्यत् प्रमाणमनुमानमप्यधुना वक्ष्यामि[४]। पूर्वं लक्ष्म्या उद्भूतया चा-पल्यवार्तया त्वत्सौभाग्यापहृततयेयं परेष्वस्थिरेत्ययमर्थोऽनुमितः, तत्र च त्वया सेवकजनसेवाकादाचित्कत्वमुपाधिः शङ्कितः, अतोऽन्यदनुमानान्तरं वक्ष्यामीत्यर्थः। प्रयोगश्च—लक्ष्मीस्त्वत्सौभाग्यापहृततया परेष्वस्थिरा, त्वद्ध्यानगुणानुकीर्तनरसास-क्तेषु त्वद्भक्तेषु प्रस्तुतत्वच्चरितदत्तादरतया स्थिरवासत्वाद्, या एवं, ता एवं, यथा त्वद्ध्यानगुणानुकीर्तनरसासक्तेषु त्वद्भक्तेषु दयितप्रस्तावदत्तादरतया स्थिरवासा गोप्यः त्वत्सौभाग्यापहृत[५]हृदयतया परेषु स्वभर्तृष्वप्यस्थिरा इति। श्लोकश्च व्या-ख्यातप्रायः॥ ९॥

१. 'ति दु' क. पाठः. २. 'ञ्च, ल' क. पाठः. ३. 'केन त्वदीयेन रामणी-यकेन सौभाग्येन हृ' ख. पाठः. ४. 'मि। प्रयो' क. पाठः. ५. 'तत' क. पाठः.

एवं त्रयोदशभिः श्लोकैरध्यायत्रयोक्तमुपास्यं भगवद्रूपं वर्णितम् । सम्प्रति सेवासाधनस्य भगवद्भक्तेरुत्पत्तिं दर्शयति—

**एवम्भूतमनोज्ञतानवसुधानिष्यन्दसन्दोहनं**
**त्वद्रूपं परचिद्रसायनमयं चेतोहरं शृण्वताम् ।**
**सद्यः प्रेरयते मतिं मदयते रोमाञ्चयत्यङ्गकं**
**व्यासिञ्चत्यपि शीतबाष्पविसरैरानन्दमूर्च्छोद्भवैः ॥ ६ ॥**

**एवमिति**। एवम्भूता पूर्वोक्ता या मनोज्ञता सौभाग्यं, सैव नवसुधानिष्यन्दः प्रतिनवमधुद्रवः, तस्य सन्दोहनं वर्षकं परचिद्रसायनमयं परब्रह्ममयं चेतोहरं स्मरतां पुनःपुनः स्मारकं त्वद्रूपं शृण्वतामिति । अयमभिप्रायः— यदृच्छया त्वत्कथायां जातश्रद्धस्य पुंसः कथाप्रसङ्गे सति श्रोत्रद्वारा त्वद्रूपं हृदयदेशमागत्यास्य सकलसन्तापं शमयतीति । तत्प्रकारमाह—सद्य इति । सद्यो झटिति मतिं प्रेरयते आकर्षति; विषयेभ्यो मतिं बलादाकृष्य स्वस्मिन् सन्निधापयति । मदयते आनन्दविवशतामापादयति । किञ्च, अङ्गकम् अङ्गं रोमाञ्चयति । अपिच, आनन्दमूर्छोद्भवैः त्वद्रूपानुभवानन्दस्य मूर्छा वृद्धिः, तत्सकाशादुद्भवो येषां तैः शीतैर्बाष्पविसरैः अश्रुप्रसरैर्व्यासिञ्चति । अनेन चेश्वरे प्रेमप्रकर्षणाहेतुकेन सकलेन्द्रियाणां वृत्तिः प्रेमलक्षणा भक्तिः, सा च त्वत्कथाश्रवणनामकीर्तनादिलक्षणया साधनभक्त्योत्पद्यत इत्यप्युक्तं भवति ॥ ६ ॥

अनन्तरं भक्तेरुत्कर्षं वर्णयति[1] चतुर्भिः—

**एवम्भूततया हि भक्त्यभिहितो योगः स योगद्वयात्**
**कर्मज्ञानमयाद् भृशोत्तमतरो योगीश्वरैर्गीयते ।**
**सौन्दर्यैकरसात्मके त्वयि खलु प्रेमप्रकर्षात्मिका**
**भक्तिर्निःश्रममेव विश्वपुरुषैर्लभ्या रमावल्लभ ! ॥ ७ ॥**

**एवमिति**। स प्रह्लादादिभिरप्यङ्गीकृतः भक्तिरित्यभिहितो योगो मोक्षोपायः एवम्भूततया उक्तप्रकारतयेति। यः कथाश्रवणादिनायत्नेनोत्पद्यते, उत्पन्ने सति च(?) हृदयमानन्दयति, तादृशतयेत्यर्थः । कर्मज्ञानमयात् कर्ममयाद् ज्ञानमयाच्च योग-

१. 'ति। ए' क. पाठः, 'ति एवम्भूततयेति च' ख. पाठः.

द्रुयाद् भृशम् आतिशयेन उत्तमतरः अत्युत्कृष्टः। अत्र प्रमाणमाह — योगीश्वरैरिति, व्यासनारदादिभिः पुराणेषु गीयते वर्ण्यते इत्यर्थः। किञ्च, हे रमावल्लभ! त्वयि प्रेम्णो यः प्रकर्षोऽतिशयः, तदात्मिका तत्स्वरूपा भक्तिः निःश्रमम् अनायासं यथा भवति तथा विश्वपुरुषैः सकलजनैः लभ्या खलु, नात्र सन्देह इत्यर्थः। तत्र हेतुमाह – सौन्दर्यैकरसात्मक इति। सौन्दर्यमेकमेव रस आत्मा स्वरूपं यस्य स तथा, तस्मिन्नित्यर्थः ॥ ७ ॥

**निष्कामं नियतस्वधर्मचरणं यत् कर्मयोगाभिधं**
**तद् दूरेत्यफलं यदौपनिषदज्ञानोपलभ्यं पुनः।**
**तत् त्वव्यक्ततया सुदुर्गमतरं चित्तस्य तस्माद् विभो!**
**त्वत्प्रेमात्मकभक्तिरेव सततं स्वादीयसी श्रेयसी ॥ ८ ॥**

**निष्काममिति**। कर्मयोग इत्यभिधा नाम यस्य, तत् कर्मयोगाभिधम्। निर्गतः कामः फलाभिसन्धिर्यस्मात् तन्निष्कामं, तादृशम्। नियतस्य नित्यनैमित्तिकादेः स्वधर्मस्य विहितस्य चरणम् अनुष्ठानं यत्, तद् दूरेत्यफलं दूरेत्यं दूरभवं फलं यस्य, कालान्तरे फलप्रदम्। औपनिषदम् उपनिषत्प्रतिपाद्यं ब्रह्म, तस्य ज्ञानेनोपलभ्यं मोक्षाख्यं फलं यत्, तत् पुनरव्यक्ततया करणागोचरतया चित्तस्य सुदुर्गमतरं कथञ्चनापि प्राप्तुमशक्यं, निरस्तसमस्तैषणानां संन्यस्तसमस्तकर्मणामेव तत्राधिकारात्। हे विभो! कर्मज्ञानभक्तिमार्गनिष्ठानामप्यभीष्टफलप्रदानसमर्थ! तस्मात् त्वयि प्रेमात्मिका भक्तिरेव सततम् उत्पत्तौ उत्पन्नायां फलप्राप्तौ च स्वादीयसी अतिशयेनास्वादनीया श्रेयसी ब्रह्मादिभिरपि प्रशस्यतरा चेत्यर्थः ॥ ८ ॥

**अत्यायासकराणि कर्मपटलान्याचर्य निर्यन्मला**
**बोधे भक्तिपथेऽथवाप्युचिततामायान्ति किं तावता।**
**क्लिष्ट्वा तर्कपथे परं तव वपुर्ब्रह्माख्यमन्ये पुन-**
**श्चित्तार्द्रत्वमृते विचिन्त्य बहुभिः सिध्यन्ति जन्मान्तरैः ॥ ९ ॥**

**अतीति**। अत्यायासकराणि बहुसाधनपरिश्रमपूर्वकमनुष्ठेयानि कर्मणां पटलानि नित्यनैमित्तिकप्रायश्चित्तोपासनारूपबहुविधकर्मसमूहान् आचर्य अनुष्ठाय

१. 'त' ख. पाठः. २. 'ते। किं' ख. पाठः ३. 'धानं संज्ञा य' क. पाठः. ४. 'तनियम्यनि' ख. पाठः. ५. 'स्य चर' ख. पाठः. ६. 'लं का' ख. पाठः.

निर्यन्मला निर्यन्ति निर्गच्छन्ति रागद्वेषमोहमदमात्सर्यरूपाणि मनोमलानि येषां त, तथा, तादृशाः केचिद् बोधे ज्ञानमार्गे भक्तिमार्गे वाप्युचितताामायान्ति अधिकारं प्राप्नुवन्ति । यदि सम्यग्विरक्तास्तर्हि ज्ञानयोगेऽधिकारिणः, यदि वेषद्विरक्तास्तर्हि भक्तिमार्गेऽधिकारिणो भवन्ति । तदुक्तं 'न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद' इति । तावता तावन्मात्रोपयोगिना कर्मणा भक्तिमार्गप्रस्थितानामस्माकं किं प्रयोजनं, न किमपीत्यर्थः । अन्ये पुनश्चित्तार्द्रत्वं रागादिराहित्यम् ऋते विना विरक्तम्मन्याः केचित् तर्कपथे वेदान्तशास्त्रे परं क्लिष्ट्वा क्लेशैकभाजनानि भूत्वा हे विभो! तव ब्रह्माख्यं वपुः स्वरूपं विचिन्त्य वेदान्तार्थविचारोपायभूतैर्विविधैर्न्यायै- र्विचार्य बहुभिरुपासनाविधिभिश्चोपास्य बहुभिर्जन्मान्तरैः सिध्यन्ति फलं साधयन्ति ॥ ९ ॥

तर्हि भक्तियोगेऽपि किमुक्तदोषाः सन्ति, नेत्याह—

**त्वद्भक्तिस्तु कथारसामृतझरीनिर्मज्जनेन स्वयं**
**सिध्यन्ती विमलप्रबोधपदवीमक्लेशतस्तन्वती ।**
**सद्यः सिद्धिकरी जयत्ययि विभो! सैवास्तु मे त्वत्पद-**
**प्रेमप्रौढिरसार्द्रता द्रुततरं वातालयाधीश्वर! ॥ १० ॥**

त्वदिति । त्वद्भक्तिस्तु तथा न भवतीत्यर्थः । किन्तु जयति कर्मज्ञानमयाद् योगद्वयादुत्कृष्टा भवति । उत्कर्षमेवाह—कथारसेति । त्वत्कथायां यः शृङ्गारादिरूपो रसः, अथवा कथाश्रद्धा, स एवामृतझरी मधुद्रवः, तस्मिन् नितरां मज्जनेन स्वयं सिध्यन्तीति । अयमर्थः—त्वत्कथाः शृण्वतां पुनःपुनः शुश्रूषा जायते । ततश्च विविधविषयतृष्णापैति । ततश्चित्तशुद्धिद्वारा भक्तिः स्वयमेवोत्पद्यत इति । ननूत्पन्नापि भक्तिरज्ञानकृतं बन्धं न निवर्तयति, ज्ञानस्यैवाज्ञाननाशकत्वादित्याशङ्क्याह—विमलेति । अक्लेशतः क्लेशं विनैव विगतं नष्टं मलं शरीराद्यहंममाभिमानरूपमज्ञानं यस्मात् प्रबोधात् स विमलप्रबोधो ब्रह्मज्ञानं, स एव पदवी मार्ग उपायो ब्रह्मप्राप्तेः, तां तन्वती कुर्वतीति । अयमाशयः—भक्तेर्हि बन्धमोक्षाख्यफलजनने त्वत्स्वरूपब्रह्मज्ञानमवान्तरव्यापारमात्रमिति सा भक्तिरेव भगवत्यक्लेशेनैव

---

१. 'त्तस्यार्द्र' ख. पाठः. २. 'त्सेवायां' क. पाठः. ३. 'कल्पितं' क. पाठः.

ब्रह्मज्ञानमुत्पाद्याज्ञाननिवृत्तिद्वारा मोक्षमपि ददातीति[1]। किञ्च, सद्यः अस्मिन् जन्मन्येव सिद्धिं फलं करोति, न ज्ञानमार्ग इव कालान्तरे । अयि विभो! वातालयाधीश्वर! मे मम त्वदेकशरणस्य सा क्लेशरहिततयातिशुभा त्वत्पदप्रेमप्रौढिरसार्द्रता तत्र पादाम्बुजयोः प्रेम्णः प्रौढिरतिशयोऽनपायिनी प्रीतिः स एव रसः, आस्वादनीयत्वात्, तेनार्द्रता विलीनहृदयता तादृशी भक्तिरेव द्रुततरमेवास्तु, मम सेवामान्येऽपि मदेकशरणोऽयमिति धिया मह्यं तादृशीं भक्तिमेवानुगृहाणेत्यर्थः ॥ १० ॥

इति भगवद्रूपवर्णनं भगवद्भक्त्युत्पत्त्यादिवर्णनं च

**द्वितीयं दशकम्** ।

---

अथ भक्तानां स्वरूपं वर्णयति —

**पठन्तो नामानि प्रमदभरसिन्धौ निपतिताः**
**स्मरन्तो रूपं ते वरद! कथयन्तो गुणकथाः ।**
**चरन्तो ये भक्तास्त्वयि खलु रमन्ते परममू-**
**नहं धन्यान् मन्ये समधिगतसर्वाभिलषितान् ॥ १ ॥**

**पठन्त** इति। ये भक्ताः त्वयि खलु त्वयीश्वर एव रमन्ते, नान्तरान्तरा विषयेष्वपि, तानमून् परं केवलम् अहं धन्यान् भाग्यवतो मन्ये । रमणप्रकारमाह — **पठन्त इति** । ते नामानि पठन्तः उच्चैः कीर्तयन्तः, हे वरद! भक्ताभीष्टप्रद[2]! कीर्तनद्वारा हृदि प्रविष्टं तव रूपं स्मरन्तः, अत एव प्रमदभरसिन्धौ आनन्दातिशयरूपे समुद्रे निपतिताः तादृशानन्दानुभावैर्हर्षाश्रुरोमाञ्चादिभिश्चोपलक्षिता[3]ः, गुणकथाः भक्तवात्सल्यादी[4]न् गुणान् अत्यद्भुतानि चरितानि चान्योन्यं कथयन्तः, गृहाद्यनपेक्षया[5] चरन्तः । एवम्भूतानां मनः पुनस्त्वत्पादारविन्दाच्चालयितुं पारमेष्ठ्यादिपदमप्यकिञ्चित्करमित्याह — समधिगतेति । समधिगतानि सम्प्राप्तानि सर्वाण्यभिलषितान्यभीष्टानि येषां, ते तथा । त्वत्पादारविन्दस्य सकलपुरुषार्थरूपतया तत् प्राप्ताः पुनरपरं न काङ्क्षन्तीत्यर्थः ॥ १ ॥

---

१. 'ति। स' क. पाठः. २. 'फलद' क. पाठः. ३. 'ताः। किञ्च, ते गु' क. पाठः. ४. 'दिषु' क. पाठः. ५. 'क्षतया' ख. पाठः.

ननु किमर्थं भक्तान् स्तौषि, त्वमपि[1] नामानि पठन्, गुणकथाश्च कथयन्, मद्रूपं च स्मरन् तेषामन्यतमो भवेत्याशङ्कायामहं तावत् तान् भक्ताननुकर्तुमसमर्थ इत्याह—

**गदक्लिष्टं कष्टं तव चरणसेवारसभरे-**
**ऽप्यनासक्तं चित्तं भवति बत विष्णो! कुरु दयाम् ।**
**भवत्पादाम्भोजस्मरणरसिको नामनिवहा-**
**नहं गायंगायं कुहचन विवत्स्यामि विजने ॥ २ ॥**

**गदे**ति। बाह्यैर्वातादिभिरान्तरै रागादिभिश्च गदैर्व्याधिभिः क्लिष्टं सञ्जातक्लेशं मदीयं चित्तं तव चरणसेवारसभरे भवत्पादाम्बुजोपासनरूपे सुखातिशयेऽप्यनासक्तं समाधातुमशक्यं भवति, कष्टं बत खिन्नोऽस्मि। हे विष्णो! मय्यनन्यशरणे दयां कुरु। अहं तु भवत्पादाम्भोजस्मरणे[2] रसिकः यद्यहमरोगोऽभविष्यं तर्ह्यस्मरिष्यमिति सोत्कण्ठः सन् नाम्नां निवहान् समूहान् गायंगायं पुनःपुनः सङ्कीर्तयन् कुहचन कुत्रापि विजने प्रदेशे विवत्स्यामि[3] विशिष्टं वासं करिष्यामि ॥ २ ॥

**कृपा ते जाता चेत् किमिव न हि लभ्यं तनुभृतां**
**मदीयक्लेशौघप्रशमनदशा नाम कियती ।**
**न के के लोकेऽस्मिन्ननिशमयि शोकाभिरहिता**
**भवद्भक्ता मुक्ताः सुखगतिमसक्ता विदधते ॥ ३ ॥**

**कृपे**ति। अयि विष्णो! ते कृपा जाता चेत्, तनुभृतां स्त्रीशूद्रादीनां गजमृगादिशरीरभाजामपि किमिव हि न लभ्यं, तिष्ठन्त्वितरे पुरुषार्थाः, त्वदैक्यं मोक्षोऽपि तेषां सुलभ एव । एवं स्थिते मदीयाः क्लेशा विविधा आधयो व्याधयश्च तेषामोघस्य समूहस्य प्रशमनदशा समूलोन्मूलनरूपावस्था कियती अतिलघीयसी नाम, यथा ज्वलनज्वालावलीढतूलराशेः प्रशमनदशा, तद्वदिति भावः । नन्वेतादृक्कृपापात्रीभूता दुर्लभा इति चेद्, नेत्याह – न के क इति । के के जना अनिशं सर्वदा शोकाभिरहिताः निवृत्तशरीराद्यहंममाभिमानतया तन्मूलाधिव्याधिक्लेशविरहिताः भवद्भक्ताः भवतीश्वरे लब्धप्रेमतया नामानि कीर्तयन्तश्चरितानि गायन्तश्च मुक्ता जीवन्मुक्ता भूत्वास्मिन् लोकेऽसक्ताः परानुग्रहैकपराः सुखगतिम् अभीष्टसञ्चारं न

१. 'पि प' क. पाठः. २. 'ण' ख. पाठः. ३. 'सि वा' क. पाठः.

विदधते कुर्वन्ति । अथवा सुखगतिः ब्रह्मानन्दप्राप्तिः, तां न विदधते[1] । अस्मिँल्लोके त्वत्कृपयैव त्वद्भक्ता भूत्वा सञ्चरन्तो जना बहवः श्रूयन्ते । अयि विष्णो! मय्यपि तादृशीं कृपां कुर्विति भावः ॥ ३ ॥

के ते जना इत्यत आह—

**मुनिप्रौढा रूढा जगति खलु गूढात्मगतयो**
**भवत्पादाम्भोजस्मरणविरुजो नारदमुखाः ।**
**चरन्तीश ! स्वैरं सततपरिनिर्भातपरचित्-**
**सदानन्दाद्वैतप्रसरपरिमग्नाः किमपरम् ॥ ४ ॥**

**मुनीति** । श्रीनारदो मुखमादिर्येषां ते मुनिप्रौढाः[2] मुनिश्रेष्ठाः जगति रूढाः प्रसिद्धाः खलु । किन्तु गूढात्मगतयः गूढोऽस्मदादिभिरशक्यदर्शन आत्मा गतिश्च येषां, ते तथा। अथवा[3] आत्मगतिर्मनोगतिः देवैरप्यविदितनिग्रहानुग्रहाद्यभिप्रायविशेषाः । अथवा आत्मनो[4] गतिर्ज्ञानम् । भवत्पादाम्भोजस्मरणेन विरुजो विगतसकलपीडाः, ते खलु जगति स्वैरं चरन्ति । कथमित्यत आह – सततेति । सततं सर्वदैव परिनिर्भातम् अनुभवपदवीमारूढं परचित्सदानन्दं[5] सच्चिदानन्दं परं ब्रह्म, तदेवोपाधिलयादद्वैतं, तस्य प्रसरे संप्लवे परिमग्नाः तदेकीभूताः सन्तः सञ्चरन्ति । हे ईश! अतः परं किं तेषां प्रार्थनीयमवशिष्टम्[6] । तद्वन्मामप्यनुगृह्णीष्वेति भावः ॥

ननु श्रीनारदादयो मत्कृपया ज्ञाननिष्ठाः सन्तो विधूतक्लेशाः[7] स्वैरं चरन्तीति ज्ञानमेव प्रार्थ्यताम् । किमज्ञानजनितक्लेशनिरसने संशयितया भक्त्येत्याशङ्कां परिहरन् भक्तिं प्रार्थयते—

**भवद्भक्तिः स्फीता भवतु मम सैव प्रशमये-**
**दशेषक्लेशौघं न खलु हृदि सन्देहकणिका ।**
**न चेद् व्यासस्योक्तिस्तव च वचनं नैगमवचो**
**भवेन्मिथ्या रथ्यापुरुषवचनप्रायमखिलम् ॥ ५ ॥**

**भवद्भक्तिरिति** । मम स्फीता भवद्भक्तिर्भवतु । सैव ममाशेषक्लेशौघं प्रशमये-

१. 'त इत्यर्थः । अ' क. पाठः. २. 'श्रेष्ठाः' क. पाठः. ३. 'यद्वा' क. पाठः. ४. 'त्मग' क. पाठः. ५. 'दमा' क. पाठः. ६. 'मिति भा' क. पाठः. ७. 'ज्ञाः सञ्च' क. पाठः.

दित्यत्र प्रमाणमाह — न चेदिति । व्यासस्योक्तिः भगवद्भक्तिमाहात्म्यप्रतिपादकानि पुराणवचनानि, तव च वचनम् अर्जुनमुद्धवं च प्रति यदुक्तवानसि, नैगमवचः वेदवाक्यानि, यद्वा नैगमा वेदज्ञास्तेषां वचनम् । यदि भक्तिरशेषक्लेशौघं न प्रशमयति, तर्ह्येतत् सकलं प्रायेण रथ्यापुरुषवचनवन्मिथ्या[1] अप्रमाणं भवेदिति विपक्षे बाधकस्तर्कः । अवैदिकास्त्वेवं प्रलपन्ति — वेदस्मृतिपुराणवचनानि प्रमाणं न भवन्ति, वाक्यत्वाद्, रथ्यापुरुषवचनवदिति । नेदमनुमानं श्रुतिस्मृतिपुराणवचनाप्रामाण्यापादकमित्याह — न खल्विति । अयमभिप्रायः — यद्यद्वाक्यं तत्तदप्रमाणमिति इदमनुमानमपि वाक्यत्वादेवाप्रमाणमिति तैर्मुक्तो बाणस्तानेव विध्यति । किञ्च, आचार्यैर्वेदस्य प्रामाण्यं तन्मूलतया स्मृतिपुराणवचनानामपि प्रामाण्यं प्रपञ्चितम् । अतः श्रुतिपुराणवचनादीश्वरवचनाच्च सिद्धा भक्तेर्मोक्षोपायता ॥ ५ ॥

एवञ्च भक्तिरेवोक्तमार्गेण प्रार्थनीयेति वदितुं तस्या ज्ञानादुत्कर्षमाह —

**भवद्भक्तिस्तावत् प्रमुखमधुरा त्वद्गुणरसात्**
**किमप्यारूढा चेदखिलपरितापप्रशमनी ।**
**पुनश्चान्ते स्वान्ते विमलपरिबोधोदयमिल-**
**न्महानन्दाद्वैतं दिशति किमतः प्रार्थ्यमपरम् ॥ ६ ॥**

भवदिति । तावच्छब्दः क्रमार्थः । भवद्भक्तिः प्रमुखे आदौ प्रथमसन्निपाते मधुरा सुखरूपा । कुत इत्यत आह — त्वद्गुणरसादिति । तव गुणेषु श्रवणस्मरणादिषु जातश्रद्धतयाह्लादात् । ज्ञानमार्गे तु नैवं, 'यत्तदग्रे विषमिवे'ति भगवद्वचनात् । सा त्वद्गुणरसात् त्वत्कथाश्रवणश्रद्धयैव[2] किमपि किञ्चिद् आरूढा प्रवृद्धा चेद् यथाभक्ति तत्त्वावबोधस्य विषयविरक्तेरपि सम्भवादखिलपरितापप्रशमनी अखिलस्याध्यात्मिकादेः परितापस्य प्रकर्षेण समूलं[3] शान्तिं कर्त्री । पुनरन्ते परिणामे च स्वयं परिपोषं[4] नीतायां सत्यां स्वान्ते हृदि । विमलपरिबोधेति । विगतं नष्टं[5] मलं शरीराद्यहंममाभिमानरूपमज्ञानं यस्मात् परिबोधात् स विमलपरिबोधो ब्रह्मैवेदं सर्वमिति ज्ञानं, तस्योदयेन मिलत् सहितं महानन्दाद्वैतं महद् ब्रह्मैवानन्दरूपं निरस्तसमस्तोपाधिकतयाद्वितीयं दिशति । भक्तिरेवानुभवपर्यन्तं ब्रह्मज्ञानं दत्त्वा

---

१. 'ध्या भवेन्न प्र' ख. पाठः. २. 'द्धतयै' क. पाठः. ३. 'लेन शा' क. पाठः. ४. 'तो' क. पाठः. ५. 'ष्टं श' क. पाठः.

चिदानन्दाद्वैतब्रह्मैक्यरूपं मोक्षमपि ददातीत्यर्थः । अतः अस्मान्मोक्षादपरं जीवैः किं प्रार्थ्यं, न किमपीत्यर्थः । अथवा अतः अस्या आदिमध्यावसानेऽपि सुखरूपाया भक्तेः अपरं ज्ञानादि किं प्रार्थ्यं, न प्रार्थनीयमेवेत्यर्थः ॥ ६ ॥

एवं प्रेमलक्षणां भक्तिं स्तुत्वा स्वस्य तस्यामनधिकारमनुसन्दधानस्तत्साधनरूपां क्रियात्मिकां भक्तिं प्रार्थयते—

**विधूय क्लेशान् मे कुरु चरणयुग्मं धृतरसं**
**भवत्क्षेत्रप्राप्तौ करमपि च ते पूजनविधौ ।**
**भवन्मूर्त्यालोके नयनमथ ते पादतुलसी-**
**परिघ्राणे घ्राणं श्रवणमपि ते चारुचरिते ॥ ७ ॥**

**विधूयेति** । क्लेशान् रोगान् बाह्यानाभ्यन्तरान् वा विधूय मे चरणयोर्युग्मं भवत्क्षेत्रप्राप्तौ धृतरसं सञ्जातकौतुकं कुरु, अन्यथा कौतुके सत्यपि त्वत्क्षेत्रगमनप्रदक्षिणादेरशक्यत्वात् । करं करयुगलमपि च ते पूजनस्य विधिर्व्यापारः तस्मिन् धृतरसं कुरु । नयनद्वयमपि भवतः पूर्वोक्ताया मूर्तेरालोके दर्शने धृतरसं कुरु । अथ ते तव श्रीपादे[1]ऽर्चितायास्तुलस्याः परिघ्राणे घ्राणं घ्राणेन्द्रियं धृतरसं कुरु । श्रवणं श्रोत्रेन्द्रियमपि ते चारुणि मनोहरे चरिते स्तुतौ धृतरसं कुरु ॥ ७ ॥

अनन्तरं स्मरणं प्रार्थयते—

**प्रभूताधिव्याधिप्रसभचलिते मामकहृदि**
**त्वदीयं तद् रूपं परमरसचिद्रूपमुदियात् ।**
**उदञ्चद्रोमाञ्चो गलितबहुहर्षाश्रुनिवहो**
**यथा विस्मर्यासं दुरुपशमपीडापरिभवान् ॥ ८ ॥**

**प्रभूतेति** । प्रभूतै रूढपदैः आधिभिरान्तरैर्व्याधिभिर्बाह्यैश्च प्रसभं बलात् चलिते शरीरादियोगक्षेमैकव्यापृते मामकहृदि मदीये हृदये त्वदीयं 'सत्त्वं यत्तद्—' (दशकं १. श्लो. ३) इत्यारभ्य त्रयोदशभिः श्लोकैर्वर्णितं परमरसचिद्रूपं परमरसः परमानन्दश्चासौ चिद् ज्ञानं च, तन्मयं रूपमुदियात् । यथा तरणिमण्डलमु-

१. 'दा' ख. पाठः. २. 'घ्राणे' क. पाठः. ३. 'शश्लो' ख. पाठः.

घत्तिमिरानिकरं दूरीकुर्वदेवोदेति, तद्वन्ममाज्ञानविजृम्भिताधिव्याधिजालं समूलमुन्मूलयदेव मम हृदि त्वद्रूपमुदेत्विति भावः । एवञ्चाहं भवति प्रेमातिशयलाभाद् उदञ्चद्रोमाञ्चालङ्कृतशरीरः गलितबहुहर्षाश्रुनिवहो बाष्पजलावसिक्तसर्वाङ्गः सन् दुरुपशमाः शमयितुमशक्या याः पीडा आध्यात्मिकाद्याः, तत्कर्तृकान् परिभवान् उपद्रवान् यथा सम्यग् विस्मर्यासं विस्मरणं कुर्याम् । अथवा यथा विस्मर्यासं तथा हृदि त्वद्रूपमुदियादिति सम्बन्धः ॥ ८ ॥

अपिच—

**मरुद्गेहाधीश! त्वयि खलु पराञ्चोऽपि सुखिनो**
**भवत्स्नेही सोऽहं सुबहु परितप्ये च किमिदम् ।**
**अकीर्तिस्ते मा भूद् वरद! गदभारं प्रशमयन्**
**भवद्भक्तोत्तंसं झटिति कुरु मां कंसदमन! ॥ ९ ॥**

**मरुदिति ।** मरुद्गेहाधीश! हे श्रीगुरुवायुपुरनाथ! त्वयीश्वरे पराञ्चोऽपि विमुखा नास्तिका अपि सुखिनो दृश्यन्ते खलु, अन्ये भक्ताः सुखिन इति किमुच्यते । भवतीश्वरे स्नेहोऽस्यास्तीति भवत्स्नेही सोऽहं यः स्नेहे सत्यपि क्लेशाभिभूततया स्मरणादिष्वसमर्थः, सोऽहं सुबहु अधिकं परितप्ये परितापमनुभवामि च किमिदमीश्वरेऽपि वैषम्यमिव । न च तेऽपि जन्मान्तरे भवन्तं सेवितवन्तः, अतः सुखिनो भवन्ति, कुतश्चित्तु कारणात् सम्प्रति त्वयि पराञ्चो जाता इति शक्यं शङ्कितुं, भवत्सेवकानामप्रच्युतिप्रसिद्धिभङ्गप्रसङ्गात् । किञ्च, अहं दुःखिष्वन्तर्भवाणि, नात्र खेदः । तव त्वीश्वरस्यापि जीवेषु वैषम्यमस्तीति दुष्कीर्तिः स्यात् । ततश्च जीवानां सेवामान्द्यमपि स्यादित्येव मम खेद इत्याह— अकीर्तिरिति । हे वरद! कंसदमन! इत्याभ्यां सम्बोधनाभ्यां दुष्टनिग्रहशिष्टाभीष्टदानाभ्यामेवेश्वरस्य शरीरोपादानमिति सत्कीर्तिर्द्योत्यते । तस्यां सत्यां ते तव कुतश्चिदकीर्तिर्दुष्कीर्तिरपि मा भूत् । तत्रोपायमाह— गदभारमिति । गदा रोगा एव भारः सोढुमशक्यत्वात्, तं प्रशमयन् मां झटिति अकीर्तिव्याप्तेः पूर्वमेवातिशीघ्रं भवद्भक्तानामुत्तंसमलङ्कारभूतं प्रधानं कुरु । एवंच त्वं चाहं च कृतार्थौ स्वे इत्यर्थः ॥ ९ ॥

---

१. 'भगव' क. पाठः. २. 'रेऽपि भ' क. पाठः. ३. 'वि' क. पाठः. ४. 'स्वः ॥' क. पाठः.

एवं स्तुतिमुखेन प्रार्थनामुखेन च भक्तेर्भक्तानां च स्वरूपं वर्णयन् प्रकरणमुपसंहरति —

**किमुक्तैर्भूयोभिस्तव हि करुणा यावदुदिया-**
**दहं तावद् देव! प्रहितविविधार्तप्रलपितः।**
**पुरः क्लृप्ते पादे वरद! तव नेष्यामि दिवसान्**
**यथाशक्ति व्यक्तं नतिनुतिनिषेवा विरचयन्॥ १०॥**

किमिति। भूयोभिरुक्तैर्बहुभिः प्रलापैः किं फलं, तव करुणाभावे न किमपीत्यर्थः। हे देव! भक्तानां हृद्युद्द्योतमान! यावद् यस्मिन् काले तव हि ईश्वरस्यैव करुणा कृपा उदियात् प्रादुर्भवति, तावत् तावत्कालपर्यन्तम् अहं प्रहितं त्यक्तं विविधम् उक्तप्रकारेण बहुविधम् आर्तानां प्रलपितं निरर्थकं वचनं येन स प्रहितविविधार्तप्रलपितः तथाभूतः सन् पुरः पुरोभागे क्लृप्ते सङ्कल्पिते अथवा प्रतिमासम्बन्धिनि तव श्रीपादे यथाशक्ति यावदारोग्यं व्यक्तं निश्चिनोमीति यावत्। नतिर्नमस्कारः नुतिः स्तुतिः निषेवा पूजा, ताः विरचयन् विशेषेण भक्तिश्रद्धावृत्तिसहितं कुर्वन् दिवसान् नेष्यामि, मम प्रलापैर्न केवलेन त्वत्कृपा नोदयमासीदयति। किञ्च, वृथा कालक्षेपः स्याद्, अतो यथाशक्ति त्वत्सेवां कुर्वन् त्वत्कृपां च प्रतिपालयन् दिवसान् नयामीत्यर्थः। एवं पञ्चदशभिः श्लोकैः परीक्षिदाख्यानसिद्धं भक्तेर्भक्तानां च स्वरूपं वर्णितम्॥ १०॥

इति भक्तस्वरूपवर्णनं भक्तिप्रार्थना च तृतीयं दशकम्।

इति नारायणीयस्तोत्रव्याख्यायां

भक्तप्रियायां

**प्रथमस्कन्धपरिच्छेदः।**

---

आदितः श्लोकसङ्ख्या ३०.

---

१. 'न त्व' ख. पाठः. २. 'पा' क. पाठः.

## अथ द्वितीयस्कन्धपरिच्छेदः ।

त्रिगुणं द्विगुणं शुद्धसत्त्वैकगुणनिर्गुणम् ।
द्वितीयोक्तं हरे रूपमुपास्यमुपवर्ण्यते ॥

अथ द्वितीयस्कन्धाश्रयणेन भगवन्मूर्तिभेदतदुपासनतत्फलादि प्रपञ्चयिष्यन् प्रथमं स्वस्य तस्मिन्नधिकारायारोग्यं प्रार्थयते—

**कल्यतां मम कुरुष्व तावतीं कल्यते भवदुपासनं यया ।**
**स्पष्टमष्टविधयोगचर्यया पुष्टयाशु तव तुष्टिमाप्नुयाम् ॥ १ ॥**

**कल्यतामिति** । मम तावतीं कल्यताम् आरोग्यं कुरुष्व, यया यावत्या कल्यतया भवदुपासनं कल्यते अनुष्ठातुं शक्यते । स्पष्टम् इदं निश्चितम् । यद्यहमरोगः स्यां, तर्हि आश्वष्टविधस्य यमनियमाद्यष्टाङ्गस्य योगस्य चर्यया अनुष्ठानेन पुष्टया सम्पूर्णाङ्गया । सम्प्रति मदकल्यतैव योगाङ्गवैकल्ये कारणमिति भावः । तव तुष्टिं प्रसादम् आप्नुयाम् लभेयं ॥ १ ॥

इदानीं यथाशक्ति करोमीत्याह—

**ब्रह्मचर्यदृढतादिभिर्यमैराप्लवादिनियमैश्च पाविताः ।**
**कुर्महे दृढममी सुखासनं पङ्कजाद्यमपि वा भवत्पराः ॥ २ ॥**

**ब्रह्मचर्येति**[1] । ब्रह्मचर्यस्य दृढता नाम स्त्रीणां दर्शनस्पर्शनादिवर्जनम् । आदिशब्देनाहिंसासत्यास्तेयादि गृह्यते । आप्लवः स्नानम् । अत्रादिशब्देन मनःशुद्धिजपतपोहोमादि गृह्यते । एतैर्यमैर्नियमैश्च पाविताः शुद्धाः सन्तः[3] भवान् परः प्रधानो येषां ते भवत्पराः अमी वयं पङ्कजमाद्यं प्राथमिकं यस्य तत् पङ्कजाद्यं पद्मासनं स्वस्तिकासनमन्यद् वा सुखासनं यथासुखमासनं[4] दृढं कुर्महे ॥ २ ॥

आसनदार्ढ्ये सति प्राणायामं कुर्म इत्याह—

**तारमन्तरनुचिन्त्य सन्ततं प्राणवायुमभियम्य निर्मलाः ।**
**इन्द्रियाणि विषयादथापहृत्यास्महे भवदुपासनोन्मुखाः ॥ ३ ॥**

**तारमिति** । तारं प्रणवम् अन्तः हृदि सन्ततं तैलधारावद् घण्टानादवच्चाविच्छिन्नमनुचिन्त्य विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहं कृत्वा प्राणवायु-

---

१. 'येति ॥' क. पाठः. २. 'नादि' ख. पाठः. ३. 'न्तः भवत्पराः भ' ख. पाठः. ४. 'नं कु' क. पाठः.

मभियम्य पूरकरेचककुम्भकैः वायुं[1]जयं कृत्वा निर्गतानि मलानि रागादीनि येभ्यस्ते[2] निर्मलाः । तदुक्तं 'प्राणायामैर्दहेद् दोषान् धारणाभिश्च किल्बिषान्' (श्रीभा. स्क. ३. अ. २८. श्लो. ११) इति । अथ अनन्तरम् इन्द्रियाणि विषयादपहृत्येति प्रत्याहारः[3] उक्तः । भवदुपासने धारणाद्युत्तरभूमिकायाम् उन्मुखा आरुरुक्षवः सन्तः आस्महे पूर्वभूमिकामेवाभ्यस्यन्तो भवत्कृपां प्रतिपालयाम इत्यर्थः ॥ ३ ॥

क्रमप्राप्तां धारणामाह —

**अस्फुटे वपुषि ते प्रयत्नतो धारयेम धिषणां मुहुर्मुहुः ।**
**तेन भक्तिरसमन्तरार्द्रतामुद्वहेम भवदङ्घ्रिचिन्तकाः ॥ ४ ॥**

अस्फुटेति । अस्फुटे अस्पष्टे आपाततः प्रतीते ते तव वपुषि प्रयत्नतो मुहुर्मुहुर्धिषणां बुद्धिं धारयेम । अत्र बुद्धेर्निद्रादोषे सति तदुद्बोधने प्रयासः प्रयत्नः । तथान्यविषया[4]लम्बने सति तच्छमनं कर्तव्यमिति मुहुर्मुहु[5]रित्युक्तम् । एवं धारणां [6]कलयाम इति यत् तेन धारणा[7]कलनेन भक्तिरेव रसः तं तदनुभावमन्तरार्द्रतां चोद्वहेम प्राप्नुयाम । ततो वयं भवदङ्घ्रिचिन्तकाः परमभागवतां[8]श्च भवेमेति ॥ ४ ॥

ध्यानमाह —

**विस्फुटावयवभेदसुन्दरं त्वद्वपुः सुचिरशीलनावशात् ।**
**अश्रमं मनसि चिन्तयामहे ध्यानयोगनिरतास्त्वदाश्रयाः ॥ ५ ॥**

विस्फुटेति । विस्फुटा विशे[9]षेण स्पष्टाः श्रीमत्पादादिकेशान्ता अवयवभेदा यस्मिंस्तद् विस्फुटावयवभे[10]दं तादृशं सुन्दरं स्फुटप्रतीयमानसौन्दर्यं[11] च त्वद्वपुः सुचिरशीलना दीर्घकालं धारणाध्यानयोरभ्यासः तद्वशाद् अश्रमम् अनायासेन मनसि चिन्तयामहे । 'आहूत इव मे शीघ्रं दर्शनं याति चेतसि' (श्रीभा. स्क. १.

---

१. 'युं जित्वा' ख. पाठः. २. 'स्तादृशाः सन्तः । त' ख. पाठः. ३. 'रो दर्शितः ।' ख. पाठः. ४. 'यावलम्बनेऽपि स' ख. पाठः. ५. 'हुर्योत्यते । ए' क. पाठः. ६. 'कुर्यामेति' क. पाठः. ७. 'णानुष्ठाने' क. पाठः. ८. 'ताः सन्तो जन्म(भ)ाजः स्यामे' ख. पाठः. ९. 'षतः स्प' ख. पाठः. १०. 'दसु' क. पाठः. ११. 'च किं तत् त्व' क. पाठः.

अ. ६. श्लो. ३४) इति यथा श्रीनारदवचनं, तथेत्यर्थः । एवञ्च[1] वयं ध्यानयोगे ध्यानरूपे त्वत्प्राप्त्युपाये निरतास्तत्परा[2]स्त्वदाश्रयास्त्वद्भक्ता भवेमेति शेषः ॥ ५ ॥

अथ समाधि[3]माशास्ते —

**ध्यायतां सकलमूर्तिमीदृशीमुन्मिषन्मधुरताहृतात्मनाम् ।**
**सान्द्रमोदरसरूपमान्तरं ब्रह्म रूपमयि ! तेऽवभासते ॥ ६ ॥**

ध्यायतामिति । अयि भगवन् ! ते तव ईदृशीं सकलमूर्तिं ध्यायताम् उन्मिषन्त्या अभिव्यक्तया मधुरतया तव वपुस्सौभाग्येन हृत आत्मा मनो येषां[4] ते उन्मिषन्मधुरताहृतात्मानः, तेषां सान्द्रमोदरसरूपं सान्द्रानन्दैकरसस्वरूपं ते रूपं स्वरूपभूतं ब्रह्म आन्तरम् अन्तरिन्द्रियग्राह्यं ज्ञातृज्ञानज्ञेयरूपेण भेदेनाभेदेन चावभासते । अनेन सविकल्पकसमाधिरुक्तः । तत्र चैवमेव भानप्रकारः । तदुक्तमाचार्येण 'तदा मृण्मयगजादिभानेऽपि मृद्भानवद् द्वैतभानेऽप्यद्वितीयं वस्तु भासत' इति ॥ ६ ॥

अथ निर्विकल्पकसमाधेः स्वरूपं दर्शयति —

**तत्समास्वदनरूपिणीं स्थितिं त्वत्समाधिमयि विश्वनायक ! ।**
**आश्रिताः पुनरतः परिच्युतावारभेमहि च धारणादिकम् ॥ ७ ॥**

तदिति । तस्य तादृशस्य ब्रह्मणः समास्वदनं सम्यगनुभवः, तद्रूपिणीं स्थितिं ज्ञातृज्ञेययोरपि ज्ञानरूपेणावस्थानं त्वत्समाधिं त्वद्विषयं निर्विकल्पकसमाधिमित्यर्थः । अत्र चायमेव भानप्रकारः । तदुक्तं 'तदा जलाकाराकारितलवणानवभासेन[11] जलमात्रावभासवदद्वितीयवस्तुमात्रमवभासत' इति । हे विश्वनायक ! जगन्नाथ ! तादृशं त्वत्समाधिमाश्रिता वयं पुनरतोऽस्मात् स्थानात् परिच्युतौ सत्यां भ्रंशे सति धारणादिकं पुन[12]श्चारभेमहीति । अयमाशयः— निर्विकल्पकसमाधेर्लयविक्षेपकषायरसास्वादरूपाश्चत्वारो विघ्नाः संभवन्ति । तत्र लयो निद्रा । विक्षेपोऽन्यावलम्बनम् । कषायो विषयवासनया स्तब्ध[13]भावः । रसास्वादः सविकल्पकानन्दास्वादनम् ।

१. 'श्चेद् व' क. पाठः. २. 'राः सन्तस्त्व' क. पाठः. ३. 'धिं दर्शयति' क. पाठः. ४. 'तादृशानां सा' ख. पाठः. ५. 'मिति अ' क. पाठः. ६. 'हृतया ज्ञा' क. पाठः. ७. 'यभेदेन च भासत इत्यर्थः । अनेन च स' क. पाठः. ८. 'वं भानप्रकार आचार्येणोक्तः—तदा' ख. पाठः. ९. 'निर्वि' क. पाठः. १०. 'र उक्तः—तदा' ख. पाठः. ११. 'सि ज' क. पाठः. १२. 'नरप्यार' क. पाठः. १३. 'ब्धी' क. पाठः.

एतैर्दोषैः परिच्युतौ सत्यां पुनरपि धारणादिकमारब्धव्यम्। यदा तु चित्तमेतैर्दोषैर्विरहिततयाचलं ब्रह्ममात्रमवतिष्ठते, तदा निर्विकल्पकसमाधिरित्युच्यते 'यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता' (गी. अ. ६. श्लो. १९) इति भगवद्वचनादिति ॥ ७॥

अथ समाधिविजये जीवन्मुक्तताप्राप्तिमाह—

**इत्थमभ्यसननिर्भरोल्लसत्त्वत्परात्मसुखकल्पितोत्सवाः।**
**मुक्तभक्तकुलमौलितां गताः सञ्चरेम शुकनारदादिवत् ॥ ८ ॥**

इत्थमिति। इत्थम् उक्तप्रकारेण धारणाध्यानसमाधीनामभ्यसनेन निर्भरम् अतिशयेन उल्लसता आविर्भूतेन त्वत्परात्मसुखेन त्वत्स्वरूपपरब्रह्मानुभवजनितेनानन्देन कल्पितो निर्वृत्त उत्सवो येषां तथाभूताः सन्तो वयं मुक्तानां भक्तानां च कुलानि समूहाः, तेषां मौलितां प्रधानतां गताः प्राप्ताः सन्त इति। अयं भावः— यद्यपि ब्रह्मणि साक्षात्कृते सति अज्ञानतत्कार्यपूर्वसञ्चितकर्मसंशयविपर्ययादीनां बाधितत्वादखिलबन्धरहिता ब्रह्मनिष्ठा भवन्ति, तथापि यावत् प्रारब्धकर्म परिसमाप्यते, तावत् पूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि च। यथेन्द्रजालमिदमिति ज्ञानवन्तस्तदिन्द्रजालं पश्यन्तोऽपि परमार्थतो न पश्यन्ति, तद्वदेतेऽपि लोकव्यवहारं ब्रह्मज्ञानबाधितत्वादपरमार्थतया पश्यन्तः कञ्चित् कालं सञ्चरन्ति। सेह जीवन्मुक्तावस्थोच्यत इति तादृशावस्थापन्नाः शुकनारदादयः। हे भगवन्! वयमपि यदि भवत्कृपाभाजनं भवेम, तर्हि तादृशाः सन्तः सञ्चरेमेत्यर्थः ॥ ८॥

ननु ब्रह्मज्ञानानन्तरं प्रारब्धकर्मावसाने मुक्तिरित्युक्तम्। तदनुपपन्नं, श्रीनारदादीनां प्रारब्धकर्मनाशाद् देहपातेऽसत्यपि देहान्तरप्राप्तिश्रवणादित्याशङ्क्य विजितसमाधीनां तादृशां यथेष्टां गतिमाह सप्तभिः—

**त्वत्समाधिविजये तु यः पुनर्मङ्क्षु मोक्षरसिकः क्रमेण वा।**
**योगवश्यमनिलं षडाश्रयैरुन्नयत्यज! सुषुम्णया शनैः ॥९॥**

त्वदिति। हे अज! त्वयीश्वरे समाधिश्चित्तैकाग्र्यं त्वत्समाधिः, तस्य विजयो निवातस्थितदीपवदनायासेन दीर्घकालमवस्थानं, तस्मिन् सति यस्तु पुन-

१. 'मनेनोक्त' ख. पाठः. २. 'ता इ' क. पाठः. ३. 'सा हि जी' ख. पाठः. ४. 'शेन दे' ख. पाठः. ५. 'ह त्वत्समाधीत्यादिस' ख. पाठः. ६ 'स्थदी' ख. पाठः.

मङ्क्षु झटिति मोक्ष[1]रसिकः सद्योमुक्त्याग्रही भ[2]वति । क्रमेण वेति यस्तु क्रममुक्त्याग्रही वा[3] भवतीत्यर्थः । द्विविधोऽपि सः योगवश्यं प्राणायामवशीकृतम् अनिलं प्राणवायुं षडाश्रयैः सुषुम्णया सुषुम्णानाडीद्वारेण उन्नयतीति, स्वपार्ष्णिना गुदं संपीड्य मूलाधारनाभिहृदुरस्तालुमूलभ्रूमध्यरूपैः षड्भिराश्रयैः स्थानैः शनैः क्रमादधिरोपयतीत्यर्थः ॥ ९ ॥

एतदन्तमुभयोरपि समानं, पुनर्निराग्रहस्य विशेषमाह —

**लिङ्गदेहमपि सन्त्यजन्नथो लीयते त्वयि परे निराग्रहः ।**
**ऊर्ध्वलोककुतुकी तु मूर्धतः सार्धमेव करणैर्निरीयते ॥ १० ॥**

लिङ्गेति[4] । निराग्रहः सद्योमुक्त्या[5]ग्रही अथो अनिलं[6] भ्रूमध्यं[7]मधिरोप्य मुहूर्तार्धं स्थित्वानन्तरं लिङ्गदेहमपि सन्त्यजन् स्थूलशरीरं सूक्ष्मशरीरं च सम्यगपुनरावृत्तये त्यजन् त्वयि परे ब्रह्मात्मके लीयते मूर्धनि विभिद्य । यथा ज्योतिर्ज्योतिषि लीयते, तथा त्वत्सायुज्यं प्राप्नोतीत्यर्थः । अन्यस्य विशेषमाह – ऊर्ध्वलोककुतुकी तु ब्रह्मादिलोकानु[9]भवकौतुकवांश्चेद् भवति, तर्हि मूर्धतः मूर्धानं[10] निर्भिद्य तद्द्वारेण करणैरिन्द्रियैः सार्धमेव पञ्चप्राणमनोबुद्धिदशेन्द्रिय[11]समुदायात्मकलिङ्गशरीरेण सह निरीयते* निर्गच्छति । अयमाशयः – ब्रह्मरन्ध्रान्तःस्थितायाः सुषुम्णानाड्याः सूर्यरश्मीनां च नित्यसम्बन्धोऽस्ति । अतो जीवस्तद्द्वारा ब्रह्मरन्ध्रान्तमागत्य निर्यद्भिः सूर्यरश्मिभिः सह बहिर्निर्गच्छतीति ॥ १० ॥

अनन्तरमग्न्याद्यातिवाहिकदेवतातिक्रमणप्रकारमाह —

**अग्निवासरवलक्षपक्षगैरुत्तरायणजुषा च दैवतैः ।**
**प्रापितो रविपदं भवत्परो मोदवान् ध्रुवपदान्तमीयते ॥ ११ ॥**

---

१. 'क्षे' ख. पाठः. २. 'स्यात् ।' ख. पाठः. ३. 'स्यादित्य' ख. पाठः. ४. 'ति । 'लिङ्गदेहमपि सन्त्यजन् नि' ख. पाठः. ५. 'क्तिमिच्छुः अ' ख. पाठः. ६. 'लस्य भ्रू' ख. पाठः. ७. 'ध्याधिरोपणानन्तरं स्थू' ख. पाठः. ८. 'क्त्वा त्व' क. पाठः., 'जन् परे परब्रह्मात्मके त्वयि ली' ख. पाठः. ९. 'वलोकनकौ' ख. पाठः. १०. 'र्धानं भित्त्वा त' ख. पाठः. ११. 'यात्मलि' क. पाठः.

---

* निरीयते 'ईङ् गतौ' दिवादिः ।

**अग्निवासरेति** । वलक्षपक्षः शुक्लपक्षः । अग्निं[1] वासरं वलक्षपक्षं च गच्छन्ति अधिष्ठातृत्वेन[2] प्राप्नुवन्तीति तथा । उत्तरायणजुषा उत्तरायणं[3]षण्मासान् जुषते अधितिष्ठतीति तथा । अग्न्याद्यभिमानिभिर्दैवतै[4]रित्यर्थः । एतैर्दैवतैः रविपदं ज्योतिश्चक्रं प्रापितो जीवः भवत्परः भवानीश्वर एव परः सेव्यतया प्रधानो यस्य स तथा । मोदवान् तत्तद्देवतातुल्यभोगानुभवेन सन्तोषातिशयवान् भूत्वा ध्रुवपदान्तं ध्रुवलोकावधि ईयते प्राप्नोति । अत्र चेयं प्रक्रिया[5] —अग्न्यादिदेवता ह्येनं जीवमञ्जलिगतपुत्रिकावत् क्रमाद् ब्रह्मलोकं प्रापयन्ति । तत्र प्रथममग्निदेवता[6] स्वेच्छया शरीरमुत्सृज्य सूर्यरश्मिद्वारा निर्गच्छन्तं जीवमग्निलोकमार्गेण नीत्वा वासराभिमा[7]निदेवताहस्तं प्रापयति । सा शुक्लपक्षाभिमानिदेवताहस्तं प्रापयति । सा चोत्तरायणषण्मासाभिमानिदेवताहस्तं प्रापयति । सा संवत्सराभिमानिदेवता[8]हस्तं प्रापयति । सा पुनर्देवलोकमार्गेण नीत्वा वायुदेवताहस्तं प्रापयति । सा च स्वलोकमार्गेणादित्यदेवताहस्तं नयति । सा च स्वमण्डलद्वारा गच्छन्तं जीवं स्वलोकमार्गेण नीत्वा चन्द्रदेवताहस्तं नयति । सा स्वलोकमार्गेण विद्युल्लोकं प्रापयति[9] । ततश्च ध्रुवलोकान्तं गच्छतीति ॥ ११ ॥

**आस्थितोऽथ महरालये यदा शेषवक्त्रदहनोष्मणार्द्यते ।**
**ईयते भवदुपाश्रयस्तदा वेधसः पदमतः पुरैव वा ॥ १२ ॥**

**आस्थित** इति । अथ ध्रुवपदप्राप्त्यनन्तरं महरालये[10] कल्पायुषां भृग्वादीनामालयभूते महर्लोके आस्थितः[11] सुखेन वसन् यदा[12] यस्मिन् काले शेषवक्त्रदहनोष्मणा अनन्तस्य मुखात् त्रैलोक्यदाहाय निर्गतोऽग्निरूर्ध्वशिखो वर्धते, तेन च त्रैलोक्यं दह्यमानं निरीक्ष्य तस्योष्मणा चार्द्यते पीड्यते, तदा भवदुपाश्रयो भवन्तमीश्वरमेव शरणं गतो[13] वेधसः पदं सत्यलोकाख्यम् ईयते प्राप्नोति । भृग्वादिभिः सह जनर्लोकं तपोलोकं[14] चातीत्य ब्रह्मसभां प्रविशतीत्यर्थः । अतः पुरैव वेति

१. 'ग्निवासरवलक्षपक्षान् ग' क. पाठः. २. 'नतया प्रा' क. पाठः. ३. 'णं जु' ख. पाठः. ४. 'दे' क ख. पाठः. ५. 'या ज्ञेया अ' ख. पाठः. ६. 'अहरभि' क. पाठः. ७. 'तां सन्निधाप' क. पाठः. ८. 'चन्द्रदेवता च स्व' क. पाठः. ९ 'नय' क. पाठः. १०. 'ये मह' क. पाठः. ११. 'तस्तत्र सुखेन निव' क. पाठः. १२. 'दा शे' क. पाठः. १३. 'प्राप्तः सन् वे' क. पाठः. १४. 'गत्वा तदुपर्यपि क्रमेण गच्छतीत्यर्थः ।' क. पाठः.

शेषवक्त्रदहनोष्मप्राप्तेः प्रागेव वा यथेच्छं[1] तत्र गन्तुं शक्यमेव । अयमत्राभिप्रायः— यद्ययं त्वरितं त्वत्पदं जिगमिषुर्भवति, तर्हि विद्युल्लोकावधि गतमेनं[2] ब्रह्माज्ञया[3] यः कश्चिदमेयवपुर्ब्रह्मलोकादागत्य विद्युल्लोकमार्गेण शक्रप्रजापतिलोकमा[4]र्गेण च नीत्वा विरजानदीं तारयित्वा ब्रह्मलोकं प्रापयति । तदा चायं दिव्यशरीरो भवतीति ॥ १२ ॥

अथ ब्रह्मलोकं प्राप्तानां गतिद्वैविध्यमाह —

**तत्र वा तव पदेऽथवा वसन् प्राकृतप्रलय एति मुक्तताम् ।**
**स्वेच्छया खलु पुरापि मुच्यते संविभिद्य जगदण्डमोजसा ॥ १३ ॥**

तत्रेति । एवं सत्यलोकं प्राप्तोऽयं तत्र ब्रह्मलोके वा अथवा तव पदे विष्णुलोके वा वसन्निति । अत्रायमाशयः[6]— सत्यलोकान्तर्भाग एव ब्रह्मविष्णुगिरिशानां लोका इति त्रयो लोकाः सन्ति । तत्र ब्रह्मविष्णुशिवानामुपासकास्तत्तल्लोकं प्राप्य तत्तत्समानान्[7] भोगाननुभवन्ति च । प्राकृतप्रलये[8] सति मुक्ततामेति प्राकृतानां प्रकृतिकार्याणां महदहङ्कार[9]तन्मात्रपञ्चकादीनां स्वस्वकारणेषु प्रकृष्टो लयो हि प्राकृतप्रलयः, तस्मिन् सति ब्रह्मणा सह मुक्तो ब्रह्ममात्रमवतिष्ठते[10] । अथवा स्वेच्छयेति[11] । इदमत्राकूतं— यद्ययं भुज्यमानेषु ब्रह्मादिभोगेषु मध्ये विरक्तिमापद्यते, तर्हि महाप्रलयात् प्रागेव विमुच्यते मुक्तो भवति । कथमित्य[12]त्राह— जगदण्डं ब्रह्माण्डम् ओजसा[13] संविभिद्य स्वस्य योगबलेनैव ब्रह्माण्डकटाहं निर्भिद्य तद्द्वारेत्यर्थः ॥ १३ ॥

ब्रह्माण्डभेदनप्रकारमाह —

**तस्य च क्षितिपयोमहोनिलव्योममहत्प्रकृतिसप्तकावृतीः ।**
**तत्तदात्मकतया विशन् सुखी याति ते पदमनावृतं विभो ! ॥ १४ ॥**

---

१. 'गच्छतीति । अ' क. पाठः. २. 'तं जीवं ब्र' क. पाठः. ३. 'या क' क. पाठः. ४. 'त्यैनं वि' क. पाठः. ५. 'तिमा' क. पाठः. ६. 'यमभिप्रायः' क. पाठः. ७. 'नभोगमनु' क. पाठः. ८. 'ये प्रा' क. पाठः. ९. 'रपञ्चतन्मात्राणां प्रलये ब्रह्मप्रलये मुक्ततामेति ब्र' क. पाठः. १०. 'त इत्यर्थः । अ' क. पाठः, 'ते स्वे' ख. पाठः. ११. 'ति । यदि ब्रह्मादिभोगेषु अतितरां विरक्ततया महाप्रलयात् प्रागेव मोक्षेच्छा जायते तर्हि इत्यर्थः । पुरा खलु प्राग' क. पाठः. १२. 'थं ज' क. पाठः. १३. 'सा स्वस्य योगबलेनैव संविभिद्य ब्रह्माण्डभेदनद्वा' क. पाठः.

तस्य चेति। तस्य ब्रह्माण्डस्य च सप्तावरणानि सन्ति। तान्याह— क्षितीति। क्षितिपयोमहोनिलखावः पञ्चभूतानि, महत् महत्तत्त्वं, प्रकृतिर्माया, आसां सप्तकमेव आवृतयः आवरणानि। अत्र महच्छब्दोऽहन्तत्त्वस्याप्युपलक्षकः। तेन पञ्चभूतानि महदहङ्कारौ च सप्तावरणानि। प्रकृत्यावरणं त्वष्टमं व्यापकमेव। एता आवृतीस्तत्तदात्मकतया तत्तदावरणमेवात्मा मूर्तिर्यस्य स तत्तदात्मकः, तत्तया विशन्निति तत्तदावरणेषु तत्तदात्मना सूक्ष्मशरीरेण प्रविशन्नित्यर्थः। सुखी तत्र तत्र निरतिशयं सुखमनुभवन् हे विभो! विश्वव्यापिन्! ते अनावृतं पदं ब्रह्मपदं याति। एवमावरणान्यतिक्रम्यान्ते प्राणेन्द्रियाणि स्वस्वकारणे विलाप्य तत आवरणस्यापि विलयादनावृतं ब्रह्ममात्रमेव भवतीत्यर्थः॥ १४॥

एवं मुक्तः पुनर्न संसारीत्याह —

**अर्चिरादिगतिमीदृशीं व्रजन् विच्युतिं न भजते जगत्पते!।**
**सच्चिदात्मक! भवद्गुणोदयानुच्चरन्तमनिलेश! पाहि माम्॥ १५॥**

**अर्चिरादी**ति। ईदृशीमर्चिरादिगतिं व्रजन् जीवः विच्युतिं पुनरावृत्तिं न भजते। अत्र हेतुगर्भं सम्बोधनं— सच्चिदात्मकेति। हे अनिलेश! श्रीगुरुवायुपुरनाथ! जगत्पते! भवद्गुणोदयान् त्वद्गुणोत्कर्षान् उच्चरन्तं यथाशक्ति स्तुवन्तं मां पाहि आधिव्याधिसङ्कटेभ्यो रक्ष॥ १५॥

इति अष्टाङ्गयोगवर्णनं योगसिद्धिवर्णनं च

**चतुर्थं दशकं सपञ्चकम्।**

---

एवं शुद्धसत्त्वमयमूर्त्युपासनां फलपर्यन्तामुपपाद्य तस्यामनधिकारिणां विश्वमूर्तीशोपासनां दर्शयिष्यन्नादौ भगवतः स्थूलशरीरस्योत्पत्त्युपपत्तये तस्य प्रागभावं दर्शयति —

**व्यक्ताव्यक्तमिदं न किञ्चिदभवत् प्राक् प्राकृतप्रक्षये**
**मायायां गुणसाम्यरुद्धविकृतौ त्वय्यागतायां लयम्।**

---

१. 'नाह' क. ग. पाठः. २. 'तिप' क. ग. पाठः. ३. 'हान्' ख. पाठः. ४. 'या विशन् त' ख. पाठः. ५. 'द्भावेन वि' क. ग. पाठः, 'त्तया प्रवि' ख. पाठः. ६. 'न् त' ख. पाठः. ७. 'ण सह प्र' क. ग. पाठः. ८. 'ष्टः सन्नि' क. ग. पाठः. ९. 'क्षेत्यर्थः।' क. पाठः.

**नो मृत्युश्च तदामृतं च समभून्नाह्नो न रात्रेः स्थिति-**
**स्तत्रैकस्त्वमशिष्यथाः किल परानन्दप्रकाशात्मना ॥ १ ॥**

**व्यक्तेति** । प्राक् पुरा प्राकृतप्रक्षये ब्रह्मप्रलये व्यक्ताव्यक्तं स्थूलसूक्ष्मात्मकं कार्यकारणात्मकं वा इदं शरीरादिकं किञ्चिन्नाभवत् । अत्र हेतुमाह—मायायां त्वयि लयमागतायामिति । मायालये हेतुमाह—गुणसाम्यरुद्धविकृताविति । गुणाः सत्त्वरजस्तमांसि, तेषां साम्यावस्थया रुद्धाः स्तम्भिता विकृतयः कार्याणि यस्यां तादृश्यां, मायाया ब्रह्मणि लीनत्वान्मायाकार्यं किञ्चिदपि तदा नासीदित्यर्थः । मृत्युः संसारः । अमृतं मोक्षः । तदा बन्धो मोक्षश्च न समभूत् । नाह्नो न रात्रेः स्थितिः मर्यादाविभागो नासीत् । तत्र तस्मिन् काले त्वमेको ब्रह्मैवाशिष्यथाः शिष्टोऽभूः । तवापि तदानीं न लीलाविग्रहपरिग्रह इत्याह — परानन्दप्रकाशात्मना सच्चिदानन्दस्वरूपेणेति । किलशब्दोऽत्रास्या अवस्थायाः तद्वाग्रूपाम्नायान्तैकवेद्यतां दर्शयति ॥ १ ॥

एतदेव प्रपञ्चयति —

**कालः कर्म गुणाश्च जीवनिवहा विश्वं च कार्यं विभो !**
**चिल्लीलारतिमेयुषि त्वयि तदा निर्लीनतामाययुः ।**
**तेषां नैव वदन्त्यसत्त्वमयि भोः ! शक्त्यात्मना तिष्ठतां**
**नो चेत् किं गगनप्रसूनसदृशां भूयो भवेत् सम्भवः ॥ २ ॥**

**काल** इति । गुणः सत्त्वादिः, कालः तत्क्षोभकः, कर्म जीवादृष्टं, जीवानां निवहाः समूहाश्च, किं बहुना विश्वम् अखिलमपि कार्यं मायाकार्यं हे विभो! सर्गस्थितिलयनिदानभूत! त्वयि चिदात्मके स्वस्वरूपानुसन्धानरूपा लीला चिल्लीला तस्यां रतिम् इच्छाम् एयुषि प्राप्तवन्ति[३], योगनिद्रामारिप्सौ[४] सतीत्यर्थः । तदैतानि निर्लीनताम् अदर्शनताम् आययुः प्राप्तवन्ति । न चात्यन्तमसत्त्वं जातमित्याह —तेषामिति । तेषां कालकर्मादीनां शशविषाणवदत्यन्तासत्त्वं नैव वदन्ति, श्रुतयस्तद्द्रष्टार इति वा शेषः । तत्रोपपत्तिमाह — शक्त्यात्मनेति । अयि भोः! भगवन्! त्वयि शक्त्यात्मना कारणरूपेण तिष्ठतां स्थितानामित्य-

---

१. 'लेल्यनेनात्र त्व' ख. पाठः. २. 'ता दर्शिता ।' ख. पाठः. ३. 'ति । त्वयि यो' क. पाठः. ४. 'प्सति स' क. पाठः.

र्थः। ननु लीनाश्चेदसन्त एवेत्याशङ्क्य विपक्षे बाधकमाह — नो चेदिति । यद्येषामसत्त्वं, तर्हि गगनकुसुमसदृशानामेतेषां भूयः प्रलयावसाने सम्भवो न भवेत् । तच्चानिष्टम् । अतस्तेषां कारणात्मना सत्त्वमङ्गीकर्तव्यमित्यर्थः ॥ २ ॥

सम्प्रति भगवतो विराण्मूर्तेरुत्पत्तिप्रकारं दर्शयत्येवमित्यष्टभिः—

**एवञ्च द्विपरार्धकालविगतावीक्षां सिसृक्षात्मिकां**
**बिभ्राणे त्वयि चुक्षुभे त्रिभुवनीभावाय माया स्वयम् ।**
**मायातः खलु कालशक्तिरखिलादृष्टं स्वभावोऽपि च**
**प्रादुर्भूय गुणान् विकास्य विदधुस्तस्याः सहायक्रियाम् ॥ ३ ॥**

**एवमिति** । एवमुक्तप्रकारेण[1] ब्रह्ममात्रावशेषेण द्विपरार्धकालस्य विगतौ अवसाने सति । अत्र चकारो द्विपरार्धपरिमितकाल एव ब्रह्मणः परमायुरिति दर्शयति। अयं भावः — अस्मादृशां संवत्सरो[2] देवानामहोरात्रः "मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवत" इति वचनात् सर्वं ज्ञेयम् । प्राकृतप्रलयस्यापि ब्रह्मायुःपरिमितद्विपरार्धकालतुल्यपरिमाणत्वमनुमेयमिति । तादृशकालविगमे सति त्वयि ब्रह्मणि सिसृक्षात्मिकामीक्षां बिभ्राणे[3] इति । ईक्षां सिसृक्षाचिन्तनादिशब्दवाच्यां मायाप्रेरणरूपां क्रियामिव बिभ्राणे अङ्गीकृतवति सति माया स्वयं चुक्षुभे चलिता ब्रह्मणः पृथगिव प्रकाशं प्राप्ता स्थिता । किमर्थं, त्रिभुवनीभावाय, प्रागतथाविधापि पुनस्त्रैलोक्यरूपेण विवर्तितुमित्यर्थः । मायातः एवं क्षुब्धाया मायायाः सकाशात् । खल्वित्यवधारणे । कालशक्तिः ईश्वरस्य कालाख्या शक्तिः । अखिलानां प्राक्तनजीवानामित्यर्थाद्, अदृष्टं सुकृतदुष्कृतरूपं स्वभावोऽपि च प्रादुर्भूयास्या गुणान् रजस्तमःसत्त्वाख्यान् विकास्य साम्यावस्थामपास्य कार्योन्मुखान् कृत्वा तस्या मायायाः सहायक्रियां त्रिभुवनीभावापत्तये परिकर्म विदधुश्चक्रुः ॥ ३ ॥

---

१. 'वं ब्र' ख. पाठः. २. 'संवत्सरैः? वासरैः षष्ठ्युत्तरशतत्रयसङ्ख्यापरिमितैः देवानामहोरात्र उच्यते । तादृशाहोरात्रैर्दिव्यसंवत्सरः । तैर्द्वादशसहस्रैश्चतुर्युगं द्विसहस्रैश्चतुर्युगैर्ब्रह्मणोऽहोरात्रः । तादृशाहोरात्रैर्ब्रह्मणः संवत्सरः । पञ्चाशद्भिः संवत्सरैर्ब्रह्मण आयुषोऽर्द्धं परार्द्धमुच्यते । तद्द्वितयं द्विपरार्द्धमिति । त्वयि' क. पाठः. ३. 'णे अ' ख. पाठः. ४. 'थग्भूय स्थि' ख. पाठः. ५. 'नामनुशयितानामदृ' क. पाठः.

एवं मायासृष्टिमुक्त्वा तत्कार्यस्य महतः सृष्टिमभिधातुं पुरुषस्वरूपमाह —

**मायासन्निहितोऽप्रविष्टवपुषा साक्षीति गीतो भवान्**
**भेदैस्तां प्रतिबिम्बतो विविशिवान् जीवोऽपि नैवापरः।**
**कालादिप्रतिबोधिताथ भवता सञ्चोदिता च स्वयं**
**माया सा खलु बुद्धितत्त्वमसृजद् योऽसौ महानुच्यते ॥ ४ ॥**

**मायेति**। मायासन्निहितो मायोपाधिकः अप्रविष्टेन तदाश्रयत्वेन बहिःस्थितेनानुपहितेन वपुषा स्वरूपेण चोपलक्षितः, एकांशेन मायामवष्टभ्य स्थित इत्यर्थः। अत्र सन्निहितशब्देन परमार्थरूपस्य परमात्मनोऽपरमार्थभूतोपाधिसम्बन्धस्यापरमार्थता द्योत्यते। एवम्भूतो भवान् सर्वप्रकाशकत्वात् साक्षीति गीतः निगमान्तैस्तद्विद्भिर्वेति शेषः। भेदैरिति यावदुपाधिभेदमात्मानं विभज्य तां मायां, तत्कृतानुपाधीनिति यावत्, प्रतिबिम्बतः प्रतिबिम्बरूपेण विविशिवान् प्रविष्टः शरीरादिष्वहमित्यभिमन्यमानो भवानेव जीवोऽपि, नापरः न त्वत्तोऽन्यो जीवः। एवं जीवेश्वरभेदेन पुरुषस्य द्वैविध्यमुक्त्वा तत्सम्बन्धे महत उत्पत्तिं दर्शयति — कालादीति। कालकर्मस्वभावैः प्रतिबोधिता संक्षोभितरजआदिगुणतया कार्योन्मुखीकृता भवता च सञ्चोदिता आहितवीर्या सती सा माया खलु बुद्धितत्त्वमसृजत् सृष्टवती, योऽसौ महानिति महत्तत्त्वमित्युच्यते। महच्छब्दसामानाधिकरण्याय पुंस्त्वनिर्देशः। तद् बुद्धितत्त्वमिति पूर्वेणान्वयः ॥ ४ ॥

ननु[1] किमिदं महच्छब्दवाच्यं, बुद्धितत्त्वमिति चेत्, तदपि किं, कीदृशं चास्य स्वरूपमित्याशङ्कायामाह —

**तत्रासौ त्रिगुणात्मकोऽपि च महान् सत्त्वप्रधानः स्वयं**
**जीवेऽस्मिन् खलु निर्विकल्पमहमित्युद्बोधनिष्पादकः।**
**चक्रेऽस्मिन् सविकल्पबोधकमहन्तत्त्वं महान् खल्वसौ**
**संपुष्टं त्रिगुणैस्तमोतिबहुलं विष्णो! भवत्प्रेरणात् ॥ २ ॥**

**तत्रेति**। तत्र मायाकार्येषु[3] असौ महान् स्वयं त्रिगुणात्मकोऽपि सत्त्वप्रधानः प्रकाशबहुलत्वाज्जीवानां समष्टिरेको महान् जीवः। यथा वृक्षाणां समष्टिर्वनम्, एवं

---

१. 'न् विष्णु स' क. पाठः. २. 'तत्स्वरूपमा' ख. पाठः. ३. 'ले' क. पाठः.

समष्ट्यात्मकेऽस्मिन् जीवे खलु निर्विकल्पं मनुष्यत्वादिविशेषणरहितं यथा भवति तथा अहमित्येवंप्रकारेण स्थितस्योद्बोधस्य ज्ञानस्य निष्पादकः कारणम् । असौ महान् महत्तत्त्वं कर्तृ हे विष्णो ! भवत्प्रेरणात् खलु भवान् हि महान्तमधिष्ठाय तं प्रेरितवान्, अतः खल्वसौ अहंतत्त्वं चक्रे । तच्चास्मिन् जीवे सविकल्पबोधकम् अहं मनुष्य इत्यादिसविकल्पकज्ञाननिष्पादकं त्रिगुणैः संपुष्टं त्रिगुणात्मकं, तथापि तमोतिबहुलम् अतितरां तमःप्रधानमित्यर्थः ॥ ५ ॥

अथाहमस्त्रैविध्यमाह —

**सोऽहं च त्रिगुणक्रमात् त्रिविधतामासाद्य वैकारिको**
**भूयस्तैजसतामसाविति भवन्नाद्येन सत्त्वात्मना ।**
**देवानिन्द्रियमानिनोऽकृत दिशावातार्कपाश्यश्विनो**
**वह्नीन्द्राच्युतमित्रकान् विधुविधिश्रीरुद्रशारीरकान् ॥ ६ ॥**

**स** इति । सः महत्कार्यभूतः अहं च अहङ्कारश्च भवन् उत्पन्नः सन् भूयः पुनः त्रिगुणक्रमात् त्रयाणां गुणानां सत्त्वं रजस्तम इत्यनेन क्रमेण वैकारिकस्तैजसस्तामस इत्यनेन क्रमेण त्रिविधतां त्रिप्रकारतामासाद्य प्राप्य सत्त्वात्मना सात्त्विकेन आद्येन वैकारिकाहङ्कारेण इन्द्रियमानिनो देवान् इन्द्रियाणामधिष्ठातृदेवान् अकृत कृतवान् । के ते इत्यत आह —दिशेति । दिग्वातार्कप्रचेतोश्विनः क्रमाच्छ्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां ज्ञानेन्द्रियाणामधिष्ठानदेवताः । तत्र चायं जीवः कर्णद्वारादिषु स्थितानां श्रोत्रादीन्द्रियाणां स्वस्वाधिष्ठानदेवताभिः प्रेरितैः श्रोत्रादीन्द्रियद्वारा निर्गच्छन्तीभिरन्तःकरणवृत्तिभिः शब्दादिविषयाननुभवति । एवं वह्नीन्द्रोपेन्द्रमित्रप्रजापतिसंज्ञाः क्रमाद् वाक्पाणिपादपायूपस्थाख्यकर्मेन्द्रियपञ्चकाधिष्ठात्र्यो देवताः । ‡तैरयं प्रेरितो जीवो वचनादानगमनविसर्गानन्दानुभवरूपाणि कर्माणि करोति । एवं चन्द्रचतुर्मुखश्रीरुद्रक्षेत्रज्ञा मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणचतुष्टयदेवताः । तैरयं सङ्कल्पनिश्चयशरीराभिमानधारणा अधिगच्छति ॥ ६ ॥

१. 'तश्रो' क. पाठः. २. 'पतिभिः प्रेरितैः वा' क. पाठः. ३. 'यैः वच' क. पाठः. ४. 'नपुरीषोत्स' क. पाठः. ५. 'न्दाननुभवति' क. पाठः. ६. 'ज्ञप्रेरितैर्म' क. पाठः. ७. 'तैरन्तःकरणवृत्तिभिः स' क. पाठः. ८. 'णा अनुभवति' क. पाठः.

‡ वह्नीन्द्रोपेन्द्रमित्रप्रजापतिभिः ।

पुनरपि वैकारिकसृष्टिमाह —

**भूमन्! मानसबुद्ध्यहङ्कृतिमिलच्चित्ताख्यवृत्त्यन्वितं**
**तच्चान्तःकरणं विभो! तव बलात् सत्त्वांश एवासृजत् ।**
**जातस्तैजसतो दशेन्द्रियगणस्तत्तामसांशात् पुन-**
**स्तन्मात्रं नभसो मरुत्पुरपते! शब्दोऽजनि त्वद्बलात् ॥ ७ ॥**

**भूमन्निति** । हे भूमन्! विभो! तव बलात् त्वत्प्रेरणात् सत्त्वांशः सात्त्विकाहङ्कार एव मानसबुद्ध्यहङ्कृतिभिः मिलन्त्या सहितया चित्ताख्यवृत्त्यान्वितं सहितं तत् सत्त्वप्रधानमन्तःकरणं चासृजत् सृष्टवान् । तैजसतः राजसाहङ्काराद् दशानां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च गणो जातः । तस्याहङ्कारस्य तामसांशात् पुनः हे मरुत्पुरपते! वातालयेश! त्वद्बलात् त्वत्प्रेरणाद् नभस आकाशस्य तन्मात्रम् अपञ्चीकृतत्वात् सूक्ष्मोऽशः शब्दः अजनि जातः ॥ ७ ॥

पुनरपि तामसाहङ्कारसृष्टिं प्रपञ्चयति —

**शब्दाद् व्योम ततः ससर्जिथ विभो! स्पर्शं ततो मारुतं**
**तस्माद् रूपमतो महोऽथच रसं तोयं च गन्धं महीम् ।**
**एवं माधव! पूर्वपूर्वकलनादाद्याद्यधर्मान्वितं**
**भूतग्राममिमं त्वमेव भगवन्! प्राकाशयस्तामसात् ॥ ८ ॥**

**शब्दादिति** । हे विभो! त्वं शब्दाद् व्योम आकाशं ससर्जिथ सृष्टवानसि । ततो व्योम्नः स्पर्शं वायुगुणं, ततः स्पर्शाद् वायुं, तस्माद् मारुताद् रूपं तेजोगुणं, अतोऽस्माद् रूपाद् महस्तेजः, अथच अनन्तरम् अर्थात् तेजसो रसम् अब्गुणं, रसात् तोयं, तोयाद् गन्धं पृथिवीगुणं, गन्धाद् महीं पृथिवीं च ससर्जिथ । एवं पूर्वपूर्वैः कलनाद् मेलनाद् उत्तरमुत्तरम् आद्याद्यधर्मैरन्वितमिति । अत्रायमर्थः — आकाशं शब्दगुणकं, वायुः शब्दस्पर्शगुणकः, तेजः शब्दस्पर्शरूपगुणकं, जलं शब्दस्पर्शरूपरसगुणकं, पृथिवी शब्दस्पर्शरूपरसगन्धवतीति । हे भगवन्! भजनीयगुण! हे माधव! श्रीपते! त्वमेवेमं भूतग्रामं सगुणमहाभूतपञ्चकं तामसात् तामसाहङ्कारात् प्राकाशयः प्रकाशितवानसि ॥ ८ ॥

सम्प्रत्येतैस्तत्त्वैर्भगवतो ब्रह्माण्डनिर्माणप्रकारमाह —

**एते भूतगणास्तथेन्द्रियगणा देवाश्च जाताः पृथङ्**
**नो शेकुर्भुवनाण्डनिर्मितिविधौ देवैरमीभिस्तदा ।**
**त्वं नानाविधसूक्तिभिर्नुतगुणस्तत्त्वान्यमून्याविशं-**
**श्चेष्टाशक्तिमुदीर्य तानि घटयन् हैरण्यमण्डं व्यधाः ॥ ९ ॥**

**एत** इति । एते पूर्वोक्ता भूतगणाः शब्दादिसूक्ष्मभूतानां व्योमादिमहाभूतानां च गणा दशकं, तथेन्द्रियगणा ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि अन्तरिन्द्रियवृत्तिभिश्च-तसृभिः सह चतुर्दश, तदधिष्ठात्र्यो देवताश्च चतुर्दश । चः समुच्चये, यद्वा अप्यर्थे । एते जाता अपि भुवनाण्डनिर्मितिविधौ ब्रह्माण्डनिर्माणव्यापारे पृथक् पृथग्भूत-त्वाद् नो शेकुः नाशक्नुवन् । यदा न शेकुः, तदा अमीभिर्देवैश्चतुर्दशभिः नाना-विधाभिः सूक्तिभिः स्तोत्रैर्नुतगुणस्त्वम्[1] । अयं भावः — मायासृष्ट्यनन्तरमेव त-च्छुद्धसत्त्वांशेनाङ्गीकृतलीलाविग्रहं त्वामेते देवाः सूक्तिभिः स्तुतवन्त इति । तदर्थ-नया चामूनि तत्त्वान्याविशन् प्रविशन् तेषां तत्त्वानां चेष्टाशक्तिमुदीर्य क्रियासाम-र्थ्यमुत्पाद्य तानि मिथो घटयन् गुणप्रधानभावेन संयोजयन् हैरण्यं प्रकाशबहुलतया सुवर्णपिण्डवदत्युज्ज्वलम् अण्डं ब्रह्माण्डाख्यं स्वशरीरं व्यधाः निर्मितवानसी-त्यर्थः ॥ ९ ॥

**अण्डं तत् खलु पूर्वसृष्टसलिलेऽतिष्ठत् सहस्रं समा**
**निर्भिन्दन्नकृथाश्चतुर्दशजगद्रूपं विराडाह्वयम् ।**
**साहस्रैः करपादमूर्धनिवहैर्निश्शेषजीवात्मको**
**निर्भातोऽसि मरुत्पुराधिप! स मां त्रायस्व सर्वामयात् ॥ १० ॥**

**अण्डमिति** । तत् खलु तदचेतनमेवाण्डं पूर्वसृष्टसलिले आवरणोदके सहस्रं समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । अतिष्ठत् स्थितमभूत् । ततश्च त्वं स्वांशेन तत् प्रविश्य निर्भिन्दन् विविधं विभजन् चतुर्दशजगद्रूपं विविधं राजमान-त्वाद् विराट्संज्ञकं शरीरमकृथाः कृतवानसि । ततः साहस्रैः सहस्रसङ्ख्यापरिमितैः करपादमूर्धाद्यवयवानां निवहैः समूहैः निश्शेषजीवात्मकः निश्शेषाणां चराचराणां जीवः समष्ट्यात्मक एवात्मा स्वरूपं यस्य स निश्शेषजीवात्मको हिरण्यगर्भः,

१. 'ताः स्तुता गुणा यस्य स त्वं नुतगुणः । अ' क. पाठः. २. 'तश्च त्वमम्' क. पाठः. ३. 'पुरटपि' क. पाठः.

तथाविधस्त्वं निर्भातोऽसि । हे मरुत्पुराधिप! स त्वं सर्वामयात् सर्वस्माद् बाह्या-दाभ्यन्तराच्च रोगाद् मां त्रायस्व रक्षतादित्यर्थः ॥ १० ॥

इति विराट्पुरुषोत्पत्तिप्रकारवर्णनं

पञ्चमं दशकम् ।

---

एवं भगवतो विराडाह्वयस्य स्थूलशरीरस्योत्पत्तिं प्रदर्श्य सम्प्रत्युपासनार्थं तदवयवभेदकल्पनाप्रकारमाह—

**एवं चतुर्दशजगन्मयतां गतस्य**
**पातालमीश! तव पादतलं वदन्ति ।**
**पादोर्ध्वदेशमपि देव! रसातलं ते**
**गुल्फद्वयं खलु महातलमद्भुतात्मन्! ॥ १ ॥**

**एवमिति** । हे ईश! एवम् उक्तप्रकारेण चतुर्दश जगन्ति लोकाः तन्मयतां तन्निर्मितशरीरतां गतस्य तव पादतलं पातालं वदन्ति । उपासनाविदो मुनय इति शेषः । पादोर्ध्वदेशं प्रपदयुगलम् । अद्भुता आत्मानः शरीराणि यस्य सोऽद्भुतात्मा ॥ १ ॥

**जङ्घे तलातलमथो सुतलं च जानू**
**किञ्चोरुभागयुगलं वितलातले द्वे ।**
**क्षोणीतलं जघनमम्बरमङ्ग! नाभि-**
**र्वक्षश्च शक्रनिलयस्तव चक्रपाणे! ॥ २ ॥**

**जङ्घे** इति । ऊरुभागयुगलमिति ऊर्वोरधोभागो वितलम् ऊर्ध्वभागोऽतलमित्यर्थः । क्षोणीतलं जघनं कटीतटम् । जघनशब्दनिर्देशस्तु भगवत्कटितटस्य सौन्दर्यविवक्षया, 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्युक्तत्वात् । अङ्ग! हे भगवन्! शक्रनिलयः स्वर्गस्तव वक्षश्च हे चक्रपाणे! ॥ २ ॥

**ग्रीवा महस्तव मुखं च जनस्तपस्तु**
**फालं शिरस्तव समस्तमयस्य सत्यम् ।**
**एवं जगन्मयतनो! जगदाश्रितैर-**
**प्यन्यैर्निबद्धवपुषे भगवन्! नमस्ते ॥ ३ ॥**

ग्रीवेति । तव ग्रीवा कण्ठदेशः महः महर्लोकः जनो जनलोकः तपस्तपोलोकः फालं ललाटं समस्तमयस्य विश्वात्मनः सत्यं सत्यलोकः हे जगन्मयतनो! विश्वमूर्ते! एवम् उक्तप्रकारेणैव जगदाश्रितैरन्यैर्वक्ष्यमाणैश्च निबद्धं सम्पूर्णावयवत्वेन सम्पादितं वपुर्यस्य स निबद्धवपुः । हे भगवन्! तस्मै ते नमोऽस्तु ॥ ३ ॥

जगदाश्रितैरन्यैरपि निबद्धवपुष इत्युक्तम् । तदेव प्रपञ्चयति—

त्वद्ब्रह्मरन्ध्रपदमीश्वर! विश्वकन्द-
च्छन्दांसि केशव! घनास्तव केशपाशाः ।
उल्लासिचिल्लियुगलं द्रुहिणस्य गेहं
पक्ष्माणि रात्रिदिवसौ सविता च नेत्रे ॥ ४ ॥

त्वदिति । हे ईश्वर! विश्वकन्द! जगत्कारणभूत! तव ब्रह्मरन्ध्रं द्वादशान्तं, तदेव पदं स्थानं छन्दांसि वेदा एव । घना मेघाः तव केशपाशाः । उल्लासिचिल्लियुगलं शोभनशीलं भ्रूयुगं द्रुहिणस्य ब्रह्मणो गेहं गृहम् । पक्ष्माणि ऊर्ध्वाधस्तनाक्षिरोमाणि क्रमाद् रात्रिदिवसौ । नेत्रे नयनेन्द्रिययुगं सविता सूर्यः । चकारोऽनुक्तसमुच्चयार्थः । अतः साङ्ख्ययोगौ मकरकुण्डले, आतपत्रं विकुण्ठनिलय इत्याद्यन्वेष्टव्यम् ॥ ४ ॥

निश्शेषविश्वरचना च कटाक्षमोक्षः
कर्णौ दिशोऽश्वियुगलं तव नासिके द्वे ।
लोभत्रपे च भगवन्नधरोत्तरोष्ठौ
तारागणाश्च रदनाः शमनश्च दंष्ट्रा ॥ ५ ॥

निश्शेषेति । तव निश्शेषविश्वरचना चतुर्दशलोकनिर्माणं कटाक्षमोक्षः । तव कर्णौ दिशः । अश्विनौ तव नासिके द्वे । लोभस्तवाधरोष्ठः । त्रपा तवोत्तरोष्ठः । हे भगवन्! तारागणा नक्षत्रपङ्क्तयस्तव रदनाः दन्ताः । शमनो यमस्तव दंष्ट्रा ॥ ५ ॥

---

१. 'तें भगवन् ए' ख. पाठः. २. 'दल घ' क. पाठः. ३. 'बा ड' क. पाठः.

**माया विलासहसितं श्वसितं समीरो**
**जिह्वा जलं वचनमीश! शकुन्तपङ्क्तिः ।**
**सिद्धादयः स्वरगणा मुखरन्ध्रमग्नि-**
**र्देवा भुजाः स्तनयुगं तव धर्मदेवः ॥ ६ ॥**

**मायेति** । तव विलासहसितं लीलास्मितं माया । समीरो वायुः श्वसितं श्वासः । तव जिह्वा जलम् । हे ईश ! ईश्वर ! तव वचनं शकुन्तपङ्क्तिः पक्षिसमूहः । सिद्धादयः सिद्धविद्याधरचारणादयः तव स्वरगणाः स्वराणां श्रुतिभेदभिन्ना गणाः षड्जादयः । मुखरन्ध्रमास्यम् अग्निः । देवा इन्द्रादयस्तव भुजाः । धर्मदेवः देवतामूर्तिर्धर्मस्तव स्तनयुगम् ॥ ६ ॥

**पृष्ठं त्वधर्म इह देव! मनः सुधांशु-**
**रव्यक्तमेव हृदयाम्बुजमम्बुजाक्ष! ।**
**कुक्षिः समुद्रनिवहा वसनं तु सन्ध्ये**
**शेफः प्रजापतिरसौ वृषणौ च मित्रः ॥ ७ ॥**

**पृष्ठमिति** । पृष्ठं त्वधर्मः । हे देव! द्योतनशील! इह अस्मिन् रूपे सुधांशुश्चन्द्रः तव मनः । तव हृदयाम्बुजमव्यक्तमेव सत्त्वादिगुणत्रयसाम्यं प्रधानमेव । हे अम्बुजाक्ष ! समुद्रनिवहाः समुद्रसमूहास्तव कुक्षिः उदरम् । प्रातःसायंसन्ध्ये तु तव वसनं वासोयुगलम् । प्रजापतिर्ब्रह्मा तव शेफः मेढ्रम् । असौ मित्रः तव वृषणौ ॥ ७ ॥

**श्रोणीस्थलं मृगगणाः पदयोर्नखास्ते**
**हस्त्युष्ट्रसैन्धवमुखा गमनं तु कालः ।**
**विप्रादिवर्णभवनं वदनाब्जबाहु-**
**चारूरुयुग्मचरणं करुणाम्बुधे! ते ॥ ८ ॥**

**श्रोणीति** । तव श्रोणीस्थलं मृगगणाः । ते तव पदयोर्नखाः हस्त्युष्ट्रसैन्धवमुखाः । सैन्धवोऽश्वः । तव गमनं तु कालः । हे करुणाम्बुधे ! एवंविधमूर्त्युपासनायां मयि तव कृपया भाव्यमिति भावः । वदनाब्जं बाहुश्च चारु सुन्दरमूरुयुग्मं च चरणौ च, तेषां द्वन्द्वः । प्राण्यङ्गत्वादेकवचनम् । ते तव वदनाब्जादिकं विप्रादीनां

वर्णानां भवनं स्थानम् । विप्राणां स्थानं तव मुखं, क्षत्रियाणां स्थानं तव बाहुः, वैश्यानां स्थानं तवोरुयुग्मम्, शूद्राणां स्थानं तव चरणौ चेत्यर्थः ॥ ८ ॥

**संसारचक्रमयि चक्रधर! क्रियास्ते**
**वीर्यं महासुरगणोऽस्थिकुलानि शैलाः।**
**नाड्यः सरित्समुदयास्तरवश्च रोम**
**जीयादिदं वपुरनिर्वचनीयमीश! ॥ ९ ॥**

**संसारे**ति। अयि चक्रधर! ईश! सर्वनियन्तः! संसारो जननमरणादिदुःखं, तदेव परिवृत्तिसाम्याच्चक्रं ते क्रियाः अभिज्ञाभिवदनोपादानार्थक्रियारूपाः। महतामसुराणां गणः समूहः तव वीर्यं पराक्रमः। तवास्थिनखानि अस्थिकुलानीति वा पाठः[1], शैलाः पर्वताः। नाड्यः सिराः सरित्समुदया नदीततयः। रोम तनूरुहाणि तरवो वृक्षाः। चोऽनुक्तसमुच्चये। इदम् ईदृशं वपुरनिर्वचनीयम् अपरिच्छेद्यं जीयात् सर्वोत्कर्षेण सहाविष्कुरुतादित्यर्थः ॥ ९ ॥

एवं विश्वमूर्त्युपासनासिद्धये भगवद्रूपं विमृश्यास्यामुपासनायामधिकारिण आह—

**ईदृग् जगन्मयवपुस्तव कर्मभाजां**
**कर्मावसानसमये स्मरणीयमाहुः।**
**तस्यान्तरात्मवपुषे विमलात्मने ते**
**वातालयाधिप! नमोऽस्तु निरुन्धि रोगान् ॥ १० ॥**

**ईदृगि**ति। ईदृग् उक्तप्रकारं तव जगन्मयवपुः विराड्रूपं कर्मभाजां कर्मावसानसमये स्मरणीयमाहुः। कर्माणि[2] श्रवणस्मरणकीर्तनादीनि भक्त्यङ्गानि भजन्तीति कर्मभाजः साधनभक्त्यधिकारिणः, तेषां कर्मणः षोडशोपचारायाः पूजाया अवसानसमये स्मरणीयं स्मर्तुं शक्यम्। तदन्या निष्कलोपासना शरीराभिमानिभिरशक्येत्यर्थः। तदुक्तमर्जुनाय[3] विश्वरूपं प्रदर्श्य 'मय्येव मन आधत्स्व' (गी. १२.८) इति, 'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' (गी. १२.५) इति च। एवं त्रिगुणात्मकविश्वमूर्त्युपासकः क्रमाच्छुद्धसत्त्वमयमूर्त्युपासनायामधिक्रियत इ-

१. 'स्याम' ख. पाठः. २. 'र्माणि' क. पाठः. ३. 'य भगवान् वि' ख. पाठः.

ति दर्शयन् भगवन्तं प्रार्थयते—तस्येति । तस्य तादृशस्य विराजः अन्तरात्मवपुषे अन्तर्यामिरूपाय विमलात्मने शुद्धसत्त्वमयमूर्तये ते तुभ्यं नमोऽस्तु । हे वातालयाधिप ! एवं क्रमादुपासनासामर्थ्याय मम रोगान् निरुन्धि नाशयेत्यर्थः ॥१०॥

इति विराड्देहस्य जगदात्मत्ववर्णनं

षष्ठं दशकम् ।

---

एवं त्रिगुणात्मके भगवद्रूपे स्थिरमनसो द्विगुणात्मकहिरण्यगर्भाख्यभगवद्रूपं दर्शयति —

**एवं देव ! चतुर्दशात्मकजगद्रूपेण जातः पुन-**
**स्तस्योर्ध्वं खलु सत्यलोकनिलये जातोऽसि धाता स्वयम् ।**
**यं शंसन्ति हिरण्यगर्भमखिलत्रैलोक्यजीवात्मकं**
**योऽभूत् स्फीतरजोविकारविकसन्नानासिसृक्षारसः ॥ १ ॥**

**एवमिति** । अत्रायमभिप्रायः — स्थूलसूक्ष्मक्रमेण हि बुद्धयोऽर्थमवगाहन्त इति प्रथमं त्रिगुणात्मके भगवद्रूपे मनः प्रणिधाय तत्र स्थिरं सद् द्विगुणात्मके, ततः परं सत्त्वैकगुणे, ततश्च निर्गुणे सूक्ष्मे ब्रह्मणि प्रवेश्य निरतिशयानन्दलाभेन कृतकृत्यतामेतीति । हे देव ! एवं चतुर्दशात्मकजगद्रूपेण जातस्त्वं स्वयं खलु त्वमेव पुनरनन्तरं तस्य जगत ऊर्ध्वम् उपरि सत्यलोकनिलये धाता जातोऽसि । यं त्वां हिरण्यगर्भं शंसन्ति, शास्त्रविद इति शेषः । यतोऽखिलत्रैलोक्यस्य विराजो जीवः पञ्चप्राणमनोबुद्धिदशेन्द्रियात्मकलिङ्गशरीरसमष्ट्यभिमानी, तदात्मकं तत्स्वरूपम् । यः स्फीतैः प्रवृद्धैः रजोविकारैः रजोगुणकार्यैः अत्र भेदबुद्धिरुपकारबुद्धी रागादयश्च रजःकार्याणि तैर्विकसन् आविर्भवन् नाना सुरनरतिर्यगादिशरीराणि तद्भोग्यानि च स्रष्टुमिच्छा सिसृक्षा तस्यां रस आग्रहो यस्य स विकसन्नानासिसृक्षारसः । अत्र ब्रह्ममूर्तिर्विश्वकर्मशास्त्रे दर्शिता —

"हंसारूढा चतुर्वक्त्रा तप्तकाञ्चनसन्निभा ।
शुक्लवस्त्रा लम्बकर्णकूर्चसौम्या चतुर्भुजा ॥

तुन्दिला सोत्तरीयोपवीता योगपदासना ।
जटामकुटशोभाढ्या पिङ्गलाक्षी वरप्रदा ॥

कमण्डलाक्षसूत्रस्रुक्स्रुवपुस्तकधारिणी ।
प्रसन्ना ब्रह्मणो मूर्तिश्चिन्तनीया सुरैरपि" ॥ १ ॥

**सोऽयं विश्वविसर्गदत्तहृदयः संपश्यमानः स्वयं**
**बोधं खल्वनवाप्य विश्वविषयं चिन्ताकुलस्तस्थिवान् ।**
**तावत् त्वं जगतां पते ! तप तपेत्येवं हि वैहायसीं**
**वाणीमेनमशिश्रवः श्रुतिसुखां कुर्वंस्तपःप्रेरणाम् ॥ २ ॥**

**स** इति । सोऽयं विश्वेषां चराचराणां विसर्गे गुणवैषम्याद् विविधे सर्गे सृष्टौ दत्तहृदयः उत्साही सन् स्वयं संपश्यमानो जिज्ञासमानो विचारयन् विश्वविषयं बोधं किमाश्रयं किं वा कीदृग् वाहं सृजामीत्यजानन् चिन्ताकुलस्तस्थिवान् तस्थौ । हे जगतां पते ! लोकोत्पत्तिस्थितिलयकुशल ! तावत् तस्मिन्नवसरे त्वमेनं ब्रह्माणं तप तपेत्येवं वाणीं तपसि प्रेरणात्मकं विधिं कुर्वन् अशिश्रवः श्रावितवानसि । कीदृशीं वैहायसीं विहायस्यभिव्यक्ताम्, अदर्शितशरीरामित्यर्थः । अथापि श्रुतिसुखां श्रोत्रानन्ददायिनीम् ॥ २ ॥

[१]तद्वचनानन्तरं विधेः प्रवृत्तिमाह—

**कोऽसौ मामवदत् पुमानिति जलापूर्णे जगन्मण्डले**
**दिक्षूद्वीक्ष्य किमप्यनीक्षितवता वाक्यार्थमुत्पश्यता ।**
**दिव्यं वर्षसहस्रमात्ततपसा तेन त्वमाराधित-**
**स्तस्मै दर्शितवानसि स्वनिलयं वैकुण्ठमेकाद्भुतम् ॥ ३ ॥**

**कोऽसाविति** । जगन्मण्डले जलापूर्णे सति कोऽसौ पुमान् मामवदत् । जलमात्रशेषे जगति सति मां कश्चिदन्तर्हितोऽयमीदृशीं गिरमुक्तवान् किल । स पुमान् कः । न च कोऽपि नास्तीति शक्यं वक्तुम् । असौ इति । व्यक्तस्य वचसः श्रवणात् कोऽपि वक्तास्तीत्यनुमीयत एव । अतः स द्रष्टव्य इति दिक्षु चतसृषूद्वीक्ष्य तद्वक्तृदिदृक्षया स्वस्थानादुत्थाय परिक्रामन् मुखमुन्नमय्यावलोक्य किमप्यनीक्षितवता न केवलं वक्तारं पुमांसं, जलादन्यत् किञ्चिदपि वस्त्वदृष्टवता तेन पुनस्तद्वाक्यार्थं विचार्योत्पश्यता जानता त्वं तपश्चर, ततस्ते सृष्टि-

---

१. 'एवं तपसि भगवत्प्रेरणान' क. पाठः.

सामर्थ्यं भविष्यतीति मां प्रतीदमीश्वरप्रेरणामिति निश्चिन्वानेनेत्यर्थः । अनन्तरं च स्वधिष्ण्यमेवाधिष्ठाय दिव्यं वर्षसहस्रमित्यत्यन्तसंयोगे द्वितीया । आत्तं स्वीकृतम् अनुष्ठितमिति यावत्, तपो येन तादृशेन तेन ब्रह्मणा आराधितः सेवितस्त्वं तस्मै ब्रह्मणे स्वनिलयं स्वधिष्ण्यभूतं वैकुण्ठं वैकुण्ठलोकं दर्शितवानसि । कीदृशम् एकाद्भुतम्, एकं मुख्यमद्भुतम् आश्चर्यम् । यस्मादद्भुतान्तरं नास्ति, तदेकाद्भुतं तादृशमित्यर्थः ॥ ३ ॥

एकाद्भुतत्वं प्रतिपादयति मायेति त्रिभिः—

**माया यत्र कदापि नो विकुरुते भाते जगद्भ्यो बहिः**
**शोकक्रोधविमोहसाध्वसमुखा भावास्तु दूरं गताः ।**
**सान्द्रानन्दझरी च यत्र परमज्योतिःप्रकाशात्मके**
**तत् ते धाम विभावितं विजयते वैकुण्ठरूपं विभो ! ॥ ४ ॥**

**मायेति** । यत्र यस्मिन् वैकुण्ठनिलये माया कदापि ब्रह्मण उत्पत्तौ प्रलयेऽपि नो विकुरुते आत्मनः शरीरादेर्वेश्वरात् पृथक्त्वेन प्रदर्शनरूपं कार्यं न करोतीत्यर्थः । तथाच सति कामक्रोधादिसम्भवाभावः किमु वक्तव्य इत्याह— शोकक्रोधविमोहसाध्वसमुखा भावास्तु दूरं गता इति । शोकः पीडा, क्रोधोऽमर्षः, विमोहः शरीरादिष्वहंममाभिमानः, साध्वसं मरणादिभयम् एतदाद्या भावाः पदार्थास्तु दूरं गताः, यस्मादिति शेषः । यत्र च सान्द्रस्य घनीभूतस्यानन्दस्य झरी प्रवाहः, वर्तत इत्यर्थात् । यत्र स्थितानां सर्वदा ब्रह्मानन्दानुभव एव भवतीत्यर्थः । ननु सत्यलोकेऽप्यस्ति लेशतः शोकः । तदेकदेशश्चेद् वैकुण्ठलोकः, कथंकारं क्लेशलेशराहित्यमित्याशङ्कायामाह—जगद्भ्यो बहिर्भात इति । चतुर्दशभ्यो लोकेभ्यो बहिर्भाते शोभित इत्यर्थः । अत एव परमज्योतिःप्रकाशात्मके, नात्रादित्यचन्द्रादिज्योतिषां प्रकाशः, किन्तु तेषामपि प्रकाशकं ज्योतिः परमज्योतिः, आदित्यादिप्रकाशकत्वप्रदं ज्योतिर्ब्रह्म, तदेव प्रकाशो यत्र स परमज्योतिःप्रकाशः, तदात्मके तादृशस्वरूपे । हे विभो! विश्वव्यापिन्! विभावितं

---

१. 'स्यादित्यहं श्रीनारायणेन प्रेरितस्तस्य वाक्यमेतदिति निश्चिन्वतेत्यर्थः' क. ग. पाठः. २. 'रं स्व' ख. पाठः. ३. 'मात्तेन चीर्णेन तपसा अष्टाङ्गयोगेन, आत्तं तपो येनेति वा विग्रहः । तेन ब्रह्मणा त्वमीश्वर आराधितः सेवितः, ततस्त्वं तस्मै ब्रह्मणे वैकुण्ठाख्यं स्वनिलयं द' क. ग. पाठः. ४. 'तं य' क. ग. पाठः. ५. 'तम् ॥' ख. पाठः.

त्वया ब्रह्मणे दर्शितं तत् तथाविधं वैकुण्ठरूपं वैकुण्ठाख्यं ते तव धाम विजयते सर्वोत्कृष्टत्वेन वर्तत इत्यर्थः ॥ ४ ॥

**यस्मिन् नाम चतुर्भुजा हरिमणिश्यामावदातत्विषो**
**नानाभूषणरत्नदीपितदिशो राजद्विमानालयाः ।**
**भक्तिप्राप्ततथाविधोन्नतपदा दीव्यन्ति दिव्या जना-**
**स्तत् ते धाम निरस्तसर्वशमलं वैकुण्ठरूपं जयेत् ॥ ५ ॥**

**यस्मिन्निति** । यस्मिन् लोके दिव्याः शुद्धसत्त्वमयमूर्तयो भक्ता जना भवत्सारूप्यं प्राप्ता दीव्यन्ति द्योतन्ते । ननु किं कुर्वन्तो वैकुण्ठं गमिष्यन्तीत्यत आह — भक्तीति । फलाभिसन्धिरहितया प्रेमलक्षणया भक्त्या प्राप्तं लब्धं तथाविधम् उन्नतं च पदं स्थानं यैस्ते, तादृशाः सन्तो दीव्यन्तीति भगवत्सारूप्यस्य प्राप्तिः कर्मणा न भवतीति द्योतयितुम् । भगवत्सारूप्यमेवाह — **चतुर्भुजा** इत्यादि । हरिमणिरिन्द्रनीलमणिः, तद्वच्छ्यामा चासाववदाता स्वच्छा च त्विट् शोभा येषां ते । किञ्च, नानाविधेषु भूषणेषु मकुटमकरकुण्डलमञ्जीरादिषु प्रत्युप्तानीत्यर्थाद्, यानि रत्नानि तैर्दीपितदिशो द्योतितदिगन्तरालाः । राजन्ति मणिकिङ्किणीजालमालावितानादिभिः शोभमानानि विमानानि व्योमयानानि आलया येषां ते, तादृशाश्च सन्तो दीव्यन्ति । यत्रैवं, तत् तादृशं ते तव निरस्तानि पराकृतानि सर्वाणि शमलान्यज्ञानतत्कार्याणि येन तद् वैकुण्ठरूपं धाम जयेत् सर्वोत्कृष्टतया प्रकाशतामित्यर्थः ॥ ५ ॥

**नानादिव्यवधूजनैरभिवृता विद्युल्लतातुल्यया**
**विश्वोन्मादनहृद्यगात्रलतया विद्योतिताशान्तरा ।**
**त्वत्पादाम्बुजसौरभैककुतुकाल्लक्ष्मीः स्वयं लक्ष्यते**
**यस्मिन् विस्मयनीयदिव्यविभवा तत् ते पदं देहि मे ॥ ६ ॥**

**नानेति** । यस्मिन् त्वत्पादाम्बुजयोः सौरभे सौरभ्ये एककुतुकाद् अव्यभिचारिणः कौतुकादेव हेतोः लक्ष्मीः विश्वमाता महालक्ष्मीर्भगवती स्वयं स्वात्मना

---

१. 'ष्टं भवतील' क. ग. पाठः. २. 'स्ते भक्तिप्राप्ततथाविधोन्नतपदाः । न कर्मभिस्तां गतिं गमिष्यन्तीत्यर्थः । भ' क. पाठः. ३. 'तुं तान् जनान् विशिनष्टि — च' ख. पाठः. ४. 'मूर्तिधरा ल' क. पाठः.

लक्ष्यते । तत्रत्यानां नयनगोचरीभवति । कीदृशी, नानादिव्यवधूजनैः बहुविधदिव्याङ्गनासहस्रैरभिवृता परिवारिता । विद्युल्लतातुल्यया सुधालिप्तविद्युत्समया । विश्वोन्मादनहृद्या चासौ गात्रलता चेति कर्मधारयः, तया करणेन विद्योतिताशान्तरा प्रकाशितदिगन्तराला सती । किञ्च, विस्मयनीया इतरत्रादृष्टश्रुतपूर्वाः दिव्याः सात्त्विका विभवा उपकरणानि यस्याः सा तादृशी च सती लक्ष्यत इति । अथ विस्मयनीयदिव्यविभवमिति चेत् पाठः, तदा ते तत् पदमिति सम्बन्धः । तन्मे देहि तद् वैकुण्ठपदं मामत्युत्सुकं प्रापय, का ते हानिरिति शेषः ॥ ६ ॥

प्रसङ्गे सति पद्यत्रयेण वैकुण्ठपदं वर्णयित्वा स्वस्य तत्प्राप्त्युत्कण्ठामपि प्रकाश्य प्रकृतेऽवतरति—

**तत्रैवं प्रतिदर्शिते निजपदे रत्नासनाध्यासितं**
**भास्वत्कोटिलसत्किरीटकटकाद्याकल्पदीप्राकृति ।**
**श्रीवत्साङ्कितमात्तकौस्तुभमणिच्छायारुणं कारणं**
**विश्वेषां तव रूपमैक्षत विधिस्तत् ते विभो! भातु मे ॥ ७ ॥**

तत्रेति । तत्र तस्मिन् एवम् उक्तप्रकारेण प्रतिदर्शिते प्रसादेन प्रकाशिते, त्वयेति शेषः । निजपदे आत्मलोके विधिर्ब्रह्मा तव रूपमैक्षत दृष्टवान् । कीदृशं तदित्यत आह—रत्नासनाध्यासितं मणिसिंहासनोपविष्टं । भास्वदिति । कोटिसङ्ख्यापरिमितादित्यबिम्बसन्निपातवल्लसद्भिः शोभमानैः किरीटकटकादिभिराकल्पैर्भूषणैर्दीप्रा आकृतिर्यस्य तत्, श्रीवत्सेन भृगुपदन्यासाङ्केनाङ्कितम्, आत्तस्य स्वीकृतस्य कौस्तुभमणेः कौस्तुभाख्यरत्नस्यच्छायया शोभया सर्वाङ्गीणया अरुणं पाटलं प्राप्तपरभागमित्यर्थः, विश्वेषां चराचराणां कारणम् उपादानकारणभूतं यत्, तद् रूपं ब्रह्मा दृष्टवान् । हे विभो! विश्वव्यापिन्! तत् तादृशं ते तव रूपं मे भातु ममापि प्रत्यक्षं भवतु । इदमत्राकूतं—स्वस्थानास्थिताय ब्रह्मणे यः प्रसीदन् आत्मीयमद्भुतं वैकुण्ठलोकं, तत्र रत्नगृहे मणिमयासनोपविष्टं प्रकृष्टदिव्याकल्पप्रभापटलपाटलं स्वरूपं च [यः?] प्रदर्शितवानसि, तस्य ते मत्पुरतोऽप्येवं प्रादुर्भवितुं प्रयासो नास्त्येव । अतोऽहं प्रार्थयेतरां तन्मे भात्विति ॥ ७ ॥

---

१. 'तद्वदत्युज्ज्वलया' क. पाठः. २. 'नि अलङ्कारादीनि य' क. पाठः. ३. 'येत्यर्थः ॥ तत्रै' क. ग. पाठः. ४. 'तु ॥ किञ्च, काला' क. ग. पाठः.

यद्यप्येतावत् पुण्यं मम नास्ति, तथाप्येतत् प्रार्थय इत्याह—

**कालाम्भोदकलायकोमलरुची*चक्रेण चक्रं दिशा-**
**मावृण्वानमुदारमन्दहसितस्यन्दप्रसन्नाननम् ।**
**राजत्कम्बुगदारिपङ्कजधरश्रीमद्भुजामण्डलं**
**स्रष्टुस्तुष्टिकरं वपुस्तव विभो! मद्रोगमुद्वासयेत् ॥ ८ ॥**

कालेति । कालाम्भोदवत् कलायकुसुमवच्च कोमला या रुच्यः शोभाः, तासां चक्रेण मण्डलेन दिशां चक्रं मण्डलम् आवृण्वानम् आच्छादयद् उदारस्य अतिमनोहरस्य मन्दहासितस्य स्यन्देन निरन्तरप्रसरेण प्रसन्नमाननं यत्र, तत् तथा विराजमानशङ्खगदाचक्राम्बुजधारि श्रीमत् शोभानित्ययुक्तं भुजामण्डलं यस्मिंस्तत् स्रष्टुर्ब्रह्मणः तुष्टिकरं हे विभो! तव वपुर्मद्रोगं ममामयम् उद्वासयेद् उच्चाटयेद् मम मनसि त्वद्रूपमाविर्भवेद् यदि, मद्रोगाः पातकहेतुकाः पलायेरन्नेव ।

"स्मृते मनसि गोविन्दे दूरतो यान्ति पातकाः ।
उदयाचलमारूढे दिननाथे तमो यथा ॥"

इति वचनादिति तदप्याशास्यत इत्यर्थः ॥ ८ ॥

प्रसङ्गवशादौत्सुक्येनैवमाशास्य प्रस्तुतमविस्मरन्नाह—

**दृष्ट्वा सम्भृतसम्भ्रमः कमलभूस्त्वत्पादपाथोरुहे**
**हर्षावेशवशंवदो निपतितः प्रीत्या कृतार्थीभवन् ।**
**जानास्येव मनीषितं मम विभो! ज्ञानं तदापादय**
**द्वैताद्वैतभवत्स्वरूपपरमित्याचष्ट तं त्वां भजे ॥ ९ ॥**

दृष्ट्वेति । कमलभूः ब्रह्मा तव तद् वपुर्दृष्ट्वा सम्भृतसम्भ्रमः झटिति कर्तव्येषूपचारपूजानतिनुत्यादिष्विति कर्तव्यतामौढ्यमापादयता सम्भ्रमेण काञ्चित् कालं किञ्चिदपि कर्तुमक्षमोऽवस्थितः सन् हर्षस्य भगवत्सन्निधानजन्यस्यावेशस्य वशंवदः अधीनश्च सन् त्वत्पादपाथोरुहे तव पादाब्जे निपतितः साष्टाङ्गं दण्डवत् पतितः । पुनश्चोत्थाय प्रीत्या कृतार्थीभवन्नित्याचष्ट उक्तवान् । हे विभो! त्वं मम मनीषितं हृद्गतं जानास्येव, सर्वजनबुद्धिसाक्षित्वात् । तथापि वक्ष्यामीत्यभिप्रायेणाह —

* कृदिकारादक्तिन इति ङीष् ।

द्वैताद्वैतं यद् भवत्स्वरूपं परावरे ब्रह्मणी, तत्परं तद्विषयं तद् यथार्थं ज्ञानम् आपादय मय्यनुग्रहेणोत्पादयेति यमाचष्ट, तं त्वां भजे ॥ ९ ॥

**आताम्रे चरणे विनम्रमथ तं हस्तेन हस्ते स्पृशन्**
**बोधस्ते भविता न सर्गविधिभिर्बन्धोऽपि सञ्जायते ।**
**इत्याभाष्य गिरं प्रतोष्य नितरां तच्चित्तगूढः स्वयं**
**सृष्टौ तं समुदैरयः स भगवन्नुल्लासयोल्लाघताम् ॥ १० ॥**

**आताम्र** इति। (अथ स भगवान्!) आताम्रे अरुणसरोजवदीषत्ताम्रवर्णे चरणे विशेषेण भक्तिविश्वासबहुमानादिभिः सह नम्रं नमनशीलं तं ब्रह्माणं सखा सखायमिव हस्तेन हस्ते स्पृशन् ते बोधो भविता यत् प्रार्थितं तद् ज्ञानं तवाचिरादेव भविष्यति, किञ्च सर्गविधिभिः सृष्टिव्यापारैः बन्धः शरीरबन्धोऽपि न सञ्जायत इति गिरमाभाष्य सानुसरणमुक्त्वा नितराम् अतिशयेन प्रतोष्य सन्तुष्टं कृत्वा स्वयं तच्चित्तगूढः तस्य ब्रह्मणः चित्त एवान्तर्हितः सन् तं ब्रह्माणं सृष्टौ समुदैरयः ब्रह्मणो हृद्यन्तर्यामिरूपेण स्थित्वा सृष्टौ तं सम्यक् प्रेरितवान् यः, स त्वं भगवन्! उल्लाघतां ममारोग्यम् उल्लासय सम्यक् संपादयेत्यर्थः ॥ १० ॥ ४९ ॥

त्रिगुणं द्विगुणं शुद्धसत्त्वैकगुणनिर्गुणम् ।
द्वितीये सफलं रूपमुपास्यमुपवर्णितम् ॥

इति हिरण्यगर्भोत्पत्ति-तपश्चरण-वैकुण्ठस्वरूप-भगवत्स्वरूपसाक्षात्कार-भगवदनुग्रहवर्णनं

सप्तमं दशकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

**भक्तप्रियाख्यायां**

**द्वितीयस्कन्धपरिच्छेदः ।**

---

आदितः श्लोकसङ्ख्या ७५.

## अथ तृतीयस्कन्धपरिच्छेदः ।

उक्तरूपेश्वरोपास्तिविघ्नजालनिवृत्तये ।
विष्णुलीलानुसन्धेया तत्र सर्गो निरूप्यते ॥

एवं मुमुक्षूणामुपासनासिद्धये समर्था समाधिसामग्री दर्शिता । तत्र योगान्तराया व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिमनोलब्धभूमिकत्वानवस्थितत्वानि दुःखदौर्मनस्याङ्गकम्पश्वासप्रश्वासाः तत्सहभुवश्च । तत्र व्याधिर्ध्यानाकल्यता । अविरातिर्विषयेच्छा । अलब्धभूमिकत्वं समाधिभूमेरलाभः । समाधेरुत्थानदशायामेतेषां शमनार्थमिष्टावाप्त्यर्थं च भगवदवतारलीलानुसन्धानं कर्तव्यम् । तदुक्तं —

"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ! ॥" (भ. गी. अ. ४. श्लो. ९)

इति । तत्र लीला दशविधा —

"अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥" (श्री. भा. स्क. २. अ. १०. श्लो. १)

इति वचनात् । तत्रापि प्रथमं भगवतः सृष्टिलीलां तदुपयोगिनस्तत्प्रासाङ्गिकांश्च वराहकपिलचतुःसनश्रीरुद्रनारदमन्वादीनवतारान् दर्शयितुमारभते—

**एवं तावत् प्राकृतप्रक्षयान्ते ब्राह्मे कल्पे ह्यादिमे लब्धजन्मा ।**
**ब्रह्मा भूयस्त्वत्त एवाप्य वेदान् सृष्टिं चक्रे पूर्वकल्पोपमानाम् ॥ १ ॥**

**एवमिति** । प्राकृतप्रक्षयो महाप्रलयः, तस्यान्ते अवसाने सति आदिमे ब्राह्मे कल्पे शब्दब्रह्माख्यस्येदानीन्तनस्य ब्रह्मण आदिदिनारम्भे त्वत्तो विष्णोर्लब्धजन्मा जातः सन् ब्रह्मा भूयः पुनः त्वत्त एव वेदान् ऋगादीन् आप्य लब्ध्वा पूर्वकल्पोपमानां सृष्टिं चक्रे, यथर्तुषु ऋतुलिङ्गानि एकरूपाणि तथा प्रतिकल्पं सृष्टिसाम्यमिति महाभारतोक्तेरुत्तरोत्तरेषु कल्पेषु पूर्वपूर्वकल्पसमानां सृष्टिं बहुशोऽसौ कृतवानित्यर्थः ॥ १ ॥

---

१. 'ध्या' क. पाठः.

**सोऽयं चतुर्युगसहस्रमितान्यहानि**
**तावन्मिताश्च रजनीर्बहुशो निनाय ।**
**निद्रात्यसौ त्वयि निलीय समं स्वसृष्टै-**
**र्नैमित्तिकप्रलयमाहुरतोऽस्य रात्रिम् ॥ २ ॥**

**स** इति । सोऽयं ब्रह्मा चतुर्युगाणां सहस्रसङ्ख्यया मितानि परिच्छिन्नानि अहानि दिनानि कल्पाख्यानि तावन्मिताः तत्समप्रमाणा रजनी रात्रीश्च बहुशो निनाय बहुवारं नीतवान् । असौ स्वसृष्टैश्चराचरैः समं सह त्वयि श्रीनारायणे निलीय निद्रातीति, अहःक्षये हि ब्रह्मा स्वसृष्टं चराचरं सङ्कल्प्यैकार्णवेऽहीन्द्रतल्पमधिशयानेन श्रीनारायणेन सहैकीभूय निद्रां गच्छति । अतः प्रलयस्य ब्रह्मणः स्वापनिमित्तत्वादस्य रात्रिं नैमित्तिकप्रलयमाहुर्वदन्तीति ॥ २ ॥

**अस्मादृशां पुनरहर्मुखकृत्यतुल्यां**
**सृष्टिं करोत्यनुदिनं स भवत्प्रसादात् ।**
**प्राग् ब्राह्मकल्पजनुषां च परायुषां तु**
**सुप्तप्रबोधनसमास्ति तदा विसृष्टिः ॥ ३ ॥**

**अस्मादृशामिति** । स पुनर्ब्रह्मा अस्मादृशामहर्मुखे यानि कृत्यानि शौचाचमनप्राणायामसन्ध्यावन्दनजपहोमादीन्यनुदिनमनुष्ठेयानि कर्माणि, तत्तुल्यां सृष्टिं सोऽपि भवत्प्रसादादनुदिनं करोति । अत्र च प्राक् पूर्वं ब्राह्मे कल्पे जनुर्जन्म येषां ते तथा, परम् अतिचिरकालम् आयुर्येषां तेषां मार्कण्डेयादीनामपि तदा नैमित्तिकप्रलयावसाने सुप्तप्रबोधनसमा स्वापप्रबोधतुल्या । ननु तेषामपि ब्रह्मण इव सुप्तप्रबोधौ[1] स्त इत्येव वाच्यम् । किमिति कल्पादौ सृष्टिरस्तीत्युच्यते, मैवं, तेषां ब्रह्मणि लीनत्वात् पुनश्च ब्रह्मणैव सृष्टत्वाच्च । ब्रह्मणः पुनः ब्रह्मसृष्ट्यभावात् स्वापप्रबोधावेव । ननु तर्ह्यस्मादृशामिव सृष्टिरेवास्तु, किमर्थमुच्यते सुप्तप्रबोधनसमेति, मैवं, प्राक्कल्पविषयानुस्मरणानपायात् सुप्तप्रबोधेन तुल्यत्वम् । अस्मादृशां तु तदभावात् सृष्टिरेवेति भेद इति युक्तमुक्तम् ॥ ३ ॥

**पञ्चाशदब्दमधुना स्ववयोर्धरूप-**
**मेकं परार्धमतिवृत्य हि वर्ततेऽसौ ।**

---

१. 'धौ न स्त' क. पाठः.

**तत्रान्त्यरात्रिजनितान् कथयामि भूमन्!**
**पश्चाद् दिनावतरणे च भवद्विलासान् ॥ ४ ॥**

**पञ्चाशदिति** । असौ ब्रह्मा अधुना पञ्चाशद् अब्दाः संवत्सराः प्रमाणं यस्य तत् पञ्चाशदब्दं स्वस्य वयसो द्विपरार्धलक्षणस्यार्धरूपं पूर्वार्धात्मकमेकं परार्धमतिवृत्य अतिक्रम्य वर्तते । हिशब्दः प्रसिद्धौ । अयं वाराहः कल्पो द्वितीयपरार्धस्यादिरिति प्रसिद्ध इत्यर्थः । तत्र तेषु कल्पेष्वादिमो ब्राह्मः कथितः । पुनश्च अन्त्यरात्रिजनितानिति समनन्तरातीतः पाद्मः कल्पः, तस्मादर्वाचीना रात्रिः प्रथमपरार्धस्यान्त्यरात्रिः, तस्यां जनितान् पश्चात् पुनश्च दिनावतरणे (पाद्म?वाराह)कल्पारम्भे च हे भूमन्! कालदेशापरिच्छिन्न! ये भवद्विलासाः भवतः सर्गप्रलयसम्बन्धिन्यो लीलाः, तान् विलासान् कथयामि स्तोतुमारभ इत्यर्थः ॥

**दिनावसानेऽथ सरोजयोनिः सुषुप्तिकामस्त्वयि सन्निलिल्ये ।**
**जगन्ति च त्वज्जठरं समीयुस्तदेदमेकार्णवमास* विश्वम् ॥ ५ ॥**

**दिनावसान** इति । अथ सरोजयोनिर्ब्रह्मा दिनावसाने प्राक्कल्पावसाने सुषुप्तिकामः त्वयि श्रीनारायणे सन्निलिल्ये निलीनः सन् निद्रां कृतवान् । जगन्ति लोकाश्च तदा त्वज्जठरं तवोदरदेशं समीयुः ब्रह्मणा सह प्राप्ताः । तदा प्रलये इदं विश्वम् एकार्णवं जलमात्रशेषम् आस अभूत् ॥ ५ ॥

**तवैव वेषे फणिराजि शेषे जलैकशेषे भुवने स्म शेषे ।**
**आनन्दसान्द्रानुभवस्वरूपः स्वयोगनिद्रापरिमुद्रितात्मा ॥ ६ ॥**

**तवेति** । एवं भुवने जलैकशेषे जलमात्रशेषे सति त्वं तव वेषे अवस्थाभेदरूप एव शेषे अनन्ताख्ये फणिराजि नागश्रेष्ठे शेषे स्म अशयिष्ठाः । आनन्दश्चासौ सान्द्रश्च स एवासावनुभवः सम्यग्ज्ञानं तद्रूपः । अत्र सान्द्रत्वमानन्दानुभवे[1]तररूपराहित्यं सच्चिदानन्दस्वरूप इत्यर्थः । योगः स्वस्वरूपानुसन्धानं स एव नि[2]द्रेव निद्रा योगनिद्रा स्वीयया योगनिद्रया परिमुद्रितः सम्यग् लाञ्छितः आत्मा स्वरूपं यस्य स तथा ॥ ६ ॥

---

१ 'वे तद्रूप' ख पाठः २. 'निद्रा यो' ख. पाठः.

---

* आस प्रचकाशे । 'अस गतिदीप्त्यादानेषु' । भ्वादिः । आसेत्यव्ययं वा तिङ्प्रतिरूपमस्त्यर्थकम् ।

**कालाख्यशक्तिं प्रलयावसाने प्रबोधयेत्यादिशता *किलादौ ।**
**त्वया प्रसुप्तं परिसुप्तशक्तिव्रजेन तत्राखिलजीवधाम्ना ॥ ७ ॥**

**कालेति** । तत्रादौ प्रलयारम्भे परिसुप्तशक्तिव्रजेन परिसुप्तो निलीनः शक्तीनां मूलप्रकृतिमहदहङ्कारादीनां व्रजः समूहो यस्मिन्, तथाभूतेन अखिलजीवधाम्ना संसारदुःखखिन्नानां जीवानामतिचिरकालं विश्रमस्थानभूतेन कालाख्यशक्तिं प्रलयावसाने चतुर्युगसहस्रलक्षणाया रात्रेरवसाने सति त्वं मां प्रबोधयेत्यादिशता आज्ञापयता च त्वया तया कालाख्यशक्त्या सह प्रसुप्तं शक्तिशक्तिमतोरभेदमवलम्ब्य स्थितम् । यथा कश्चिद् बहुभार्यः पुरुषः इतरासु प्रसुप्तासु दयितया सह कञ्चित् कालं वसन् सुप्रबोधां तां प्रभाते त्वं मां प्रबोधयेत्यादिश्य तयैव सह गाढगाढमालिङ्ग्य सुसुखं निद्रां गच्छति, तद्वदिति भावः ॥ ७ ॥

**चतुर्युगाणां च सहस्रमेवं त्वयि प्रसुप्ते पुनरद्वितीये ।**
**कालाख्यशक्तिः प्रथमप्रबुद्धा प्राबोधयत् त्वां किल विश्वनाथ! ॥ ८ ॥**

**चतुर्युगाणामिति** । अद्वितीये त्वयि एवं चतुर्युगाणां सहस्रं यावत्प्रलयावसानं प्रसुप्ते सति पुनः कालाख्यशक्तिः प्रथमप्रबुद्धा हे विश्वनाथ! त्वां प्राबोधयच्च । किलशब्दोऽत्र केवलपुराणप्रसिद्धिं द्योतयति ॥ ८ ॥

**विबुध्य च त्वं जलगर्भशायिन्! विलोक्य लोकानखिलान् प्रलीनान् ।**
**तेष्वेव सूक्ष्मात्मतया निजान्तःस्थितेषु विश्वेषु ददाथ दृष्टिम् ॥ ९ ॥**

**विबुध्येति** । हे जलगर्भशायिन्! आवरणोदकमध्यशायिन्! त्वं प्रबुध्य अखिलान् लोकान् त्वयि प्रलीनान् विलोक्य । ननु प्रलीनानां कुतो विलोकनसम्भवस्तत्राह—तेष्विति । सूक्ष्मात्मतया कारणरूपेण निजान्तःस्थितेषु तेष्वेव विश्वेषु लोकेषु दृष्टिं ददाथ च दत्तवान् ईक्षितवानित्यर्थः ॥ ९ ॥

नाभिपद्मद्वारा प्रपञ्चसृष्टिप्रकारमाह—

**ततस्त्वदीयादयि! नाभिरन्ध्रादुदञ्चितं किञ्चन दिव्यपद्मम् ।**
**निलीननिश्शेषपदार्थमालासङ्क्षेपरूपं मुकुलायमानम् ॥ १० ॥**

---

* 'तयादौ' इति व्याख्यातृपाठः स्यात् ।

तत इति । अयि! भगवन्! ततः तव विलोकनानन्तरं त्वदीयाद् नाभिरन्ध्रात् किञ्चन दिव्यं प्रकाशबहुलत्वात् सत्त्वमयं पद्मम् उदञ्चितम् उद्भूतम् । निश्शेषाणां जीवतदुपभोग्यानां पदार्थानां माला समूहः, तस्य सङ्क्षेपः सूक्ष्मरूपेणावस्थानं तद्रूपं निश्शेषप्रपञ्चबीजरूपमित्यर्थः । मुकुलायमानं मुकुलावस्थया स्थितम् ॥ १० ॥

**तदेतदम्भोरुहकुड्मलं ते कलेवरात् तोयपथे प्ररूढम् ।**
**बहिर्निरीतं परितः स्फुरद्भिः स्वधामभिर्ध्वान्तमलं न्यकृन्तत् ॥ ११ ॥**

तदेतदिति । तदेतदम्भोरुहस्य कुड्मलं मुकुलं ते तव श्रीनारायणस्य कलेबरात् शरीरात् तोयपथे परितो जलावृतत्वाज्जलप्रदेशे प्ररूढम् अङ्कुरितम् । क्रमाज्जलमतिक्रम्य बहिर्निरीतम् । ततश्च परितः स्फुरद्भिः स्वधामाभिः निजदीप्तिभिः ध्वान्तमलं तमोरूपं मलं, यद्वा अलम् अतिशयेन ध्वान्तं न्यकृन्तद् उन्मूलितवदित्यर्थः ॥ ११ ॥

**संफुल्लपत्रे नितरां विचित्रे तस्मिन् भवद्वीर्यधृते सरोजे ।**
**स पद्मजन्मा विधिराविरासीत् स्वयंप्रबुद्धाखिलवेदराशिः ॥ १२ ॥**

सम्फुल्लपत्र इति । सम्यक् फुल्लानि विकसितानि पत्राणि दलानि यस्मिंस्तत् तथा नितराम् अतिशयेन विचित्रे असामान्ये भवत ईश्वरस्य वीर्येण योगबलेन धृते प्रतिष्ठिते तस्मिन् सरोजे स त्वमेव विधिराविरासीद् ब्रह्मणो रूपं गृहीत्वा प्राविशदित्यर्थः । अत एव पद्मजन्मेति नामाप्यासीत् । किञ्च स्वयम् उपदेशनिरपेक्षं प्रबुद्धाखिलवेदराशिः अर्थावबोधपर्यन्तमवगतनिगमसमूहः, स्वतः सर्वज्ञश्चाभूदित्यर्थः ॥ १२ ॥

**अस्मिन् परात्मन्! ननु पाद्मकल्पे त्वमित्थमुत्थापितपद्मयोनिः ।**
**अनन्तभूमा मम रोगराशिं निरुन्धि वातालयवास! विष्णो! ॥ १३ ॥**

अस्मिन्निति । परात्मन्! हे परमात्मन्! जगत्कारणभूत! अस्मिन् ननु पाद्मकल्पे इत्थमुक्तप्रकारेण उत्थापितः सृष्टः पद्मयोनिर्येन स तथा अनन्तभूमा

१. 'सीः प्र' ख. पाठः. २. 'श इस' ख. पाठः.

अपरिच्छिन्नमहिमा त्वं मम रोगराशिं निरुन्धि मम दुष्कृतैरितःपरमप्यागच्छन्तं व्याधिनिवहं निवारयेत्यर्थः ॥ १३ ॥

**इति प्रलय-जगत्सृष्टिप्रकारवर्णनम् अष्टमं दशकं सचित्रकम् ।**

---

एवमुत्पन्नस्य ब्रह्मणः प्रवृत्तिं कथयति —

**स्थितः स कमलोद्भवस्तव हि नाभिपङ्केरुहे**
**कुतःस्विदिदमम्बुधावुदितमित्यनालोकयन् ।**
**तदीक्षणकुतूहलात् प्रतिदिशं विवृत्तानन-**
**श्चतुर्वदनतामगाद् विकसदष्टदृष्ट्यम्बुजाम् ॥ १ ॥**

**स्थित** इति । स हि कमलोद्भवः तव नाभिपङ्केरुहे तत्कर्णिकायां स्थितः सन् इदम् अम्बुजं कुतः कस्मादधिष्ठानात् । स्विदिति वितर्के । अम्बुधौ एकार्णवे उदितम् उत्पन्नम् इत्येतदनालोकयन् अजानन् तदीक्षणे अम्बुजस्योत्पत्तिस्थानवीक्षणे कुतूहलात् कौतुकात् प्रतिदिशं चतसृषु दिक्षु विवृत्तं विवलितम् आननं यस्य स तथा । चतुर्वदनतामगादिति । चतसृषु दिक्षु युगपद्वीक्षणकौतुके सति चत्वारि च वदनान्यभूवन्नित्यर्थः । विकसन्ति उन्मीलितानि अष्टौ दृष्ट्यम्बुजानि नेत्रकमलानि यस्यास्तां चतुर्वदनतामगादिति[1] सम्बन्धः ॥ १ ॥

**महार्णवविघूर्णितं कमलमेव तत् केवलं**
**विलोक्य तदुपाश्रयं तव तनुं तु नालोकयन् ।**
**क एष कमलोदरे महति निस्सहायो ह्यहं**
**कुतःस्विदिदमम्बुजं समजनीति चिन्तामगात् ॥ २ ॥**

**महार्णवेति** । महार्णवे विघूर्णितं कम्पितं केवलं तत् कमलमेव विलोक्य तदुपाश्रयं तदधिष्ठानं तव तनुं तु नालोकयन् अपश्यन् इति इत्थं चिन्तामगात् । चिन्ताप्रकारमाह— क एष इति । महति कमलोदरे निस्सहाय एषोऽहं ह्येव कः । किञ्चेदमम्बुजं कुतःस्वित् समजनीत्येवं चिन्तामगात् ॥ २ ॥

पुनश्चैवं निश्चितवानित्याह —

**अमुष्य हि सरोरुहः किमपि कारणं सम्भवे-**
**दितिस्म कृतनिश्चयः स खलु नालरन्ध्राध्वना ।**

---

१. 'त्यर्थः ॥' क. पाठः.

**सयोगबलविद्यया समवरूढवान् प्रौढधी-**
**स्त्वदीयमतिमोहनं न तु कलेबरं दृष्टवान् ॥ ३ ॥**

**अमुष्येति** । अमुष्य मदधिष्ठितस्य सरोरुहः सरोजस्याधस्तात् किमपि कारणम् अधिष्ठानं सम्भवेत् । सम्भावनायां लिङ् । इतिस्म कृतनिश्चयः स खलु ब्रह्मा नालरन्ध्राध्वना कमलदण्डस्य रन्ध्रं सुषिरमेव अध्वा मार्गः, तेन समवरूढवान् अवरोहणं कृतवान् । कथमस्यैतदुपायबोध इत्यत आह– प्रौढधीरिति । प्रौढा ऊहापोहनिपुणा धीर्यस्य स तथा । ननु बुद्धिसामर्थ्ये सत्यपि सुसूक्ष्मरन्ध्रप्रवेशः कथं सम्भवेदित्यत आह – सयोगबलविद्ययेति । योगबलं तपोबलं विद्या आत्मज्ञानम् । योगबलसहितया विद्ययेति । तपसा विद्यया च प्राप्तैश्वर्यतयातिसूक्ष्मशरीरो भूत्वा तत्सरोरुहनालरन्ध्रं प्रविष्टवानित्यर्थः । तदपि त्वदीयमतिमोहनं लोकोत्तरसौन्दर्ययुक्तं कलेबरं[2] मूर्तिं बहिर्मुखैर्व्यापारैर्दुष्प्रापं न तु दृष्टवान् नैव ददर्श ॥ ३ ॥

**ततः सकलनालिकाविवरमार्गगो मार्गयन्**
**प्रयस्य शतवत्सरं किमपि नैव सन्दृष्टवान् ।**
**निवृत्य कमलोदरे सुखनिषण्ण एकाग्रधीः**
**समाधिबलमादधे भवदनुग्रहैकाग्रही ॥ ४ ॥**

**तत** इति । ततः अनन्तरं सकलानि नालिकाविवराणि नालरन्ध्राण्येव मार्गाः, तान् गच्छतीति सकलनालिकाविवरमार्गगः मार्गयन् अन्वेषणं कुर्वन् । अयमर्थः – कमलनालस्य बहुरन्ध्रत्वादेकेन रन्ध्रेणावरुह्यान्विष्याद्दृष्ट्वा पुनरन्येन पुनश्चान्येनैवमतन्द्रितोऽन्विष्टवानित्यर्थः । एवं शतवत्सरं दिव्यसंवत्सराणां शतं प्रयस्य प्रयासं कृत्वा कमलस्याश्रयत्वेन किमपि वस्तु नैव सन्दृष्टवान् । निवृत्येति ईश्वरस्यानुग्रहं विना किमपि ज्ञातुं कर्तुं वाशक्यमिति निश्चित्य बहिर्मुखात् प्रयासान्निवृत्य विरम्य कमलोदरे सुखनिषण्ण इत्यष्टाङ्गोपलक्षणम् । एकाग्रधीरिति धारणोच्यते । समाधिबलं समाधेश्चित्तैकाग्र्यस्य बलम् अचाञ्चल्यम् आदधे कृतवान् । भवदनुग्रह एकस्मिन्नेवाग्रहोऽस्यास्तीति भवदनुग्रहैकाग्रही ॥ ४ ॥

---

१. 'धा' क. पाठः. २. 'रं ब' ख. पाठः.

एवमन्तर्दृष्ट्यान्वेषणे कृते[1] तु भवन्तं दृष्टवानित्याह—

**शतेन परिवत्सरैर्दृढसमाधिबन्धोल्लस-**
**त्प्रबोधविशदीकृतः स खलु पद्मिनीसम्भवः ।**
**अदृष्टचरमद्भुतं तव हि रूपमन्तर्दृशा**
**व्यचष्ट परितुष्टधीर्भुजगभोगभागाश्रयम् ॥ ५ ॥**

**शतेनेति**। शतेन परिवत्सरैः दिव्यसंवत्सरैः शतेन स खलु पद्मिनीसम्भवो ब्रह्मा दृढेन निश्चलेन समाधेश्चित्तैकाग्र्यस्य बन्धेन चित्ततद्विषययोरेकीभावलक्षणेन ग्रथनेन उल्लसता शोभमानेन प्रबोधेन ध्यातृध्येयध्यानभेदभानाभावादेकात्मविषयेण ज्ञानेन अविशदो विशदः कृत इति विशदीकृतः अज्ञानमालिन्यास्तमयेन विमलः सन् तव हि रूपं तव विष्णोरेव साक्षात् स्वरूपम् अन्तर्दृशा भगवतानुगृहीतेन दिव्येन चक्षुषा व्यचष्ट दृष्टवान् । कीदृशम्, अदृष्टचरम् इतः पूर्वं महता प्रयासेनापि यन्न दृष्टं तद् । अद्भुतम् अत्याश्चर्यं रूपं भुजगभोगभागाश्रयं भुजगस्य अनन्ताख्य-भुजगस्य भोगः शरीरं तस्य भागः तत्कल्पिततल्पदेशः स आश्रयो यस्य तत् तथा । तत् तव रूपं दृष्ट्वा परितुष्टधीः सन्तोषातिशयेन परवशोऽभवदित्यर्थः ॥ ५ ॥

तदेव रूपं वर्णयति—

**किरीटमकुटोल्लसत् कटकहारकेयूरयुग्**
**मणिस्फुरितमेखलं सुपरिवीतपीताम्बरम् ।**
**कलायकुसुमप्रभं गलतलोल्लसत्कौस्तुभं**
**वपुस्तदयि! भावये कमलजन्मने दर्शितम् ॥ ६ ॥**

**किरीटेति**। मूर्ध्नि पुरः पृष्ठतश्चालङ्कृताभ्यां किरीटमकुटाभ्याम् उल्लसत् शोभमानम् । कटकैः प्रकोष्ठस्थवलयैः, हारैः मुक्ताहारैः, अंसदेशालङ्कृतैः केयूरैश्च युज्यत इति कटकहारकेयूरयुक् । तत् । मणिभिः परार्घ्यनानारत्ननिकरैः स्फुरिता उज्ज्वला मेखला यस्मिंस्तद् मणिस्फुरितमेखलम् । सुपरिवीतम् अतिमोहन-वेषविशिष्टतया परिवीतं परिहितं पीताम्बरं यस्मिंस्तत् तथा । अयि! भगवन्! त्वया कमलजन्मने यद् दर्शितं नयनगोचरीकृतं, तद् वपुः सम्प्रत्यहं भावये केवलं स्मरामीत्यर्थः ॥ ६ ॥

---

१. 'ते भ' ख. पाठः.

एवं भगवद्रूपदर्शनानन्तरं विधेः प्रवृत्तिं वर्णयन् भगवन्तं प्रार्थयते—

**श्रुतिप्रकरदर्शितप्रचुरवैभव ! श्रीपते !**
**हरे ! जय जय प्रभो ! पदमुपैषि दिष्ट्या दृशोः ।**
**कुरुष्व धियमाशु मे भुवननिर्मितौ कर्मठा-**
**मिति द्रुहिणवर्णितस्वगुणबंहिमा पाहि माम् ॥ ७ ॥**

**श्रुती**ति । श्रुतिप्रकरैः उपनिषद्वाक्यनिकरैः दर्शितं लक्षणया प्रतिपादितं प्रचुरवैभवम् अतिशयेन महत्त्वं यस्य । अथवा वैभवं जगत्सृष्ट्यादिसामर्थ्यं श्रुतिभिर्जगत्कारणत्वेन प्रतिपादितमित्यर्थः । श्रीपते ! जगदनुग्राहक ! हरे ! जगत्संहर्तः! त्वं जय उत्कर्षमाविष्कुरु । हर्षावेशसम्भ्रमाद् द्विरुक्तिः । हे विभो ! त्वं मम दृशोः पदं गोचरम् उपैषि प्राप्तोऽसि दिष्ट्या अहो मम सुखं जातम् । ममाशु भुवननिर्मितौ जगत्सृष्टौ कर्मठां समर्थां धियं कुरुष्व जगन्निर्माणेतिकर्तव्यताविषयं ज्ञानमनुगृहाणेत्यर्थः । इति द्रुहिणेन ब्रह्मणा वर्णितः संस्तुतः स्वगुणानाम् ऐश्वर्यादीनां बंहिमा बाहुल्यं यस्य स त्वं त्वद्गुणानेव वर्णयन्तं पाहि द्रुहिणस्येवात्मानं पुरः प्रदर्श्य कृतार्थीकुर्वित्यर्थः ॥ ७ ॥

अथ स्तुवतोऽस्य भगवदनुग्रहप्रकारमाह—

**लभस्व भुवनत्रयीरचनदक्षतामक्षतां**
**गृहाण मदनुग्रहं कुरु तपश्च भूयो विधे ! ।**
**भवत्वखिलसाधनी मयि च भक्तिरत्युत्कटे-**
**त्युदीर्य[1] गिरमादधा मुदितचेतसं वेधसम् ॥ ८ ॥**

**लभस्वे**ति । अयि विधे ! त्वम् अक्षताम् अनपायिनीं भुवनत्रयीरचनदक्षतां त्रैलोक्यनिर्माणसामर्थ्यं लभस्व प्राप्नुहि । मदनुग्रहं गृहाण, तव जगन्निर्माणविधौ यद्यदनुगृह्णामि, तत्तत् परिगृह्णीष्वेत्यर्थः । भूयस्तपः कुरु । किञ्च तव मय्यखिलसाधनी यद्यदिच्छसि, तस्य तस्यानायासेन निष्पादयित्री अत्युत्कटा प्रकृष्टप्रेमलक्षणा भक्तिश्च भवत्विति गिरमुदीर्योक्त्वा वेधसं ब्रह्माणं मुदितचेतसं सन्तुष्टमानसम् आदधाः कृतवानसि ॥ ८ ॥

---

१. 'चि' मूलकोशपाठः.

एवमनुगृह्य भगवति तिरोहिते वेधसः प्रवृत्तिमाह—

**शतं कृततपास्ततः स खलु दिव्यसंवत्सरा-**
**नवाप्य च तपोबलं मतिबलं च पूर्वाधिकम् ।**
**उदीक्ष्य किल कम्पितं पयसि पङ्कजं वायुना**
**भवद्बलविजृम्भितः पवनपाथसी पीतवान् ॥ ९ ॥**

**शतमिति** । सः ब्रह्मा खलु शतं दिव्यसंवत्सरान् कृतं चीर्णं तपो येन स कृततपाः ततः पूर्वाधिकं तपोबलं मतिबलं विज्ञानबलं चावाप्य स पुनः पयस्येकार्णवे वायुना तात्कालिकेनात्युत्कटेन वातेन कम्पितं स्वाधिष्ठानं पङ्कजमुद्वीक्ष्य भवद्बलेन भवानेव बलं भवद्बलं तेन, 'स वै बलं बलिनां चापरेषाम्' (श्री. भा. स्क. ७. अ. ८. श्लो. ८.) इति प्रह्लादवचनात् । विजृम्भितो वर्धितः पवनपाथसी वायुं जलं च पीतवान् न्यपिबत् किल ॥ ९ ॥

**तवैव कृपया पुनः सरसिजेन तेनैव स**
**प्रकल्प्य भुवनत्रयीं प्रववृते प्रजानिर्मितौ ।**
**तथाविधकृपाभरो गुरुमरुत्पुराधीश्वर !**
**त्वमाशु परिपाहि मां गुरुदयोक्षितैरीक्षितैः ॥ १० ॥**

तवेति । स पुनस्तव कृपयैव तेनैव अतिविपुलेन सरसिजेन भुवनत्रयीं भूर्भुवःस्वरिति त्रीन् लोकान् । प्रकल्प्येति । अत्रातलवितलसुतलतलातलमहातलरसातलपातालानां सप्तानां भूर्लोकेऽन्तर्भावाद् महर्जनस्तपःसत्यमित्येतेषां स्वर्लोके चान्तर्भावात् त्रिलोकपक्षः कथ्यते । ततश्च तत् कमलं द्विसप्तधा विभज्य चतुर्दश लोकानकल्पयदित्यर्थः । अनन्तरं च प्रजानां शुभाशुभादृष्टतारतम्येन तत्तल्लोकयोग्यानां जीवानां निर्मितौ शरीरविरचनायां प्रववृते प्रवृत्तवान् । हे गुरुमरुत्पुराधीश्वर ! तथाविधः सर्वजनविषयः कृपाभरः करुणातिशयो यस्य स त्वं गुरुदयोक्षितैः गुर्व्या घनीभूतया दयया उक्षितैः आर्द्रीकृतैः ईक्षितैः कटाक्षैः आशु द्रुततरं मां पाहीति ॥ १० ॥

**इति जगत्सृष्टिप्रकारवर्णनं नवमं दशकम् ।**

---

१. 'प' घ. पाठः.

अथ सृष्टिभेदानाह वैकुण्ठेति दशभिः—

**वैकुण्ठ! वर्धितबलोऽथ भवत्प्रसादा-**
**दम्भोजयोनिरसृजत् किल जीवदेहान्।**
**स्थास्नूनि भूरुहमयानि तथा तिरश्चां**
**जातीर्मनुष्यनिवहानपि देवभेदान्॥ १॥**

वैकुण्ठेति। हे वैकुण्ठ! विष्णो! भवत्प्रसादाद् वर्धितबलो विद्याकर्मभ्यां प्राप्तैश्वर्यः सन्नम्भोजयोनिः अथ अनन्तरं जीवानां देहानसृजत् किल। तत्र देहाः स्थावरजङ्गमभेदाद् द्विविधाः। तदाह—स्थास्नूनीति। भूरुहमयाणि वृक्षप्रायाणि ओषधिलतावीरुद्रूपाणि स्थावराणीत्यर्थः। तिरश्चां गवादीनां जातीः, तत्र गवादयो द्विशफाः, अश्वादय एकशफाः, श्वादयः पञ्चनखाः, काककङ्कगृध्रादयश्च, एतान्। देवान् मनुष्यांश्चासृजदित्यर्थः॥ १॥

अथ स्रष्टुरबुद्धिकृतं तामससर्गमाह—

**मिथ्याग्रहास्मिमतिरागविकोपभीति-**
**रज्ञानवृत्तिमिति पञ्चविधां स सृष्ट्वा।**
**उद्दामतामसपदार्थविधानदून-**
**स्तेने त्वदीयचरणस्मरणं विशुद्ध्यै॥ २॥**

मिथ्येति। आत्मनोऽन्यत्वेन प्रपञ्चस्यास्तित्वप्रतीतिर्मिथ्याग्रहः, शरीरादावहंममाभिमानोऽस्मिमतिः, उपभोग्यबुद्ध्या धनादिष्विच्छा रागः, धनाद्यपहर्तरि क्रोधो विकोपः, उपभोग्यपदार्थानां व्ययनाशाद्युत्प्रेक्षया जनितं भयं भीतिः इत्येवं पञ्चविधां पञ्चप्रकाराम् अज्ञानवृत्तिम् आत्माज्ञानकार्यं मिथ्याग्रहादिपञ्चाज्ञानकार्याणि सृष्ट्वेत्यर्थः। अनन्तरम् उद्दाम्नां प्रभूतानां तामसपदार्थानां केवलतमोगुणकार्याणां पदार्थानां विधानेन सृष्ट्या दूनः क्षीणमानसः सन् स विशुद्ध्यै अज्ञाननिवृत्तये त्वदीयचरणस्मरणं तेने कृतवान्॥ २॥

**तावत् ससर्ज मनसा सनकं सनन्दं**
**भूयः सनातनमुनिं च सनत्कुमारम्।**

---

१. 'णां तामसप' ख. पाठः.

ते सृष्टिकर्मणि तु तेन नियुज्यमाना-
स्त्वत्पादभक्तिरसिका जगृहुर्न वाणीम् ॥ ३ ॥

तावदिति । यावदसौ त्वदीयचरणस्मरणेन शुद्धमना जातः, तावत् तस्मिन् काले सनकसनन्दसनातनसनत्कुमारान् मनसा ससर्ज । ते तु सनकादयः तेन ब्रह्मणा सृष्टिकर्मणि नियुज्यमानाः प्रेरिताः तस्य वाणीं नियोगरूपं वाक्यं न जगृहुः नाङ्गीकृतवन्तः । तत्र हेतुः — त्वत्पादभक्तिरसिका इति । त्वत्पादाम्बुजयोः या प्रेमलक्षणा भक्तिः, तस्यां रसिका इच्छावन्तः शरीरादिबन्धप्रदं सर्गकर्म नैच्छन्नित्यर्थः ॥ ३ ॥

तावत् प्रकोपमुदितं प्रतिरुन्धतोऽस्य
भ्रूमध्यतोऽजनि मृडो भवदेकदेशः ।
नामानि मे कुरु पदानि च हा विरिञ्चे-
त्यादौ रुरोद किल तेन स रुद्रनामा ॥ ४ ॥

तावदिति । यदैवं पुत्रैः स्वानुशासनं प्रत्याख्यातं, तदेत्यर्थः । उदितम् उत्पन्नं प्रकोपं प्रकृष्टं कोपं प्रतिरुन्धतो धिया नियच्छतोऽप्यस्य ब्रह्मणः भ्रूमध्यतो भ्रुवोर्मध्याद् मृडोऽजनि तं कोपमेव शरीरत्वेन परिगृह्य श्रीशङ्करस्तत्रावतीर्ण इत्यर्थः । स च भवदेकदेशः विष्णोरेवांशः, "परः पुरुष एक इहास्य धत्ते स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः ।" (श्री. भा. स्क. १. अ. २. श्लो. २३) इति वचनात् । स चादौ जातमात्र एव हा विरिञ्च ! मे नामानि पदानि स्थानानि च कुर्विति रुरोद किल, तेन रोदनेन स रुद्र इति नाम प्राप्तवान् ॥ ४ ॥

एकादशाह्वयतया च विभिन्नरूपं
रुद्रं विधाय दयिता वनिताश्च दत्त्वा ।
तावन्त्यदत्त च पदानि भवत्प्रणुन्नः
प्राह प्रजाविरचनाय च सादरं तम् ॥ ५ ॥

---

१. 'न्तः सन्तः श' क. पाठः. २. 'द्रना' क. पाठः.

एकादशाह्वयतयेति ।

"मनुर्मन्युर्महादेवो महाञ्छिव ऋतध्वजः ।
उरुरेता भवः कालो वामदेवो धृतव्रतः ॥"

(श्री भा. स्क. ३. अ. १२. श्लो. १२)

इत्येकादशनामभेदात् चकारात् स्थानभेदाच्च विभिन्नं भेदबुद्धिगोचरं रुद्रं विधाय तेभ्यो दयिता वनिताश्चेति "धीर्वृत्तिरशनोमा च नियुत्सर्पिरिडाम्बिका । इरावती सुधा दीक्षा" (श्री.भा.स्क. ३. अ. १२. श्लो. १३) इत्युक्ताः स्त्रियश्च दत्त्वा तावन्ति एकादशैव पदानि स्थानानि च अदत्त । तानि च "हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही । सूर्यश्चन्द्रस्तपश्चैव" श्री. भा. स्क. ३. अ. १२. श्लो. ११) इत्युक्तानि स्थानानि च अदत्त दत्तवान् । भवत्प्रणुन्नः हृदि स्थितेनेश्वरेण प्रेरितः विधिः तं रुद्रं नामादिभेदादनेकत्वप्रतिभानेऽपि परमार्थत एकरूपं प्रजाविरचनाय भार्यासु पुत्रानुत्पादयितुं सादरं संमानसहितं प्राह न्ययुङ्क्त ॥ ५ ॥

रुद्राभिसृष्टभयदाकृतिरुद्रसङ्घ-
संपूर्यमाणभुवनत्रयभीतचेताः ।
मा मा प्रजाः सृज तपश्चर मङ्गलाये-
त्याचष्ट तं कमलभूर्भवदीरितात्मा ॥ ६ ॥

रुद्रेति। रुद्राभिसृष्टः रुद्रेण स्वासु स्त्रीषूत्पादितः, भयदा वृषभारूढा भस्माङ्गरागा धृतखट्वाङ्गपरशुहरिणकपालचर्मवसना फणिपतिभूषणा वह्निनयना आकृतिर्यस्य तादृशेन रुद्रसङ्घेन संपूर्यमाणं यद् भुवनत्रयं तस्माद् भीतचेताः तत्क्षणं [1] तेन भवतेरितः प्रेरित आत्मा मनो यस्य स कमलभूः ब्रह्मा तं रुद्रमाचष्ट आख्यातवान् । मा मदृशीः प्रजाः सृज किन्तु मङ्गलाय सर्वलोकसुखाय तपश्चरेति ॥६॥

तस्याथ सर्गरसिकस्य मरीचिरत्रि-
स्तत्राङ्गिराः क्रतुमुनिः पुलहः पुलस्त्यः ।
अङ्गादजायत भृगुश्च वसिष्ठदक्षौ
श्रीनारदश्च भगवान् भवदङ्घ्रिदासः ॥ ७ ॥

---

१. 'ज' घ. पाठः.

**तस्येति** । अथ तपश्चरणाय स्वपितरमनुज्ञाप्य रुद्रस्य तपोवनप्रवेशानन्तरं सर्गरसिकस्य कथं स्रक्ष्यामीत्येवं चिन्तयतस्तस्याज्ञाद् मरीच्यादयो दश पुत्रा अजायन्त । तत्र मरीचिर्ब्रह्मणो मनसोऽजायत, अत्रिर्नेत्राद्, अङ्गिरा मुखतः, क्रतुमुनिः करात्, पुलहो नाभेः, पुलस्त्यः कर्णतः, भृगुस्त्वचः, वसिष्ठः प्राणाद्, दक्षोऽङ्गुष्ठाद्, उत्सङ्गान्नारदश्चाजायत । भवदङ्घ्रिदासः भवतः श्रीपादाब्जयोर्दासोऽहमित्यभिमन्यमान इत्यर्थः ॥ ७ ॥

**धर्मादिकानभिसृजन्नथ कर्दमं च**
**वाणीं विधाय विधिरङ्गजसङ्कुलोऽभूत् ।**
**त्वद्बोधितैः सनकदक्षमुखैस्तनूजै-**
**रुद्बोधितश्च विरराम तमो विमुञ्चन् ॥ ८ ॥**

**धर्मादिकानिति** । विधेर्दक्षिणात् स्तनाद् धर्मः श्रीनारायणश्च जातः, अधर्मो मृत्युश्च पृष्ठतः, हृदयात् कामः, भ्रुवोः क्रोधः, अधराल्लोभ इत्याद्यन्वेषणीयम् । अथ कर्दमं चाभिसृजन् छायायाः कर्दमो जात इत्यर्थः । अथ विधिर्वाणीं सरस्वतीं विधाय अङ्गजसङ्कुलः कामपरवशोऽभूत् । ततः सर्वजनबुद्धिसाक्षिणा त्वया बोधितैः सनकादिभिर्दक्षादिभिश्च तनूजैः पुत्रैरुद्बोधितः प्रतिबोधितः तमोऽज्ञानं विमुञ्चन् विरराम निवृत्तोऽभूत् ॥ ८ ॥

**वेदान् पुराणनिवहानपि सर्वविद्याः**
**कुर्वन् निजाननगणाच्चतुराननोऽसौ ।**
**पुत्रेषु तेषु विनिधाय स सर्गवृद्धि-**
**मप्राप्नुवंस्तव पदाम्बुजमाश्रितोऽभूत् ॥ ९ ॥**

**वेदानिति** । असौ चतुराननो ब्रह्मा निजाननगणात् चतुर्मुखेभ्यः वेदान् ऋगादींश्चतुरः पुराणनिवहान् सङ्क्षेपरूपान् सर्वविद्याः शिक्षाद्यङ्गानि षड् मीमांसाद्युपाङ्गानि चत्वारि, आयुर्वेदाद्युपवेदाश्चत्वार इति चतुर्दश विद्याः । तत्र सर्ववि-

---

१. 'श्च पु' ख. पाठः.

द्या इति पुराणस्यापि ग्रहणे[1] पुराणनिवहानिति तस्य पृथगुपादानं प्राधान्यख्यापनार्थम् । तदुक्तं—

"यश्चतुर्वेदविद् विप्रः पुराणं वेत्ति नार्थतः ।
तं दृष्ट्वा भयमाप्नोति वेदो मां प्रतरिष्यति ॥"

इति । किञ्चास्य पञ्चमवेदत्वात् सर्वमुखेभ्यः सृष्टत्वाच्च प्राधान्यम् । ता विद्यास्तेषु मरीच्यादिषु[2] पुत्रेषु विनिधाय सङ्क्रमय्य स ब्रह्मा सर्गवृद्धिम् अप्राप्नुवन् त्रिलोक्यां प्रजाविस्तारार्थं नित्यव्यापृतोऽपि तदलाभात् तत्र दैवविरोधमाशङ्क्य तन्निवृत्तये तव पदाम्बुजमाश्रितोऽभूत् चिन्तयामासेत्यर्थः ॥ ९ ॥

**जानन्नुपायमथ देहमजो विभज्य**
**स्त्रीपुंसभावमभजन्मनुतद्वधूभ्याम् ।**
**ताभ्यां च मानुषकुलानि विवर्धयंस्त्वं**
**गोविन्द! मारुतपुराधिप! रुन्धि रोगान् ॥ १० ॥**

जानन्निति । भवत्पदाम्बुजध्यानानुभावेन सर्गवृद्धावुपायज्ञोऽजः ब्रह्मा स्वदेहं विभज्य द्विधा कृत्वा मनुः स्वायंभुवः तद्वधूः शतरूपा ताभ्यां स्त्रीपुंसभावमभजत् स्वशरीरार्धेन शतरूपाम् अन्यार्धेन मनुं च ससर्जेत्यर्थः । ताभ्यां मनुशतरूपाभ्यां ब्रह्मण आदेशेन मैथुनधर्मेण प्रजासर्गे प्रवृत्ताभ्यां भुवि मनुष्यकुलानि विवर्धयन् हे गोविन्द! मारुतपुराधिप! त्वं मम रोगान् रुन्धि वारयेत्यर्थः ॥ १० ॥

**इति सृष्टिभेदवर्णनं दशमं दशकम् ।**

---

**क्रमेण सर्गे परिवर्धमाने कदापि दिव्याः सनकादयस्ते ।**
**भवद्विलोकाय विकुण्ठलोकं प्रपेदिरे मारुतमन्दिरेश! ॥ १ ॥**

**क्रमेणेति** । दिव्या अप्राकृताः सात्त्विका इत्यर्थः । प्रपेदिरे प्रापुः ॥ १ ॥

---

१. 'णे त' ख. पाठः. २. 'षु वि' ख. पाठः.

विकुण्ठनिलयं वर्णयति—

**मनोज्ञनैःश्रेयसकाननाद्यैरनेकवापीमणिमन्दिरैश्च।**
**अनोपमं तं भवतो निकेतं मुनीश्वराः प्रापुरतीतकक्ष्याः ॥ २ ॥**

**मनोज्ञेति**। मनोज्ञैः सर्वर्तुशोभादिभिरतिमनोहरैः नैःश्रेयसकाननाद्यैः निःश्रेयसं कैवल्यमेव मूर्तिमत्त्वेन स्थितामिति नैःश्रेयसं नाम काननमुद्यानं तदाद्यैः अनेकैः वाप्यो दीर्घिकाः मणिमन्दिराणि रत्नमयानि भवनानि तैः अनोपमम् अनुपमं तं सर्वलोकाभिवन्द्यं भवतो निकेतं विकुण्ठनिलयं मुनीश्वराः सनकादयः अतीतकक्ष्याः परिखाप्राकारादिविभक्ताः षट् कक्ष्या अतीत्य भवननिकटस्थां सप्तमीं कक्ष्यां प्रापुरित्यर्थः ॥ २ ॥

**भवद्दिदृक्षून् भवनं विविक्षून् द्वाःस्थौ जयस्तान् विजयोऽप्यरुन्धाम्।**
**तेषां च चित्ते पदमाप कोपः सर्वं भवत्प्रेरणयैव भूमन्! ॥ ३ ॥**

**भवदिति**। भवद्दिदृक्षून् समाधिगम्यं भवन्तं नयनगोचरीकर्तुकामान् तदर्थं भवनं भवन्मणिमन्दिरं विविक्षून् प्रवेष्टुमारब्धान् तान् सनकादीन् जयो विजयश्च द्वाःस्थौ भवत्सारूप्यं प्राप्तौ द्वारपालौ अरुन्धां वेत्रेण प्रत्यषेधतां, ततस्तेषां चित्ते कोपः पदमवकाशमाप च। सर्वं सनकादीनां वैकुण्ठप्राप्तिः, जयविजययोस्तत्प्रतिकूलाचरणं, मुनीनां कोपश्चैतत् सर्वं हे भूमन्! भवतो वराहनरसिंहश्रीरामकृष्णाद्यवतारैः क्रीडिष्यतो भवत ईश्वरस्य प्रेरणयैवेत्यर्थः ॥ ३ ॥

एवं भगवद्दर्शनभङ्गे सति सञ्जातेषत्कोपा मुनयो द्वाःस्थौ शप्तवन्त इत्याह—

**वैकुण्ठलोकानुचितप्रचेष्टौ कष्टौ युवां दैत्यगतिं भजेतम्।**
**इति प्रशप्तौ भवदाश्रयौ तौ हरिस्मृतिर्नोऽस्त्विति नेमतुस्तान् ॥ ४ ॥**

**वैकुण्ठलोकेति**। रजस्तमःक्षोभरहिते वैकुण्ठलोके अनुचिता इतः प्राक् कस्याप्यनुत्पन्ना प्रारब्धा सदतिक्रमरूपा चेष्टा व्यापारो ययोस्तौ कष्टौ अतिक्रूरौ युवां दैत्यगतिम् आसुरीं योनिं भजेतं प्राप्नुतम् इति मुनिभिः प्रशप्तौ तौ भवदाश्रयौ भवत्किङ्करौ जयविजयौ नः अस्माकं हरिस्मृतिरस्तु युष्मदतिक्रमेण यां यां योनिं व्रजामस्तत्र तत्रापि भगवत्स्मृतिरस्त्विति नेमतुः भुवि पतित्वा तेषां पादान् सङ्गृह्यैवं प्रार्थयन्तौ नमश्चक्रतुरित्यर्थः ॥ ४ ॥

---

१, 'पा प्रचे' ख. पाठः.

**तदेतदाज्ञाय भवानवाप्तः सहैव लक्ष्म्या बहिरम्बुजाक्ष ! ।**
**खगेश्वरांसार्पितचारुबाहुरानन्दयंस्तानभिराममूर्त्या ॥ ५ ॥**

**तदेतदि**ति । तस्मिन्नवसरे अम्बुजाक्ष ! भवान् एतत् *स्वीयानां सदतिक्रमादिकमाज्ञाय विबुध्य लक्ष्म्या सहैव बहिः मणिभवनस्य बाह्याङ्कणे अवाप्तः निष्क्रान्तः खगेश्वरस्य श्रीगरुडस्यांसे समर्पितो विन्यस्तः चारुबाहुः आजानुलम्बी पीवरो भुजो यस्य किञ्चिद् वामपार्श्वलम्बितमूर्तितया श्रीगरुडस्य वामांसदेशदत्तकराम्बुज इत्यर्थः । अभिरामया अतिमनोहरया मूर्त्या तान् मुनीन्द्रान् आनन्दयन् ब्रह्मानन्दपरितृप्तानामपि शरीरमनःक्षोभं जनयन्नित्यर्थः ॥ ५ ॥

**प्रसाद्य गीर्भिः स्तुवतो मुनीन्द्राननन्यनाथावथ पार्षदौ तौ ।**
**संरम्भयोगेन भवैस्त्रिभिर्मामुपेतमित्यात्तकृपं न्यगादीः ॥ ६ ॥**

**प्रसाद्ये**ति । ततश्च त्वं स्तुवतः त्वद्दर्शनानन्तरं मूर्ध्ना प्रणम्य स्तुवतो मुनीन्द्रान् माध्वीभिर्गीर्भिः प्रसाद्य अथ अनन्तरम् अनन्यनाथौ आत्मैकशरणौ तौ सङ्कटस्थौ स्वपार्षदौ जयविजयौ आत्तकृपम् आत्ता अङ्गीकृता कृपा यस्मिन्निति क्रियाविशेषणम् । इत्येवं न्यगादीः उक्तवान् । कथमित्याह— त्रिभिर्हिरण्यकशिपुरावणशिशुपालादिरूपैर्भवैर्जन्मभिः तत्र तत्र संरम्भयोगेन संरम्भकर्तृकेण मयि समाधिनैरन्तर्येण युवां मामुपेतं मत्समीपमागच्छतमिति न्यगादीरित्यर्थः ॥ ६ ॥

**त्वदीयभृत्यौ किल काश्यपात् तौ सुरारिवीरावुदितौ दितौ द्वौ ।**
**सन्ध्यासमुत्पादनकष्टचेष्टौ यमौ च लोकस्य यमाविवान्यौ ॥ ७ ॥**

**त्वदीये**ति । तौ त्वदीयभृत्यौ भवत्पार्षदौ काश्यपान्मुनेर्दितौ तद्भार्यायां द्वौ सुरारिवीरौ हिरण्यकशिपुहिरण्याक्षनामधेयावसुरश्रेष्ठौ उदितौ उत्पन्नौ किल । सन्ध्यासमुत्पादनकष्टचेष्टाविति दितिः किल सपत्नीनां पुत्रसमृद्ध्या सन्तप्तहृदया सती काश्यपं स्वभर्तारं सन्ध्यायामग्निमिष्ट्वाग्न्यगार आसीनं कामातुरा मयि पुत्रमुत्पादयेति प्रार्थितवती । तेन च सन्ध्येयं क्षणं प्रतिपालयेत्युक्तापि मन्मथोन्म-

---

* 'स्वानाम्' इति तु सर्वत्र पठ्यते ।

थितचित्ता बलाद्दषेर्वासो जग्राह । स च तया सहोपविवेशेति । अतः सन्ध्यायां समुत्पादनेन कष्टचेष्टौ क्रूरकर्माणौ यमौ युगपदेकगर्भधृतौ यमौ, लोकस्य जनस्यान्यौ यमौ क्रूरकर्मणा वैवस्वताद् यमादन्यावन्तकौ (इव) बभूवतुरित्यर्थः ॥ ७ ॥

**हिरण्यपूर्वः कशिपुः किलैकः परो हिरण्याक्ष इति प्रतीतः ।**
**उभौ भवन्नाथमशेषलोकं रुषा न्यरुन्धां निजवासनान्धौ ॥ ८ ॥**

**हिरण्यपूर्व** इति । तयोरेको ज्येष्ठो हिरण्यपूर्वः कशिपुः हिरण्यकशिपुरिति प्रतीतः प्रसिद्धः । परोऽनुजो हिरण्याक्ष इति प्रसिद्धः । तावुभौ भवान् नाथो रक्षिता यस्य स भवन्नाथः, तमशेषलोकं सर्वलोकवासिनो जनान् रुषा न्यरुन्धां पीडयामासतुः । निजवासनया आसुरेण स्वभावेन अन्धौ विभ्रंशितपरमार्थज्ञानावित्यर्थः ॥ ८ ॥

**तयोर्हिरण्याक्षमहासुरेन्द्रो रणाय धावन्ननवाप्तवैरी ।**
**भवत्प्रियां क्ष्मां सलिले निमज्ज्य चचार गर्वाद् विनदन् गदावान् ॥९॥**

**तयोरिति** । तयोर्मध्ये हिरण्याक्षमहासुरेन्द्रः त्रिलोक्यां रणाय धावन्ननवाप्तवैरी देवानपि प्रतियोगितयालभमानः भवत्प्रियां क्ष्मां भूमिं सलिले प्रलयार्णवे निमज्ज्य भूमिं कर्णाभरणीकृत्य जले निमग्नः सन् गदावान् अंसन्यस्तमहागदः गर्वाद् विनदंश्चचार ॥ ९ ॥

**ततो जलेशात् सदृशं भवन्तं निशम्य बभ्राम गवेषयंस्त्वाम् ।**
**भक्तैकदृश्यः स कृपानिधे! त्वं निरुन्धि रोगान् मरुदालयेश! ॥ १० ॥**

**तत** इति । ततो जानुदघ्नजले वारिनिधौ क्रीडिष्यन् विभावरीं वरुणपुरीं गत्वा तं संयुगायाह्वयत् । ततो जलेशाद् वरुणमुखाद् भवन्तं सदृशं निशम्य रणमार्गेषु भवतः सदृशः पुराणपुरुषः श्रीनारायण एक एवेति श्रुत्वायं त्वां गवेषयन् मृगयन् बभ्राम । स त्वं भक्तैकदृश्य इति । केवलं भक्तैरेव प्रह्लादनारदादिभिः दृश्यः द्रष्टुं शक्यः । ननु भक्तैकदृश्यश्चेद् भगवान्, उपरि "भवन्तं संप्रापद्" (द. १३. श्लो. २) इत्युक्तिरनुपपन्नेति चेद्, मैवं, हिरण्याक्षो हि रौद्ररसोपायेन भगवति मनोनिवेशनाद् भक्तः । 'तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेद्' (श्री. भा. स्क. ७. अ. १. श्लो. ३४) इति वचनात् । अतोऽस्य भगवद्दर्शनं सम्भवति ।

विशेषतो मरणदशायामित्यपि सूचितम् ॥ १० ॥

इति सनकादिवैकुण्ठप्रवेश-जयविजयशाप-हिरण्यकशिपुहिरण्याक्षोत्पत्तिवर्णनम्

एकादशं दशकम्।

---

अथ वराहावतारहिरण्याक्षवधाद्यवतारयितुं मनोः प्रवृत्तिमाह—

**स्वायम्भुवो मनुरथो जनसर्गशीलो**
**दृष्ट्वा महीमसमये सलिले निमग्नाम् ।**
**स्रष्टारमाप शरणं भवदङ्घ्रिसेवा-**
**तुष्टाशयं मुनिजनैः सह सत्यलोके ॥ १ ॥**

**स्वायम्भुव** इति । अथो प्रजासर्गे ब्रह्मणो निदेशानन्तरं जनसर्गः प्रजोत्पादनं शीलं यस्य स जनसर्गशीलः असमये अनासन्नेऽपि प्रलयकाले स्रष्टारं स्वजनकं ब्रह्माणं भवदङ्घ्रिसेवया त्वत्पादाम्बुजोपासनया तुष्टाशयं सन्तुष्टमनसं मुनिजनैः सह सत्यलोके स्थितम् । मुनिजनैः सह शरणमापेति वा ॥ १ ॥

**कष्टं प्रजाः सृजति मय्यवनी निमग्ना**
**स्थानं सरोजभव! कल्पय तत् प्रजानाम् ।**
**इत्येवमेष कथितो मनुना स्वयम्भू-**
**रम्भोरुहाक्ष! तव पादयुगं व्यचिन्तीत् ॥ २ ॥**

**कष्टमिति** । हे सरोजभव! मयि प्रजाः सृजति सति अवनिः प्रलयाम्भसि निमग्नाभूत् कष्टम् अनाश्रयत्वान्नाहं भवन्निदेशं कर्तुं समर्थः । तत् तस्मात् प्रजानां मम च स्थानं कल्पय इत्येवं मनुना कथितो विज्ञापितः एष स्वयम्भूः हे अम्भोरुहाक्ष! तव पादयुगं व्यचिन्तीत् चिन्तयामास ॥ २ ॥

चिन्तयंस्तत्क्षणमेव हृदि दर्शनं गतं भवन्तं खिन्दानमानसश्चैवमाह—

**हा हा विभो! जलमहं न्यपिबं पुरस्ता-**
**दद्यापि मज्जति मही किमहं करोमि ।**

**इत्थं त्वदङ्घ्रियुगलं शरणं यतोऽस्य**
**नासापुटात् समभवः शिशुकोलरूपी ॥ ३ ॥**

**हाहेति** । हे विभो ! हाहा कष्टं जातम् । अहं पुरस्ताद् जनसर्गात् प्रागेव पृथिवीनिवेशनाय जलं न्यपिबं पीतवानस्मि । अद्यापि तुच्छीकृते जले मही मज्जति । अहं भवता सर्गे योजितः सन्नपि किं करोमि । अस्मिन् कर्मण्यस्माकं त्वमेव शरणम् । इत्थं त्वदङ्घ्रियुगलं शरणं यतः प्राप्नुवतः अस्य ब्रह्मणः नासापुटाद् नासिकोदरतः शिशुकोलरूपी वराहतोकरूपं बिभ्रत् समभवः अवतीर्णोऽभूरित्यर्थः ॥ ३ ॥

**अङ्गुष्ठमात्रवपुरुत्पतितः पुरस्ताद्**
**भूयोऽथ कुम्भिसदृशः समजृम्भथास्त्वम् ।**
**अभ्रे तथाविधमुदीक्ष्य भवन्तमुच्चै-**
**र्विस्मेरतां विधिरगात् सह सूनुभिः स्वैः ॥ ४ ॥**

**अङ्गुष्ठेति** । त्वं पुरस्तात् पूर्वं नासापुटाद् अङ्गुष्ठमात्रवपुः अङ्गुष्ठमात्रपरिमितशरीरः सन् उत्पतितः । अथ अनन्तरं भूयः पुनश्च कुम्भिसदृशो गजमात्रः समजृम्भथाः ववृधिषे । तथाविधं क्षणेन वर्धिष्णुम् अभ्रे मेघमार्गे उच्चैः उन्नतमुदीक्ष्य मुखान्युन्नमय्य दृष्ट्वा विधिः ब्रह्मा विस्मेरतां विस्मितत्वम् अगात् प्राप । सह सूनुभिः स्वैरिति । सूनवो मरीच्यादयः, तेऽपि विस्मिता बभूवुरित्यर्थः ॥

**कोऽसावचिन्त्यमहिमा किटिरुत्थितो मे**
**घोणापुटात्[2] किमु भवेदजितस्य माया ।**
**इत्थं विचिन्तयति धातरि शैलमात्रः**
**सद्यो भवन् किल जगर्जिथ घोरघोरम् ॥ ५ ॥**

**कोऽसाविति** । अचिन्त्यमहिमा अपरिच्छेद्यशरीरमहत्त्वः अप्रमेयप्रभावो वा किटिः सूकरो मे घोणापुटाद् नासापुटाद् उत्थित उत्पन्नः । अजितस्य विष्णोर्माया किमु भवेत् स एव मायया सूकरमूर्तिरवतीर्णः किमु भवेत् । धातरि इत्थं

---

१. 'छाग्रप' ख. पाठः. २. 'नासापु' क. पाठः.

विचिन्तयति सति सद्यः शैलमात्रः शैलद्वयसवपुर्भवन् त्वं घोरघोरम् अतिशयेन भयङ्करं यथा भवति तथा जगर्जिथ किल ॥ ५ ॥

तं ते निनादमुपकर्ण्य जनस्तपःस्थाः
सत्यस्थिताश्च मुनयो नुनुवुर्भवन्तम् ।
तत्स्तोत्रहर्षुलमनाः परिणद्य भूय-
स्तोयाशयं विपुलमूर्तिरवातरस्त्वम् ॥ ६ ॥

तमिति । ते तव तं निनादं गर्जितं जनस्तपःस्थाः जनस्तपोलोकस्था अपीत्यर्थः । सत्यस्थिताः सत्यलोकस्था नुनुवुः तुष्टुवुः । तत्स्तोत्रेण तेन स्तोत्रेण हर्षुलमनाः प्रसन्नचेताः सन् विपुलमूर्तिः पूर्वस्मादतिविस्तृतकायः सन् त्वं भूयः पुनरपि तेषां प्रसादाय परिणद्य गर्जन् तोयाशयं प्रलयाब्धिमवातरः अवगाहसे स्म ॥

ऊर्ध्वप्रसारिपरिधूम्रविधूतरोमा
प्रोत्क्षिप्तवालधिरवाङ्मुखघोरघोणः ।
तूर्णप्रदीर्णजलदः परिघूर्णदक्ष्णा
स्तोतॄन् मुनीञ्छिशिरयन्नवतेरिथ त्वम् ॥ ७ ॥

ऊर्ध्वेति । ऊर्ध्वं प्रसरणशीलानि परिधूम्राणि कृष्णलोहितानि विधूतानि कम्पितानि रोमाणि यस्य, स तथा । उत्क्षिप्तवालधिः उन्नीतपुच्छः अवाङ्मुखा अधःकृता घोरा भयङ्कराकारा घोणा नासिका यस्य, स तथा । तूर्णम् अतिलघु प्रदीर्णाः शकलीकृता जलदा येन । परिघूर्णता अक्ष्णा कम्पितापिङ्गलितोच्छूनाक्षिद्वयेन प्रकटितानुकम्पेन स्तोतॄन् मुनीन् शिशिरयन् आनन्दयन् त्वमवतेरिथ अवजगाहिषे ॥ ७ ॥

अन्तर्जलं तदनु सङ्कुलनक्रचक्रं
भ्राम्यत्तिमिङ्गिलकुलं कलुषोर्मिमालम् ।
आविश्य भीषणरवेण रसातलस्था-
नाकम्पयन् वसुमतीमगवेषयस्त्वम् ॥ ८ ॥

---

१. 'रा घो' क. पाठः.

**अन्तर्जलमिति** । तदनु जलप्रवेशानन्तरं त्वं सङ्कुलनक्रचक्रं भ्राम्यद्ग्राहसमूहं भ्राम्यत्तिमिङ्गिलकुलं भ्राम्यन्त इतस्ततः सञ्चरन्तः तिमिङ्गिला अनेकयोजनायामविस्तारा महामत्स्याः, तेषां कुलं समूहो यस्मिन् । क्षुब्धजलत्वात् कलुषा आविला ऊर्मिमालाः तरङ्गसमूहा यस्मिंस्तद् अन्तर्जलं जलमध्यम् आविश्य भीषणरवेण रसातलस्थान् जनान् आ समन्तात् कम्पयन् वसुमतीं निजप्रियां भूमिम् अगवेषयः अन्वेषणमकरोरित्यर्थः ॥ ८ ॥

**दृष्ट्वाथ दैत्यहतकेन रसातलान्ते**
**संवेशितां झटिति कूटकिटिर्विभो ! त्वम् ।**
**आपातुकानविगणय्य सुरारिखेटान्**
**दंष्ट्राङ्कुरेण वसुधामदधाः सलीलम् ॥ ९ ॥**

**दृष्ट्वेति** । अथ अनन्तरं दैत्यहतकेन असुराधमेन हिरण्याक्षेण रसातलान्ते संवेशितां विन्यस्तां वसुधां भूमिं हे विभो ! कूटकिटिर्मायावराहवपुस्त्वम् आपातुकान् आगच्छतः सुरारिखेटान् असुरापशदान् अविगणय्य तृणीकृत्य दंष्ट्राङ्कुरेण दशनाग्रेण सलीलं यथा भवति तथा अदधाः उद्धृतवानसि ॥ ९ ॥

**अभ्युद्धरन्नथ धरां दशनाग्रलग्न-**
**मुस्ताङ्कुराङ्कित इवाधिकपीवरात्मा ।**
**उद्धूतघोरसलिलाज्जलधेरुदञ्चन्**
**क्रीडावराहवपुरीश्वर ! पाहि रोगात् ॥ १० ॥**

**अभ्युद्धरन्निति** । अथ धरामभ्युद्धरन् दशनाग्रलग्नमुस्ताङ्कुराङ्कित इव यथान्यो वराहः पल्वले मुस्ताक्षतिं कुर्वन् दशनाग्रे मुस्ताङ्कुरेणाङ्कितो भवति, तद्वद् दर्शनीयो भवन् अधिकपीवरात्मा अतिपीनकायः उद्धूतं संक्षुब्धं घोरं भयङ्करं सलिलं यस्मिन्, तस्माज्जलधेरुदञ्चन्नुन्मज्जन् हे क्रीडावराहवपुः ! क्रीडार्थं धृतवराहतनो ! हे ईश्वर ! त्वं रोगात् पाहि ॥ १० ॥

**इति वराहावतार-भूम्युद्धरणवर्णनं द्वादशं दशकम् ।**

अनन्तरं नारदस्य हिरण्याक्षवधसाहाय्यं दर्शयति —

**हिरण्याक्षं तावद् वरद ! भवदन्वेषणपरं**
**चरन्तं सांवर्ते पयसि निजजङ्घापरिमिते ।**
**भवद्भक्तो गत्वा कपटपटुधीर्नारदमुनिः**
**शनैरूचे नन्दन् दनुजमपि निन्दंस्तव बलम् ॥ १ ॥**

हिरण्याक्षमिति । तावत् तव धरोद्धरणसमकालमेव संवर्तः प्रलयः, तत्सम्बन्धिनि पयसि कपटपटुधीः जगदनुग्रहायाङ्गीकृतकापट्या पट्वी तन्निपुणा धीर्यस्य स तथा दनुजं हिरण्याक्षं नन्दन् प्रशंसन् तव बलमपि निन्दन् शनैः सानुनयमूचे उक्तवान् ॥ १ ॥

श्रीनारदोक्तिमेव दर्शयति —

**स मायावी विष्णुर्हरति भवदीयां वसुमतीं**
**प्रभो ! कष्टं कष्टं किमिदमिति तेनाभिगदितः ।**
**नदन् क्वासौ क्वासाविति स मुनिना दर्शितपथो**
**भवन्तं संप्रापद् धरणिधरमुद्यन्तमुदकात् ॥ २ ॥**

स इति । स विष्णुः मायावी भवद्भिया वराहव्याजेनात्मानमाच्छाद्य भवदीयां भवता ब्रह्मणोऽपहृत्य रसातले निवेशितां, वसुमतीमिति । अनेनोपेक्षानौचित्यं द्योतयति । प्रभो! तन्निवारणसमर्थ ! कष्टं कष्टं किमिदम् अहो मन्दा अपि प्रभून् धिक्कुर्वन्ति, प्रभवश्चोपेक्षापराः कोऽयं क्रम इति तेनाभिगदितः प्रोत्साहितः स नदन् सिंहनादं कुर्वन् क्वासौ क्वासाविति साभिनिवेशं पृष्टेन मुनिना इत इत इति दर्शितः पन्था यस्य सः धरणिधरम् उदकादुद्यन्तं भवन्तं संप्रापत् संप्राप्तवान् ॥ २ ॥

दर्शनसमनन्तरमेव स भगवन्तमधिक्षिप्तवानित्याह —

**अहो आरण्योऽयं मृग इति हसन्तं बहुतरै-**
**र्दुरुक्तैर्विध्यन्तं दितिसुतमवज्ञाय भगवन् ! ।**
**महीं दृष्ट्वा दंष्ट्राशिरसि चकितां स्वेन महसा**
**पयोधावाधाय प्रसभमुदयुङ्क्था मृधविधौ ॥ ३ ॥**

**अहो** इति। अहो कष्टमेतदनेन मुनिना मम प्रतियोद्धृत्वेन प्रदर्शितोऽयमारण्यः अरण्यनिवासी मृगः सूकर इति हसन्तम् एवमादिवचनैः परिहसन्तं पुनरपि बहुतरैर्दुरुक्तैः रे सुराधम! मायामात्रप्रभाव! अनया गदया शीर्णशिरस्कं त्वां निहन्मि, इत्यादिभिर्दुर्वागिषुभिर्विध्यन्तं ताडयन्तं दितिसुतं दितेः प्रियं पुत्रं न तु काश्यपस्य हे भगवन्! त्वमप्यवज्ञायाधिक्षिप्य दंष्ट्राशिरासि चकितां दुःस्थां महीं दृष्ट्वा मत्प्रियस्यानेन सङ्गरे सति निमज्जेयमहमिति विचिन्त्य भीतां स्वेन अनन्यसाधारणेन महसा योगैश्वर्येण पयोधौ अगाधस्य सिन्धुजलस्योपरि आधाय विन्यस्यावनिमज्जनाभावाय चराचरसन्तानाय च तस्यां स्ववीर्यमाधायेत्यर्थः । प्रसभं बलात्कारेण मृधविधौ युद्धकर्मणि उदयुङ्क्थाः सन्नाहं चकृषे ॥ ३ ॥

**गदापाणौ दैत्ये त्वमपि हि गृहीतोन्नतगदो**
**नियुद्धेन क्रीडन् घटघटरवोद्घुष्टवियता ।**
**रणालोकौत्सुक्यान्मिलति सुरसङ्घे द्रुतममुं**
**निरुन्ध्याः सन्ध्यातः प्रथममिति धात्रा जगदिषे ॥ ४ ॥**

**गदापाणाविति**। दैत्ये गदापाणौ युयुत्सति सति, हि हेतौ, यस्मादेवं तस्मात् त्वमपि गृहीता स्मृतिमात्र एव कराम्बुजं प्राप्ता उन्नता महती गदा कौमोदकी येन तथाभूतः सन् नियुद्धेन द्वन्द्वयुद्धेन क्रीडन् शनैश्शनैः। कीदृशेन नियुद्धेन, घटघटरवैरितरेतरगदाभिघातसमुत्थैरुद्घुष्टमुच्चैः शब्दायमानं वियद् अण्डकटाहकुहरं यस्मिंस्तद् घटघटरवोद्घुष्टवियत्, तेन। रणालोकौत्सुक्याद् भगवतः श्रीवराहमूर्तेः पराक्रमदर्शनकौतुकातिशयेन सुराणां सङ्घे मिलति[1] ससम्मर्दं स्थितवति सति सन्ध्यातः प्रथमं पूर्वं द्रुततरं यावत् सन्ध्यां स्वकालं प्राप्यासौ न वर्धेत तावद् द्रुततरममुं दैत्यं निरुन्ध्या निगृहाण इति धात्रा जगदिषे ब्रह्मा भवन्तं विज्ञापितवानित्यर्थः ॥ ४ ॥

**गदोन्मर्दे तस्मिंस्तव खलु गदायां दितिभुवो**
**गदाघाताद् भूमौ झटिति पतितायामहह भोः! ।**
**मृदुस्मेरास्यस्त्वं दनुजकुलनिर्मूलनचणं**
**महाचक्रं स्मृत्वा करभुवि दधानो रुरुचिषे ॥ ५ ॥**

---

१. 'ति अहमहमिकया स' क. पाठः.

**गदोन्मर्दे** इति । तस्मिन् गदोन्मर्दे गदायुद्धे तव खलु गदायां तव हस्तस्थितायामेव दितिभुवो हिरण्याक्षस्य गदाघाताद् गदाप्रहारेण झटिति भूमौ पतितायाम् । अहहेति खेदे, अथवाद्भुते । मयि संरम्भयोगेनापि समाधिनैरन्तर्यं कुर्वतो मद्दासस्य सकृदपि समीहितं साधयामीति भगवता स्वयमेव पातिता गदा, अहो भवतो भक्तवात्सल्यमिति भावः । हे विभो ! अत एव त्वं मृदुस्मेरास्यः न गदापातात् खिन्नोऽभूः, किन्तु मृदुमन्दस्मितविकसितमुखाम्बुजः सन् दनुजकुलानामसुरसमूहानां निर्मूलनेन सुदर्शनमिति प्रसिद्धं महाचक्रं स्मृत्वा करभुवि स्मृतमात्र एव सम्प्राप्तं दधानो रुरुचिषे शत्रोः कण्ठदेशं लक्षीकृत्योन्नमितदक्षिणकरेण सुदर्शनं गृह्णन् त्वम् । जाज्वल्यमानकालचक्रतेजसा वैष्णवेन तेजसा च सञ्जातोत्कर्षं तव रूपं सकलजनचक्षुरिन्द्रियगोचरतामगमदित्यर्थः ॥ ५ ॥

**ततः शूलं कालप्रतिमरुषि दैत्ये विसृजति**
**त्वयिच्छिन्दत्येनत् करकलितचक्रप्रहरणात् ।**
**समारुष्टो मुष्ट्या स खलु वितुदंस्त्वां समतनोद्**
**गलन्माये मायास्त्वयि किल जगन्मोहनकरीः ॥ ६ ॥**

**तत** इति । यस्मात् तव करकमलाद् गदापातेऽप्यव्याकुलहृदयता वैष्णवतेजःप्रकाशश्च तत इत्यर्थः । कालप्रतिमरुषि जगत्संहारकारिकालाग्निरुद्रसदृशकोपे दैत्ये कर्तरि शूलं विसृजति प्रयोक्तुमुद्यच्छति सत्येव त्वयि एनत् त्रिशूलं करे कलितस्य चक्रस्य सुदर्शनस्य प्रहरणात् छिन्दति द्विधाकुर्वति सति स खलु दैत्यः समारुष्टः पूर्वस्मादप्यतिकुपितो मुष्ट्या त्वां वितुदन् मुष्टीकृताभ्यामुभाभ्यां कराभ्यामुरसि दृढं प्रहरन् त्वयि जगन्मोहनकरीः त्वदितरजनसम्मोहसम्पादयित्रीः मायाः समतनोत् प्रायुङ्क्त । गलन्माय इति एवंविधा माया गलन्त्यो दूरस्था भवन्ति यस्मात् स तथा, अथवेश्वरस्य स्वरूपभूता विगलन्ती पृथगिवात्मानं प्रकाशयन्ती जगत्सृष्ट्यादिकारिणी यस्मात् तादृशे त्वयीत्यर्थः ॥ ६ ॥

गलन्मायत्वमेव दर्शयति —

**भवच्चक्रज्योतिष्कणलवनिपातेन विधुते**
**ततो मायाचक्रे विततघनरोषान्धमनसम् ।**

---

१. 'भगव' क. पाठः.

**गरिष्ठाभिर्मुष्टिप्रहृतिभिरभिघ्नन्तमसुरं**
**[1]कराग्रेण स्वेन श्रवणपदमूले निरवधीः ॥ ७ ॥**

**भवदिति** । भवतो विष्णोः सुदर्शनाख्यस्य चक्रस्य ज्योतिषस्तेजसः कणः स्फुलिङ्गस्तस्य लवो लेशस्तस्य निपातेन प्रसरणेन मायानामासुरीणां चक्रे समूहे विधुते चलिते । यथा रवेः प्रकाशलेशनिपातेन नैशं तमः, तद्वददर्शनं गते सतीत्यर्थः । ततः स्वारम्भवैफल्यानन्तरं विततो व्याप्तो घनो निबिडो यो रोषस्तेनान्धं मनो यस्य स विततघनरोषान्धमनाः तम् । करकलितं सुदर्शनमनन्यसाधारणं प्रभावं च दृष्ट्वापि प्राग्जन्मशापप्रभावेन स्वस्वामिनमजानन्तमिति भावः । गरिष्ठाभिर्गुरुतराभिर्मुष्टिप्रहृतिभिरभिघ्नन्तं विजिगीषया पुनः पुनः प्रयुञ्जानं "कराग्रेण स्वेन श्रवणपदमूल" इति पाठः समीचीनः । "करेण कर्णमूलेऽहन्", "निहतः करेण" (स्क. ३. अ. १९. श्लो. २५, २८) इति च भागवतोक्तेः । अनन्तरश्लोके च "तव करसरोजप्रमथित" इति ॥ ७ ॥

**महाकायः सोऽयं तव [2]करसरोजप्रमथितो**
**गलद्रक्तो वक्त्रादपतदृषिभिः श्लाघितहतिः[3] ।**
**तदा त्वामुद्दामप्रमदभरविद्योतिहृदया**
**मुनीन्द्राः सान्द्राभिः स्तुतिभिरनुवन्नध्वरतनम् ॥ ८ ॥**

**महाकाय** इति । 'भगवता स्वकराग्रेण कर्णकपोलसन्धौ ताडितोऽस्य मुखं पश्यन्नेवासौ तनुं जहौ, अहो भाग्यं, को न्विमां संस्थितिं लभेत' इत्यृषिभिः श्लाघिता सशिरःकम्पं स्तुता हतिर्निग्रहो यस्य स तथा । उद्दामप्रमदभरेणान्तर्दुर्वहेण सन्तोषातिशयेन विद्योति शोभनशीलं हृदयं येषां ते मुनीन्द्रा जनस्तपःसत्यलोकनिवासिनः सान्द्राभिः सम्भूय कृतत्वाद् बधिरीकृतदशदिशाभिः स्तुतिभिः स्तोत्रैरध्वरतनुं यज्ञाङ्गं श्रीवराहमूर्तिमनुवन् तुष्टुवुः ॥ ८ ॥

अध्वरतनुत्वेनैव स्तौति—

**त्वचि च्छन्दो रोमस्वपि कुशगणश्चक्षुषि घृतं**
**चतुर्होतारोऽङ्घ्रौ स्रुगपि वदने चोदर इडा ।**

---

१. 'स्वपादाङ्गुष्ठेन' ख. पाठः. २. 'चरणपातप्र' ग. घ. पाठः. ३. 'ग' क. पाठः.

**ग्रहा जिह्वायां ते परपुरुष! कर्णे च चमसा**
**विभो! सोमो वीर्यं वरद! गलदेशेऽप्युपसदः ॥ ९ ॥**

**त्वचीति**। छन्दो गायत्र्यादि त्वचि गायत्र्यादिच्छन्दांस्येव तव त्वागित्यर्थः। अध्वर्युब्रह्महोत्रुद्गातारश्चत्वार ऋत्विग्यजमाना एव चतुर्होतारः अङ्घ्रावङ्घ्रिषु। स्रुग् जुहूः वदने तुण्डे। इडा पुरोडाशद्रव्यनिधानपात्रविशेषः उदरे। ग्रहाः सोमसङ्ग्रहणपात्रविशेषास्ते जिह्वयाम्। चमसाः भक्षणसाधनद्रव्यानिधानपात्रभेदाः कर्णे कर्णरन्ध्रयोः। सोमः सोमवल्लीरसो वीर्यं रेतः। उपसदः प्रवर्ग्यानन्तरं क्रियमाणा इष्टयः, तास्ते गलदशे ॥ ९ ॥

**मुनीन्द्रैरित्यादिस्तवनमुखरैर्मोदितमना**
**महीयस्या मूर्त्या विमलतरकीर्त्या च विलसन्।**
**स्वधिष्ण्यं संप्राप्तः सुखरसविहारी मधुरिपो!**
**निरुन्ध्या रोगं मे सकलमपि वातालयपते! ॥ १० ॥**

**मुनीति**। मुनीन्द्रैरित्यादीत्यादिशब्देन प्रायणीयोदयनीये इष्टी ते दंष्ट्रे इत्यादि गृह्यते। स्तवनमुखरैः स्तुतिशब्दजल्पाकैः मोदितं कृतप्रसादं मनो यस्य स तथा। महीयस्या अतिशयेन पूजनीयया मूर्त्या स्वविग्रहेण विमलतरया जगत्पवित्ररूपया कीर्त्या च विलसन् शोभमानः सुखरसविहारी स्वैरं क्रीडमानः स्वधिष्ण्यं वैकुण्ठं संप्राप्तः ॥ १० ॥

इति हिरण्याक्षयुद्ध-तद्वध-यज्ञवराहस्तुतिवर्णनं

**त्रयोदशं दशकम्।**

---

एवं वराहावतारेण कृतप्रतिष्ठायां भुवि तदाश्रयत्वेन स्वायंभुवस्य मनोः प्रजापालनप्रकारमाह—

**समनुस्मृततावकाङ्घ्रियुग्मः स मनुः पङ्कजसम्भवाङ्गजन्मा।**
**निजमन्तरमन्तरायहीनं चरितं ते कथयन् सुखं निनाय ॥ १ ॥**

---

१. 'न म' क. पाठः.

**समनुस्मृतेति** । सम्यग् यमनियमादियुक्तमनुस्मृतं लयविक्षेपादिराहित्येन चिन्तितं तावकाङ्घ्रियुग्मं त्वत्पादपद्मयुगलं येन । पङ्कजसम्भवस्याङ्गजन्मा पुत्रः स प्रसिद्धः स्वायम्भुवो मनुः निजमन्तरं चतुर्युगाणां साधिकैकसप्ततिपरिमितं कालम् अन्तरायाः शारीरमानसदैविकभौतिकाः क्लेशाः प्रजापालनोपरोधाः, तद्रहितम् । एतच्च भवदङ्घ्रिस्मरणतच्चरितकथनानुभावात् । अत एव सुखं स्वैरं यथा भवति तथा निनाय गमयामास ॥ १ ॥

अथ कापिलप्रसङ्गाय कर्दमकथा प्रस्तूयते—

**समये खलु तत्र कर्दमाख्यो द्रुहिणच्छायभवस्तदीयवाचा ।**
**धृतसर्गरसो निसर्गरम्यं भगवंस्त्वामयुतं समाः सिषेवे ॥ २ ॥**

**समय** इति । तत्र समये तस्मिन् काले कर्दम इत्याख्या यस्य स प्रजापतिः द्रुहिणच्छायभव इति, "छायायाः कर्दमो जज्ञे" (श्री. भा. स्क. ३. अ. १२ श्लो. २७) इत्युक्तेः । तदीयवाचा प्रजाः सृजेति ब्रह्मण आदेशाद् धृतसर्गरसः प्रजासृष्टिकामः सन् । निसर्गरम्यं स्वत एव सञ्चिन्तकहृदयरञ्जकम् अयुतं समा दशसहस्रसंवत्सरं सिषेवे तपश्चकार ॥ २ ॥

**गरुडोपरि कालमेघकम्रं विलसत्केलिसरोजपाणिपद्मम् ।**
**हसितोल्लसिताननं विभो! त्वं वपुराविष्कुरुषे स्म कर्दमाय ॥ ३ ॥**

**गरुडेति** । त्वं तस्मै गरुडोपरि गरुडांसदेशविन्यस्तचरणाम्बुजं वपुराविष्कुरुषे स्म दर्शयामासिथ ॥ ३ ॥

**स्तुवते पुलकावृताय तस्मै मनुपुत्रीं दयितां नवापि पुत्रीः ।**
**कपिलं च सुतं स्वमेव पश्चात् स्वगतिं चाप्यनुगृह्य निर्गतोऽभूः ॥ ४ ॥**

**स्तुवत** इति । ततश्च भुवि पतित्वा प्रणम्योत्थाय स्तुवते प्रमोदभारेण पुलकावृताय तस्मै कर्दमप्रजापतये मनुपुत्रीं देवहूतिं दयितां भार्यां तस्यां नव पुत्रीरपि स्वं स्वांशभूतं कपिलं सुतं च पश्चादन्ते स्वगतिं मोक्षं चानुगृह्य निर्गतोऽभूः प्रस्थितवानासि । स्वायंभुवो मनुर्ब्रह्मावर्तं नाम देशमधिवसति, स रथेन स्वमहिष्या शतरूपया सहेतः

१. 'स्थिताय' ख. पाठः. २. 'सि' क. पाठः.

परश्वस्त्वां दिदृक्षुरागत्य तुभ्यं स्वात्मजां दास्यति, त्वं च तस्यां नव पुत्रीर्जनयिष्यसि, अहं च स्वांशेन तव पुत्रत्वेनावतरिष्यामीत्यनुगृह्य भवान् जगामेत्यर्थः ॥४॥

**स मनुः शतरूपया महिष्या गुणवत्या सुतया च देवहूत्या ।**
**भवदीरितनारदोपदिष्टः समगात् कर्दममागतिप्रतीक्षम् ॥ ५ ॥**

**स** इति । भवदीरितनारदोपदिष्टः भवदीरितेन भवता प्रेरितेन नारदेनोपदिष्टः। नारदेन हि देवहूत्यै कर्दमवयःशीलरूपगुणवर्णनपूर्वकं कर्दमाय स्वात्मजां प्रयच्छेति मनुरुक्तः । आगतिप्रतीक्षमिति, अपिनाम मनुरिदानीं स्वां दयितां दुहितरमादायागच्छतीति मार्गे दत्तदृष्टिमित्यर्थः ॥५॥

**मनुनोपहृतां च देवहूतिं तरुणीरत्नमवाप्य कर्दमोऽसौ ।**
**भवदर्चननिर्वृतोऽपि तस्यां दृढशुश्रूषणया दधौ प्रसादम् ॥ ६ ॥**

**मनुने**ति । उपहृतां सपारिबर्हं सत्कृत्य दत्ताम्। भवदर्चननिर्वृतोऽपि निवृत्तिधर्मनिरतोऽपि दृढया अव्यभिचारिण्या अमायया शुश्रूषणया प्रसादं दधौ ॥६॥

**स पुनस्त्वदुपासनप्रभावाद् दयिताकामकृते कृते विमाने ।**
**वनिताकुलसङ्कुले नवात्मा व्यहरद् देवपथेषु देवहूत्या ॥ ७ ॥**

**स** इति। दयिताकामकृते प्रिययाभ्यर्थितस्तदिच्छानुसरणार्थं कृते स्वयोगानुभावेन रचिते वनिताकुलसङ्कुले परिचारकविद्याधरस्त्रीसहस्रपरिवृते नवो नूत्नो मोहनवेषोज्ज्वलः षोडशवर्षीय आत्मा देहो यस्य स नवात्मा। अथवा नव आत्मानः शरीराणि यस्य, सुरतोत्सुकां प्रियामात्मानं नवधा विभज्य रमयन् देवपथेषु नन्दनपुष्पभद्रचैत्ररथादिदेवोद्यानेषु व्यहरत् क्रीडां चक्रे ॥ ७ ॥

**शतवर्षमथ व्यतीत्य सोऽयं नव कन्याः समवाप्य धन्यरूपाः ।**
**वनयानसमुद्यतोऽपि कान्ताहितकृत् त्वज्जननोत्सुको न्यवात्सीत् ॥ ८ ॥**

**शतवर्ष**मिति। वनयानसमुद्यतः तपसे वनं जिगमिषुरपि कान्ताहितकृद् दुहितृवरप्रदानपुत्रजननादि कुर्वन्, तत्रापि त्वज्जननोत्सुकः ॥ ८ ॥

---

१. 'भगवा' क. पाठः. २. 'त्सुकोऽपि' ख. पाठः.

**निजभर्तृगिरा भवन्निषेवानिरतायामथ देव! देवहूत्याम् ।**
**कपिलस्त्वमजायथा जनानां प्रथयिष्यन् परमात्मतत्त्वविद्याम् ॥ ९ ॥**

**निजेति** । परमात्मनस्तत्त्वानां चतुर्विंशतेश्च विद्यां ज्ञानं जनानां प्रथयिष्यन् आचार्यपरम्परयागमरूपेण प्रकाशयितुमुद्यतः ॥ ९ ॥

**वनमेयुषि कर्दमे प्रसन्ने मतसर्वस्वमुपादिशञ्जनन्यै ।**
**कपिलात्मक! वायुमन्दिरेश! त्वरितं त्वं परिपाहि मां गदौघात् ॥१०॥**

**वनमिति** । वनमेयुषि स्वदुहितॄर्मरीच्यादिभ्यो ब्रह्मपुत्रेभ्यो दत्त्वा वनं गतवति सति जनन्यै मतसर्वस्वं सर्वस्वीयावयवयुक्तं स्वसिद्धान्तमुपादिशन् ग्राहयन् । त्वरितमतिलघु ॥ १० ॥

इति कपिलोपाख्यानं चतुर्दशं दशकम् ।

---

**मतिरिह गुणसक्ता बन्धकृत् तेष्वसक्ता**
**त्वमृतकृदुपरुन्धे भक्तियोगस्तु सक्तिम् ।**
**महदनुगमलभ्या भक्तिरेवात्र साध्या**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १ ॥**

**मतिरिति** । इह त्रिषु लोकेषु ये गुणाः स्रक्चन्दनवनितामृतादिविषयास्तेषु सक्ता मतिः पुरुषस्य बन्धकृत् शरीरबन्धं करोति । तेषु गुणेष्वसक्ता तु तथा बन्धाय न भवति । अपिचामृतं मोक्षं करोति । तर्हि गुणसङ्गः केन त्यज्येतात आह—उपरुन्ध इति । भक्तियोगस्तु सक्तिमुपरुन्धे प्रतिबध्नाति । अथ भक्तिः केन साध्यत इत्यत आह—महादिति । महतां सतामनुगमनेन शुश्रूषया लभ्या भक्तिः । सैवात्र लोके मुमुक्षुभिः साध्येति कपिलतनुः कपिलवासुदेवत्वेनावतीर्णस्त्वं देवहूत्यै स्वमात्रे न्यगादीः उपदिष्टवान् ॥ १ ॥

**प्रकृतिमहदहङ्काराश्च मात्राश्च भूता-**
**न्यपि हृदपि दशाक्षी पूरुषः पञ्चविंशः ।**
**इति विदितविभागो मुच्यतेऽसौ प्रकृत्यां**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ २ ॥**

---

१. 'त्याः' मूलपाठः.

**प्रकृती**ति। प्रकृतिर्मूलप्रकृतिः सर्वकारणत्वाद्, या प्रधानमव्यक्तमविद्या माये-त्यादिशब्दैरभिधीयते, महद् महत्तत्त्वं मूलप्रकृतिकार्यम्, अहङ्कारा महत उत्पन्नाः सात्त्विकराजसतामसाः, मात्रास्तामसाहङ्कारकार्याण्यपञ्चीकृतपञ्चभूतानि शब्दस्पर्शरूपरसगन्धरूपाणि, भूतानि पञ्च महाभूतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि, हृद् मनः, दशानामक्षाणामिन्द्रियाणां घ्राणरसनचक्षुःश्रोत्रत्वग्वाक्पाणिपादपायूपस्थानां समाहारो दशाक्षी। एवं चतुर्विंशतितत्त्वानि। पूरुषः पुरुषो जीवेश्वरभेदाद् द्विधा इति विदितो विभागो येन स तथा। असौ जीवः। प्रकृत्या मायया, तत्कार्यशरीरादिबन्धैर्वा ॥ २ ॥

ननु बन्धस्य वास्तवत्वे जीवस्य तस्माद् मोक्षो न स्यादित्याशङ्क्य तस्याविद्याविलसितत्वेन ज्ञाननिवर्त्यत्वमाह—

**प्रकृतिगतगुणौघैर्नाज्यते पूरुषोऽयं**
**यदि तु सजति तस्यां तद्गुणास्तं भजेरन्।**
**मदनुभजनतत्त्वालोचनैः साप्यपेयात्**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ३ ॥**

**प्रकृती**ति। प्रकृतिरिति प्रकृतिकार्यचतुर्विंशतितत्त्वमयानि जरायुजाण्डजस्वेदजोद्भिज्जानि चतुर्विधानि शरीराण्युच्यन्ते, तद्गतगुणौघाः कर्तृत्वभोक्तृत्वादयः, तैर्नाज्यते नोपरज्यते। शरीरस्थोऽप्ययं जीवः परमार्थतः शरीरधर्मैः कर्तृत्वभोक्तृत्वजन्ममरणादिभिर्न लिप्यत इत्यर्थः। अयं पुरुषो यदि तस्यां प्रकृत्यां शरीरादौ सजति अहं ममेत्यभिमन्यते, तर्हि तद्गुणाः प्रकृतिगुणास्तं भजेरन् जननमरणादिसंसारदुःखमनुभावयन्तीत्यर्थः। अत्र यदिशब्दः प्रकृतिसंबन्धस्यापरमार्थत्वं द्योतयति। मदनुभजनमीश्वरप्रणिधानं, तत्त्वालोचनं ब्रह्मज्ञानं, तैः। तत्र श्रवणमनननिदिध्यासनरूपप्रकारभेदाद् बहुवचनम्। सा प्रकृतिरपेयात्। तदुक्तं "तीव्रेणात्मसमाधिना। प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम्। तिरोभवित्री" (श्रीभा. स्क. ३. अ. २७. श्लो.२२, २३)इति ॥ ३ ॥

ईश्वरभजनस्याष्टाङ्गत्वमाह—

**विमलमतिरुपात्तैरासनाद्यैर्मदङ्गं**
**गरुडसमधिरूढं दिव्यभूषायुधाङ्कम्।**

**रुचितुलिततमालं शीलयेतानुवेलं**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ४ ॥**

**विमलेति** । विमला यमनियमैर्विशुद्धा मतिर्यस्य स तथा । उपात्तैः स्वीकृतै-र्विजितैरित्यर्थः । आसनाद्यैः प्राणायामप्रत्याहारधारणाध्यानसमाधिभिः ममेश्वरस्याङ्गं रूपं दिव्यान्यप्राकृतानि भूषायुधान्येवाङ्को लाञ्छनं यस्य । अनुवेलं सर्वदा शीलयेता-भ्यस्येत् ॥ ४ ॥

संप्रति ज्ञानयोगाद् भक्तिमार्गस्य सुगमत्वमाह—

**मम गुणगणलीलाकर्णनैः कीर्तनाद्यै-**
**र्मयि सुरसरिदोघप्रख्यचित्तानुवृत्तिः ।**
**भवति परमभक्तिः सा हि मृत्योर्विजेत्री**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ५ ॥**

**ममेति** । तत्र भक्तिर्द्वेधा साधनसाध्यभेदात् । ममेश्वरस्य गुणगणा भ-क्तवात्सल्यादयः, लीलाः चरितानि, तदाकर्णनैः । कीर्तनमाद्यं येषां स्मरणनमस्कारा-र्चनवन्दनदास्यसख्यात्मनिवेदनानां ते तथा तैः । नवलक्षणया साधनभक्त्येत्यर्थः । परमभक्तिः साध्यभक्तिर्भवतीत्युक्तम् । तस्याः स्वरूपमाह—मयीति । सुरसरिदोघ-प्रख्या गङ्गाप्रवाहतुल्या चित्तानुवृत्तिः प्रेमात्मिका मनोवृत्तिः, साध्यभक्तिरित्यर्थः । सा भक्तिः । हिरवधारणे । मृत्योः संसारस्य विजेत्री विशेषेणानायासेनैव संसारस्य समूलोन्मूलनीत्यर्थः ॥ ५ ॥

अथ भक्तिदार्ढ्यार्थं केवलपापकर्मणा नरकपातप्रकारमाह—

**अहह बहुलहिंसासञ्चितार्थैः कुडुम्बं**
**प्रतिदिनमनुपुष्णन् स्त्रीजितो बाललाली ।**
**विशति हि गृहसक्तो यातनां मय्यभक्तः**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ६ ॥**

**अहहेति** । अहहेति खेदे । बहुलया प्रभूतया हिंसया उपद्रवेण परार्थस्पृहया इतस्ततश्चौर्यादिना सञ्चितैरार्जितैरर्थैर्धनधान्यादिभिः कुडुम्बं पुत्रभार्यादीन् । यातनां रौरवादिनरकं विशति । केवलपापकर्मिणो नरकप्रवेशप्रकारश्चोक्तः "यमदूतैर्यातना-

शरीरं नीत्वा पाशैर्गले बद्ध्वाकृष्य त्रिभिर्मुहूर्तैर्नवनवतिसहस्रयोजनदूरे यमसदनं प्रापितोऽष्टाविंशतिकोटिनरकभेदान् पापतारतम्येनानुभूयानन्तरं तृणादिषु विंशतिलक्षं जन्मान्यवाप्य जलजन्तुषु नवलक्षं कृमिजातिष्वेकादशलक्षं पक्षिजातिषु दशलक्षं चतुष्पाज्जातिषु सप्तकोटिजन्मानि चावाप्यानन्तरं मनुष्यजातिषु चतुर्लक्षं ब्राह्मणजातिषु हीनमध्योत्तमतया शतं च जन्मान्यवाप्य तत्र पुनरपि पापकृच्चेन्नरकेषु पतति" इति ॥ ६ ॥

सम्प्रति समाभ्यां पुण्यपापाभ्यां पुनः पुनर्मर्त्यलोकप्राप्तिमाह—

**युवतिजठरखिन्नो जातबोधोऽप्यकाण्डे**
**प्रसवगलितबोधः पीडयोल्लङ्घ्य बाल्यम् ।**
**पुनरपि बत मुह्यत्येव तारुण्यकाले**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ७ ॥**

**युवतीति** । मातुर्गर्भे विण्मूत्रगर्ते खिन्नः कट्वम्लक्षारोष्णैर्मातृभुक्तान्नपानादिभिः कृमिभिश्चोपद्रुतः अकाण्डे दुःखप्रतीकारकरणासम्भवकाले जातबोधः गर्भस्थः सप्तमे मासि दैवाल्लब्धस्मृतिर्भवति । तथापि जीवः किं नाम करोति । प्रसवे सूतिमारुतनोदनेन योनियन्त्रनिष्पीडनेन च गलितोऽपगतो जन्मशतसञ्चितकर्मविषयो बोधो यस्य । पुनश्च पीडयेष्टानिष्टप्राप्तिपरिहारासामर्थ्यसम्भूतेन दुःखेन सह बाल्यमुल्लङ्घ्य पुनरपि तारुण्यकाले भगवद्भजनसामर्थ्ये सत्यपि मुह्यत्येव । कामक्रोधपराधीनः सन् काम्यं निषिद्धं वा कर्म कुर्वाणस्तमो विशतीत्यर्थः ॥ ७ ॥

केवलेन पुण्येन स्वर्गादिगतिं दर्शयति—

**पितृसुरगणयाजी धार्मिको यो गृहस्थः**
**स च निपतति काले दक्षिणाध्वोपगामी ।**
**मयि निहितमकामं कर्म तूदक्पथार्थं**
**कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ ८ ॥**

**पित्रिति** । भगवद्धर्मविमुखतया पितॄन् सुरगणांश्च सर्वकाम्यादिफलकामनया यष्टुं शीलमस्येति तथा । धार्मिकः निषिद्धकर्मपरित्यागेन केवलविहितकर्मानुष्ठाता ।

चोऽप्यर्थे । सोऽपि काले पुण्यक्षये सति निपतति पुनरावर्तते । दक्षिणाध्वोपगामी धूमादिमार्गगमनशीलः । धूमादिमार्गगमनागमनप्रकारश्चेत्थं—केवलकाम्यकर्मकृज्जीवः प्रारब्धावसाने चक्षुरादीन्द्रियद्वारा लिङ्गशरीरेण निर्गच्छति । तं च धूमाभिमानिनी देवता रात्र्यभिमानिदेवताहस्ते प्रयच्छति, रात्रिकालाभिमानिनी देवता कृष्णपक्षाभिमानिदेवतायै, सा च दक्षिणायनषण्मासाभिमानिन्यै । सा च पितृलोकमार्गेणाकाशे चन्द्रमसं सन्निधापयति । तत्र यावत्सुकृतावसानं स्वर्गसुखमनुभूय भूमौ पतिष्यन् प्रथममाकाशमार्गे पतित्वा ततो वायुधूमाभ्रवृष्टिक्रमेणौषधीषु[2] पतति[1] । ओषधीभ्यः अन्नमन्नाद्रेतो भूत्वा स्त्रीयोनिं गतः शरीरी भवतीति । यदि पुण्यशेषस्तर्हि ब्राह्मणादियोनौ, पापशेषस्तर्हि चण्डालादियोनौ च जायते । तर्हि किं कुर्वन्नुत्तरायणमार्गेण यातीत्यत आह—मयीति । मयीश्वरे निहितं समर्पितम् अकामं काम्यनिषिद्धव्यतिरिक्तं कर्म नित्यनैमित्तिकप्रायश्चित्तोपासनरूपम् । तुरेवार्थे । उदक्पथार्थमार्चिरादिमार्गप्राप्तिफलकमिति यावत् ॥ ८ ॥

अथ भगवत्प्रयाणं देवहूतेर्मोक्षप्राप्तिं चैकेन श्लोकेनाह—

**इति सुविदितवेद्यां देव! हे देवहूतिं**
**कृतनुतिमनुगृह्य त्वं गतो योगिसङ्घैः ।**
**विमलमतिरथासौ भक्तियोगेन मुक्ता**
**त्वमपि जनहितार्थं वर्तसे प्रागुदीच्याम् ॥ ९ ॥**

इतीति । सुविदितं सम्यगवधृतं वेद्यं वस्तु ब्रह्म तत्प्राप्तिसाधनं च यया ताम् । अथ त्वद्गमनानन्तरम् । असौ देवहूतिः । त्वमपि कपिलोऽपि जनहितार्थं त्रैलोक्यरक्षायै प्रागुदीच्यां दिशि वर्तसे ॥ ९ ॥

अथ कापिलमुपसंहरन् भक्तिं प्रार्थयते—

**परम! किमु बहूक्त्या त्वत्पदाम्भोजभक्तिं**
**सकलभयविनेत्रीं सर्वकामोपनेत्रीम् ।**
**वदसि खलु दृढं त्वं तद् विधूयामयान् मे**
**गुरुपवनपुरेश! त्वय्युपाधत्स्व भक्तिम् ॥ १० ॥**

---

१. 'भ्रमेघवृ' क. पाठः.　२. 'ति । अभ्रं जलं बि(भ्रति? भर्ति) वर्षति मेघ इति भेदः । ओ' क. पाठः.

**परमेति** । सकलभयानां संसारदुःखस्यापि विनेत्रीं विनयनमुपशमं कर्त्रीं समूलोन्मूलनीमित्यर्थः । सर्वकामानभीष्टार्थानुपनयाति प्रापयतीति सर्वकामोपनेत्री, ताम् । दृढं निश्चयेन । तत् तस्माद्, यस्माद् भयनिवृत्तयेऽभीष्टप्राप्त्यै च त्वद्भक्तिरेव प्रार्थनीयेति निस्संशयं त्वयोक्तं, तस्मादित्यर्थः । उपाधत्स्व सङ्क्रामय । भक्तिं प्रेमलक्षणाम् ॥ १० ॥ ८३ ॥

इति कपिलोपाख्यानं पञ्चदशं दशकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

**भक्तप्रियाख्यायां**

**तृतीयस्कन्धपरिच्छेदः ।**

---

आदितः श्लोकसङ्ख्या १५८.

## अथ चतुर्थस्कन्धपरिच्छेदः ।

महदादेः प्रजेशानां ब्रह्माण्डस्य च सम्भवः ।
सर्गलीलोदिता विष्णोर्विसर्गोऽथ निरूप्यते ॥

अथ विसर्गोपयोगिनरनारायणावतारचरितप्रस्तावाय दक्षपरिणयनाद्याह —

**दक्षो विरिञ्चतनयोऽथ मनोस्तनूजां**
**लब्ध्वा प्रसूतिमिह षोडश चाप कन्याः ।**
**धर्मे त्रयोदश ददौ पितृषु स्वधां च**
**स्वाहां हविर्भुजि सतीं गिरिशे त्वदंशे ॥ १ ॥**

**दक्ष** इति । कथान्तरारम्भार्थोऽथशब्दः । मनोः स्वायम्भुवस्य । इह प्रसूतिसंज्ञायां स्वभार्यायाम् । धर्मे धर्मदेवाय त्रयोदश मैत्र्याद्याः पुत्रीः । पितृषु पितृभ्यो युक्तेभ्यः स्वधाम् । त्वदंशे त्वत्स्वरूपे ॥ १ ॥

**मूर्तिर्हि धर्मगृहिणी सुषुवे भवन्तं**
**नारायणं नरसखं महितानुभावम् ।**
**यज्जन्मनि प्रमुदिताः कृततूर्यघोषाः**
**पुष्पोत्करान् प्रववृषुर्नुनुवुः सुरौघाः ॥ २ ॥**

**मूर्तिरिति** । मूर्तिः धर्मगृहिणीष्ववरजा भवन्तं नारायणं नरसखमिति विष्णोरंशभूतौ नरनारायणौ सुषुवे जनयामास ॥ २ ॥

**दैत्यं सहस्रकवचं कवचैः परीतं**
**साहस्रवत्सरतपस्समराभिलव्यैः ।**
**पर्यायनिर्मिततपस्समरौ भवन्तौ**
**शिष्टैककङ्कटममुं न्यहतां सलीलम् ॥ ३ ॥**

**दैत्यमिति** । कवचैः परीतं सहजसहस्रकवचसन्नद्धशरीरम् । साहस्रेति । सहस्रसंवत्सरं चीर्णेन तपसा तावत्कालं कृतेन समरेण चच्छेद्यैरित्यर्थः । पर्यायनिर्मितौ परस्परपरिहारेण कृतौ तपस्समरौ याभ्यां तौ तथा । एकस्मि-

स्तपस्यति सत्यन्यो युध्यति, तथान्यस्मिन्नपीत्यर्थः। शिष्टैककङ्कटम् अवशिष्टैककवचं न्यहतामवधिष्टाम् ॥ ३ ॥

अन्वाचरन्नुपदिशन्नपि मोक्षधर्मं
त्वं भ्रातृमान् बदरिकाश्रममध्यवात्सीः।
शक्रोऽथ ते शमतपोबलनिस्सहात्मा
दिव्याङ्गनापरिवृतं प्रजिघाय मारम् ॥ ४ ॥

अन्वाचरन्निति। लोकसङ्ग्रहणार्थं स्वयमनुतिष्ठन्, उपदिशन् तदर्थिभ्यो नारदादिभ्य इति शेषः। मोक्षधर्मं निवृत्तिलक्षणं धर्मम्। त्वं श्रीनारायणः भ्रातृमान् नरेण भ्रात्रा सहितः। शमेनेन्द्रियनिग्रहेण तपोबलेन च निस्सह ईर्ष्यायुक्त आत्मा मनो यस्य स तथा। प्रजिघाय प्रेषयामास। अयं तपसा स्वर्गं जिघृक्षतीति शङ्कया तपोनाशाय कामं सपरिवारं प्रेषयामासेत्यर्थः ॥ ४ ॥

अथ शक्रप्रहितस्य कामस्य प्रवृत्तिमाह —

कामो वसन्तमलयानिलबन्धुशाली
कान्ताकटाक्षविशिखैर्विकसद्विलासैः।
विध्यन्मुहुर्मुहुरकम्पमुदीक्ष्य च त्वां
भीतस्त्वयाथ जगदे मृदुहासभाजा ॥ ५ ॥

काम इति। कान्ता दिव्याङ्गनास्तासां कटाक्षा एव विशिखाः तैः विकसन्तोऽभिव्यक्ता विलासा भ्रूचलनादयः पत्रस्थानीया येषु तैः मुहुर्मुहुर्विध्यन् अकम्पं समाधेरचलचित्तं त्वां भीतः सन् उदीक्ष्य दूरादेवोन्नामितवदनः सन्नवलोक्याथ मृदुहासभाजा मन्दस्मितसहितेन त्वया जगदे ॥ ५ ॥

भीत्यालमङ्गजवसन्तसुराङ्गना! वो
मन्मानसं त्विह जुषध्वमिति ब्रुवाणः।
त्वं विस्मयेन परितः स्तुवतामथैषां
प्रादर्शयः स्वपरिचारककातराक्षीः ॥ ६ ॥

---

१. 'नागणवृ' घ. पाठः.

भीत्येति । हे अङ्गजवसन्तसुराङ्गनाः! वो युष्माकं भीत्या अलं भयं मा कुरुत । इहास्मत्सकाशमेत्य मन्मानसं तु जुषध्वं मच्चित्तमनुवर्तध्वम् । अथ-वा मम मानसं मनसा सङ्कल्पितं सत्कारं जुषध्वं प्रीत्या निर्भयाः परिगृह्णी-ध्वम् । यद्वा मम मनसा सृज्यमानं वः स्वर्गदुर्लभं किञ्चिद्वस्तु स्त्रीरत्नाख्यं मया दीयमानं जुषध्वमाददीध्वम् । मन्माननमिति पाठे मत्कर्तृकां पूजामित्यर्थः । इति ब्रुवाणं त्वां परितः किञ्चित् समीपं गत्वा परिवार्य स्तुवतामेषाम् अथ वच-नानन्तरं स्वपरिचारिका आत्मशुश्रूषां कुर्वतीः कातराक्षीः सुन्दरीः प्रादर्शयः योग-बलेन सृष्ट्वा प्रदर्शितवान् असि ॥ ६ ॥

**सम्मोहनाय मिलिता मदनादयस्ते**
**त्वद्दासिकापरिमलैः किल मोहमापुः ।**
**दत्तां त्वया च जगृहुस्त्रपयैव सर्व-**
**स्वर्वासिगर्वशमनीं पुनरुर्वशीं ताम् ॥ ७ ॥**

**सम्मोहनायेति** । त्वां मोहयितुं सहिताः संहत्यागता मदनादयो मदनमलय-मारुतवसन्तसुराङ्गनाः । उर्वशीं त्वत्सृष्टास्वन्यतमाम् ॥ ७ ॥

**दृष्ट्वोर्वशीं तव कथां च निशम्य शक्रः**
**पर्याकुलोऽजनि भवन्महिमावमर्शात् ।**
**एवं प्रशान्तरमणीयतरोऽवतार-**
**स्त्वत्तोऽधिको वरद! कृष्णतनुस्त्वमेव ॥ ८ ॥**

**दृष्ट्वेति** । प्रशान्तः सौम्यः । त्वत्तः श्रीनारायणावताराद् अधिकः प्रशान्त-त्वेन विचित्रकर्मतया रमणीयतरत्वेन चोत्कृष्टः । कृष्णतनुः श्रीकृष्णात्मा ॥ ८ ॥

एवं दक्षपुत्रीषु धर्मपत्न्या मूर्तेः कथामुक्त्वा भवपत्न्याः सत्याः कथामाह—

**दक्षस्तु धातुरतिलालनया रजोन्धो**
**नात्यादृतस्त्वयि च कष्टमशान्तिरासीत् ।**
**येन व्यरुन्ध स भवत्तनुमेव शर्वं**
**यज्ञे च वैरपिशुने स्वसुतां ‡व्यमानीत् ॥ ९ ॥**

‡ विमानितवान् । 'मान पूजायाम्' इत्यत आधृषीयाद् णिजभावे लुङि रूपम् ।

दक्ष इति । धातुर्ब्रह्मण अतिलालनया प्रजापतीनामाधिपत्ये संस्थाप्याभिषेकादिरूपया रजसा तत्कार्येण कामक्रोधलोभादिना अन्धो विवेकशून्यः अत एव ब्रह्मणापि नात्यादृतः उपेक्षितः अशान्तिरविद्यमाना शान्तिः क्षमा यस्य स अशान्तिरक्षम आसीत् । येनाशान्तित्वेन स दक्षो भवत्तनुं त्वदंशभूतमेव शर्वं व्यरुन्ध द्वेष्टि स्म, यज्ञे दक्षाध्वरे वैरपिशुने दक्षशर्ववैरद्योतके स्वसुतां शर्वपत्नीं सतीं व्यमानीद् अवमानितवान् ॥ ९ ॥

**क्रुद्धेशमर्दितमखः स तु कृत्तशीर्षो**
**देवप्रसादितहरादथ लब्धजीवः ।**
**त्वत्पूरितक्रतुवरः पुनराप शान्तिं**
**स त्वं प्रशान्तिकर ! पाहि मरुत्पुरेश ! ॥ १० ॥**

क्रुद्धेशेति । स्वप्रियावमानेन क्रुद्धेनेशेन मर्दितश्चूर्णीकृतो मखस्तदुपकरणयज्ञपात्रयूपशालादिर्यस्य सः स्वयं च दक्षः कृत्तशीर्षोऽभवत् । अथ देवैः प्रसादिताद्धराद् लब्धजीव अजमुखश्चाभूत् । ततस्त्वया पूरितः सम्यक् समापितः क्रतुवरो यस्य स दक्षः पुनः शान्तिं स्वां प्रकृतिमाप । हे प्रशान्तिकर ! एवंप्रभावः स त्वं पाहि ॥ १० ॥

इति नरनारायणचरितवर्णनं दक्षयागवर्णनं च

षोडशं दशकम् ।

---

एवं मनुपुत्रीणां परम्परां वर्णयित्वा तत्पुत्रपरम्परां वर्णयिष्यन् प्रथमं ध्रुवचरितार्थमुत्तानपादचरितमाह —

**उत्तानपादनृपतेर्मनुनन्दनस्य**
**जाया बभूव सुरुचिर्नितरामभीष्टा ।**
**अन्या सुनीतिरिति भर्तुरनादृता सा**
**त्वामेव नित्यमगतिः शरणं गताभूत् ॥ १ ॥**

उत्तानेति । उत्तानपादाख्यस्य नृपतेर्मनोः स्वायम्भुवस्य नन्दनः प्रिय-

व्रतावरजः, तस्य द्वे जाये सुरुचिः सुनीतिश्च । तयोः सुरुचिर्नाम जाया नितरामभीष्टा बभूव । सुनीतिरित्यन्या जाया सा भर्तुरनादृता नात्यभीष्टा अत एवागतिरशरणा त्वामीश्वरमेव नित्यं शरणं गताभूत् निजदौर्भाग्यहेतुदुरितशमनायेश्वरमुपासांचक्र इत्यर्थः ॥ १ ॥

**अङ्के पितुः सुरुचिपुत्रकमुत्तमं तं**
**दृष्ट्वा ध्रुवः किल सुनीतिसुतोऽधिरोक्ष्यन् ।**
**आचिक्षिपे किल शिशुः सुतरां सुरुच्या**
**दुस्सन्त्यजा खलु भवद्विमुखैरसूया ॥ २ ॥**

**अङ्क** इति । कदाचित् सुनीतिसुतो ध्रुवः पितुः सिंहासनस्थस्याङ्के उत्तमाख्यं तं सुरुचिपुत्रत्वेनातिलालितं दृष्ट्वा स्वयमधिरोक्ष्यन् आरोढुमारब्धः सन् सुतरां शिशुरपि सुरुच्या आचिक्षिपे दुर्वाग्भिरधिक्षिप्तोऽभूत् । भवद्विमुखैरसूया दुस्सन्त्यजा त्यक्तुमशक्या खलु । अनेन सुरुच्या ईश्वरविमुखतया पुत्रनाशादि, सुनीतेश्चेश्वरानुग्रहेण पुत्रेण सह ध्रुवपदप्राप्त्यादि व्यज्यते ॥ २ ॥

**त्वन्मोहिते पितरि पश्यति दारवश्ये**
**दूरं दुरुक्तिनिहतः स गतो निजाम्बाम् ।**
**सापि स्वकर्मगतिसन्तरणाय पुंसां**
**त्वत्पादमेव शरणं शिशवे शशंस ॥ ३ ॥**

**त्वदि**ति । त्वन्मोहिते ईश्वरशक्त्या भवितव्यतया मूढचित्ते । दारवश्य इत्यनेन स्वाङ्कमारुरुक्षन्तं स्वपुत्रं पश्यन्नपि सुरुचिभयेन नारोपयादिति व्यज्यते । दूरमतिशयेन दुरुक्तिभिर्दुर्वाग्भिर्निहतो विद्धः स ध्रुवः निजाम्बां स्वमातरं सुनीतिमेव गतः प्राप्तवान् । सापि स्वस्य कर्मगतेर्दुष्कर्मफलस्य दौर्भाग्यस्य सन्तरणाय निवृत्तये । यद्वा पुंसां सर्वशरीरिणामपि स्वकर्मगतेः संसारार्णवस्य सन्तरणमनायासेनातिक्रमः तस्मै त्वत्पादमेव शरणं नान्यदिति शशंस । शिशव इत्यनेन पुत्रमङ्कमारोप्य मा रोदीरित्याद्यनुनयपूर्वकमुक्तवतीति व्यज्यते ॥ ३ ॥

---

१. 'शा' घ. पाठः.

**आकर्ण्य सोऽपि भवदर्चननिश्चितात्मा**
**मानी निरेत्य नगरात् किल पञ्चवर्षः ।**
**सन्दृष्टनारदनिवेदितमन्त्रमार्ग-**
**स्त्वामारराध तपसा मधुकाननान्ते ॥ ४ ॥**

**आकर्ण्येति** । आकर्ण्य मातुर्वचनमिति शेषः । स ध्रुवः भवदर्चने तपश्चरणे निश्चित आत्मा मनो यस्य सः मानी । पञ्चवर्ष इति । पञ्चवया अपि जिगमिषुं दृष्ट्वा विषण्णां स्वमातरं कथञ्चिदनुज्ञाप्यान्याननवलोकयन्नेकाकी स्वयं नगरान्निर्जगामेत्यर्थः । स पथि दृष्टेन नारदेन निवेदित उपदिष्टो मन्त्रमार्गो यस्य सः त्वाम् आरराध प्रसादयामास । मधुकाननान्ते मधुवनमिति प्रसिद्धे देशे ॥ ४ ॥

**ताते विषण्णहृदये नगरीं गतेन**
**श्रीनारदेन परिसान्त्वितचित्तवृत्तौ ।**
**बालस्त्वदर्पितमनाः क्रमवर्धितेन**
**निन्ये कठोरतपसा किल पञ्च मासान् ॥ ५ ॥**

**तात** इति । ताते पितर्युत्तानपादे विषण्णहृदये आत्मदोषेण बालकस्य नगरान्निर्गमनमुपश्रुत्य तस्यापायशङ्कया सोत्कण्ठहृदये ध्रुवस्य तपश्चरणे[1]तिकर्तव्यतोपदेशानन्तरमेवास्य पितृदर्शनाय नगरीं गतेन श्रीनारदेन परिसान्त्विता तस्य भाविश्रेयःप्राप्तिकथनादिना मन्दीकृतशोकावेगा[2] चित्तवृत्तिर्मनो यस्य स तथा तस्मिन् एवंस्थिते सति बालो ध्रुवस्त्वदर्पितमनाः त्वयीश्वरे समाहितचित्तः सन् क्रमवर्धितेन फलपर्णजलादिक्रमेण शनैः परिहृतेनाहारेणाभिव्यक्तक्रमोत्कर्षेण कठोरेणोग्रेण तपसा पञ्च मासान् निन्ये ॥ ५ ॥

ततश्च जातशङ्कैर्देवैरार्थितः श्रीहरिस्तस्य पुरतः प्रादुर्बभूवेत्याह —

**तावत् तपोबलनिरुच्छ्वसिते दिगन्ते**
**देवार्थितस्त्वमुदयत्करुणार्द्रचेताः ।**
**त्वद्रूपचिद्रसनिलीनमतेः पुरस्ता-**
**दाविर्बभूविथ विभो! गरुडाधिरूढः ॥ ६ ॥**

---

१. 'ण इति' क. पाठः. २. 'शा' क. पाठः.

**तावदिति** । त्वद्रूपचिद्रसे त्वदाकारे चतुर्भुजत्वादिविशिष्टतया घनीभूय स्थिते चिद्रसे परब्रह्मणि निलीना तदाकाराकारिता मतिर्यस्य तस्येत्यर्थः । यद्वा तादृश्या मतेस्तस्य पुरस्तादाविर्बभूविथेति । अनेन च त्वद्रूपं हृदि सहसा तिरोहितमुपलक्ष्योन्मीलितनयनस्तदवस्थं बहिःस्थितं भगवद्रूपमसौ ददर्शेति व्यज्यते ॥ ६ ॥

**त्वद्दर्शनप्रमदभारतरङ्गितं तं**
**दृग्भ्यां निमग्नमिव रूपरसायने ते ।**
**तुष्टूषमाणमवगम्य कपोलदेशे**
**संस्पृष्टवानसि दरेण तथादरेण ॥ ७ ॥**

**त्वदिति** । त्वद्दर्शनप्रमदभारे तरङ्गितम् इतिकर्तव्यतामूढतया किञ्चिदिव सम्भ्रान्तं पुनश्च ते रूपरसायने रूपामृते दृग्भ्यां निमग्नमवगाढनयनयुग्ममिवस्थितं[1] तं तुष्टूषमाणं स्तोतुमिच्छन्तं तदसमर्थं चावगम्य तत्सामर्थ्यसम्पादनाय दरेण शब्दब्रह्मात्मकेन पाञ्चजन्याख्येन शङ्खेन कपोलदेशे संस्पृष्टवानसि । आदरेण लालनपूर्वकम् ॥ ७ ॥

**तावद् विबोधविमलं प्रणुवन्तमेन-**
**माभाषथास्त्वमवगम्य तदीयभावम् ।**
**राज्यं चिरं समनुभूय भजस्व भूयः**
**सर्वोत्तरं ध्रुव ! पदं विनिवृत्तिहीनम् ॥ ८ ॥**

**तावदिति** । दरेण कपोले स्पृष्टमात्र एव विबोधेन ज्ञानविज्ञानाभ्यां विगतं मलमज्ञानं यस्मात् स विमलः, तम् । यद्वा विमलं यथा भवति तथेति स्तवनक्रियाविशेषणम् । अनेन च स्तुतेर्निर्गुणब्रह्मनिष्ठत्वं व्यज्यते । तदीयं ध्रुवसम्बन्धिनं भावमभिप्रायमवगम्य आभाषथा उक्तवानसि । सर्वोत्तरं सप्तर्षिलोकादप्युपरिष्टात् स्थितं पदं स्थानं हे ध्रुव ! विनिवृत्तिहीनं पुनरावृत्तिरहितम् ॥ ८ ॥

ध्रुवे राज्यभारं न्यस्य पिता वनं गतवानित्याह —

**इत्यूचुषि त्वयि गते नृपनन्दनोऽसा-**
**वानन्दिताखिलजनो नगरीमुपेतः ।**

---

१. 'तं तु' ख. पाठः.

रेमे चिरं भवदनुग्रहपूर्णकाम-
स्ताते गते च वनमादृतराज्यभारः ॥ ९ ॥

पुनरुत्तमचरितमाह —

यक्षेण देव! निहते पुनरुत्तमेऽस्मिन्
यक्षैः स युद्धनिरतो विरतो मनूक्त्या ।
शान्त्या प्रसन्नहृदयाद् धनदादुपेतात्
त्वद्भक्तिमेव सुदृढामवृणोन्महात्मा ॥ १० ॥

**यक्षेणे**ति । उत्तमे मृगयायां[1] केनचिद् यक्षेण युद्धे निहतेऽनन्तरं स ध्रुवो भ्रातृवधामर्षेण यक्षैर्युद्धनिरतस्तान् निहतवान्, मनोः पितामहस्योक्त्या विरतश्चाभूत् । अथ ध्रुवस्य शान्त्या युद्धनिवृत्त्या ध्रुवसमीपमागताद् धनदाद् राजराजाद् वरं वृणीष्वेत्युक्तो ध्रुवस्त्वद्भक्तिमेवावृणोत् । अत्र हेतुर्महात्मेति ॥ १० ॥

अथ ध्रुवस्य स्वपदप्राप्तिमाह —

अन्ते भवत्पुरुषनीतविमानयातो
मात्रा समं ध्रुवपदे मुदितोऽयमास्ते ।
एवं स्वभृत्यजनपालनलोलधीस्त्वं
वातालयाधिप! निरुन्धि ममामयौघान् ॥ ११ ॥

**अन्त** इति । अन्ते षड्विंशद्वर्षसहस्रं राज्यमनुभूय तदन्ते भवत्पुरुषाभ्यां सुनन्दनन्दाभ्यां नीतेन विमानेन यातो गतः सन् मात्रा सुनीत्या समं सह मुदितः सन्तुष्ट अयमास्ते इत्यनेनाधुनापि तस्य विद्यमानत्वं नक्षत्ररूपेण दृश्यमानत्वं च सूचितम् ॥ ११ ॥

इति ध्रुवचरितवर्णनं सप्तदशं दशकं सैकम् ।

---

१. 'यां याते के' क. पाठः.

अथ पृथुचरितकथनाय वेनकथां प्रस्तौति —

**जातस्य ध्रुवकुल एव तुङ्गकीर्ते-**
**रङ्गस्य व्यजनि सुतः स वेननामा ।**
**यद्दोषव्यथितमतिः स राजवर्य-**
**स्त्वत्पादे विहितमना वनं गतोऽभूत् ॥ १ ॥**

**जातस्येति** । ध्रुवकुल एव जातस्याङ्गनाम्नो राज्ञः सुनीथायां वेननामा सुतोऽजनि, यस्य वेनस्य दोषेणाधार्मिकत्वेन व्यथितो निर्विण्णः सोऽङ्गनामा राजवर्यो वनं गतः । निशीथे जनैरलक्षितो गत इति द्रष्टव्यम् ॥ १ ॥

वेनस्याधार्मिकत्वं प्रपञ्चयति —

**पापोऽपि क्षितितलपालनाय वेनः**
**पौराद्यैरुपनिहितः कठोरवीर्यः ।**
**सर्वेभ्यो निजबलमेव सम्प्रशंसन्**
**भूचक्रे तव यजनान्ययं न्यरौत्सीत् ॥ २ ॥**

**पाप** इति । उपनिहितः सिंहासने संस्थाप्याभिषिक्तः ॥ २ ॥

अथ सज्जननिन्दयेश्वरनिन्दया चासौ मुनिशापाग्निनिर्दग्धोऽभूदित्याह —

**सम्प्राप्ते हितकथनाय तापसौघे**
**मत्तोऽन्यो भुवनपतिर्न कश्चनेति ।**
**त्वन्निन्दावचनपरो मुनीश्वरैस्तैः**
**शापाग्नौ शलभदशामनायि वेनः ॥ ३ ॥**

अथ पृथ्ववतारमाह —

**तन्नाशात् खलजनभीरुकैर्मुनीन्द्रै-**
**स्तन्मात्रा चिरपरिरक्षिते तदङ्गे ।**
**त्यक्ताघे परिमथितादथोरुदण्डाद्**
**दोर्दण्डे परिमथिते त्वमाविरासीः ॥ ४ ॥**

---

१. 'त' मूलपाठः.  २. 'बालोऽपि' क. पाठः.

**तन्नाशादि**ति । तस्य वेनस्य नाशादराजके खलजनेभ्यो दस्युभ्यो भीरुकैः । तन्मात्रा सुनीथया योगबलेन रक्षिते तदङ्गे वेनशरीरे परिमथितादूरुदण्डात् त्यक्ताघ इति । अयमर्थः—ऋषिभिर्मथितादूरोर्निषादो नाम कश्चित् पुरुषो जातः । स च वेनकल्मषांशत्वात् कृष्णवर्णः । तद्वंश्या नैषादा गिरिकाननचराश्चाभूवन्निति । अथ दोर्दण्डे परिमथिते तस्मात् त्वं पृथुवपुः सन् आविरासीः अवतीर्णवान् ॥ ४ ॥

**विख्यातः पृथुरिति तापसोपदिष्टैः**
**सूताद्यैः परिणुतभाविभूरिवीर्यः ।**
**वेनार्त्या कबलितसम्पदं धरित्री-**
**माक्रान्तां निजधनुषा समामकार्षीः ॥ ५ ॥**

**विख्यात** इति । पृथुरिति विख्यातस्त्वं तापसोपदिष्टैः "अयं साक्षाद्धरेरंशः" (श्रीभा. स्क. ४. अ. १५. श्लो. ६) इत्यादितापसोपदेशेन तत्प्रभावज्ञैः सूतमागधवन्दिभिः परिणुतानि स्तुतानि भाविभूरिवीर्याणि महीदोहनैकोनशतवाजिमेधादीनि यस्य स तथा । वेनार्त्या वेनकृतया आर्त्या पीडया कबलिता ग्रस्ता सम्पदोषधिर्यया तां कबलितसम्पदम् अत एवाक्रान्तां क्रुद्धेन त्वया आत्तशरासनेन धावयता नतोन्नतां कृतां निजधनुष्कोट्या समामकार्षीः, गिरिकूटानि चूर्णयन् पुरग्रामादिविभागेन प्रायः समतलां कृतवानिति भावः ॥ ५ ॥

अथ प्रजाः पृथुशासनाद् गोरूपिणीं महीं स्वस्वाभिमतान्नमयं क्षीरं दुदुहुरित्याह—

**भूयस्तां निजकुलमुख्यवत्सयुक्तै-**
**र्देवाद्यैः समुचितचारुभाजनेषु ।**
**अन्नादीन्यभिलषितानि यानि तानि**
**स्वच्छन्दं सुरभितनूमदूदुहस्त्वम् ॥ ६ ॥**

**भूय** इति । तां महीं निजकुलमुख्यवत्सयुक्तैरिति । अयमर्थः—पृथुः स्वकुलमुख्यं मनुं वत्सं कृत्वा पाणिपात्रे ओषधीरधुक्षत् । ऋषयो बृहस्पतिं वत्सं कृत्वेन्द्रियेषु पात्रेषु महीं छन्दोमयं क्षीरं दुदुहुः । देवा इन्द्रं वत्सं कृत्वा

स्वर्णपात्रे सोमं दुदुहुः । असुराणां प्रह्लादो वत्सः अयः पात्रं सुरा पयः, गन्धर्वा मधु। पितरः कव्यम् । एवं द्रष्टव्यम् । सुरभितनूं गोरूपिणीमदूदुहः, त्वच्छासनाद् दुदुहुरिति तात्पर्यम् ॥ ६ ॥

**आत्मानं यजति मखैस्त्वयि त्रिधाम-**
**न्नारब्धे शततमवाजिमेधयागे ।**
**स्पर्धालुः शतमख एत्य नीचवेषो**
**हृत्वाश्वं तव तनयात् पराजितोऽभूत् ॥ ७ ॥**

**आत्मान**मिति । हे त्रिधामन्! विष्णो! त्वयि पृथौ मखैरश्वमेधैरात्मानं सर्वदेवमयं विष्णुं यजति सति शततमे शतसंख्याया अन्तिमे वाजिमेधयागे आरब्धे शतमखः इह जगत्यहमेक एव शतक्रतुरित्यभिमानीन्द्रः नीचवेषः पाषण्डवेषः सन्नेत्याश्वं हृत्वा तव तनयात् पृथुपुत्रादनेनैव कर्मणा विजिताश्वसंज्ञात् ॥ ७ ॥

**देवेन्द्रं मुहुरिति**[1] **वाजिनं हरन्तं**
**वह्नौ तं मुनिवरमण्डले जुहूषौ ।**
**रुन्धाने कमलभवे क्रतोः समाप्तौ**
**साक्षात् त्वं मधुरिपुमैक्षथाः स्वयं स्वम् ॥ ८ ॥**

देवेन्द्रमिति । अनेन प्रकारेण नग्नरक्तपटजटाभस्मादिपाषण्डवेषेण मुहुः पुनः पुनः वाजिनमश्वं हरन्तं मुष्णन्तं तं देवेन्द्रं मुनिवराणां मण्डले समूहे वह्नौ दक्षिणाग्नौ जुहूषौ वधार्थमाभिचारविधानेन होतुमिच्छति सति कमलभवे ब्रह्मणि रुन्धाने 'तवैकोनशतक्रतुत्वेनालं, शतक्रतुश्च प्रीतो भवतु, हे पृथो! तव क्रतुभिरलम्' इत्यागत्य प्रतिषेधं कुर्वति सति क्रतोः समाप्तौ जातायां त्वं पृथुः मधुरिपुं विष्णुं साक्षाच्चाक्षुषतया ऐक्षथा दृष्टवान् । स्वयं स्वमित्यनेन पृथोरवतारत्वमुक्तम् ॥ ८ ॥

**तद्दत्तं वरमुपलभ्य भक्तिमेकां**
**गङ्गान्ते विहितपदः कदापि देव! ।**

---

१. 'रपि वा' ख. पाठः.

**सत्रस्थं मुनिनिवहं हितानि शंस-**
**न्नैक्षिष्ठाः सनकमुखान् मुनीन् पुरस्तात् ॥ ९ ॥**

**तद्दत्तमिति** । तेन विष्णुना दत्तं वरमेकामनपायिनीं भक्तिमुपलभ्यानन्तरं गङ्गान्ते गङ्गायमुनयोर्मध्ये विहितं पदं स्थानं यस्य स तथा। तत्र वसन् कदापि सत्रस्थं सत्रयागे प्राप्तं मुनीनां देवर्षिब्रह्मर्षिराजर्षीणां निवहं समूहं हितानि प्रवृत्ति-निवृत्तिलक्षणं धर्मद्वयं शंसन् उपदिशन् तदन्ते सनकमुखान् सनकसनन्दसनातन-सनत्कुमारान् ऐक्षिष्ठा दृष्टवान् ॥ ९ ॥

**विज्ञानं सनकमुखोदितं दधानः**
**स्वात्मानं स्वयमगमो वनान्तसेवी ।**
**तत्तादृक्पृथुवपुरीश! सत्वरं मे**
**रोगौघं प्रशमय वातगेहवासिन्! ॥ १० ॥**

**विज्ञानमिति** । सनकमुखोदितं विज्ञानं ब्रह्मज्ञानं दधानः सम्यगवधार्य स्वयं जगदनुग्रहायाङ्गीकृतसत्त्वविग्रहस्त्वं स्वात्मानं स्वस्वरूपं परब्रह्मागमः अहं ब्रह्मेत्यनुभूतवान् । पश्चाच्च वनान्तसेवी पुत्रे राज्यं न्यस्य वनं गतस्तपश्चरन् स्वयं स्वात्मानमगमः प्राप्तवान् । परब्रह्ममात्रमुपतिष्ठसे स्म इति भावः ॥ १० ॥

**इति पृथुचरितवर्णनम् अष्टादशं दशकम् ।**

---

अथ प्राचीनबर्हिषश्चरितमारभते—

**पृथोस्तु नप्ता पृथुधर्मकर्मठः प्राचीनबर्हिर्युवतौ शतद्रुतौ ।**
**प्रचेतसो नाम सुचेतसः सुतानजीजनत् त्वत्करुणाङ्कुरानिव ॥ १ ॥**

**पृथोरिति** । नप्ता पौत्रस्य पुत्रः । पृथोः पुत्रो विजिताश्वः, तत्पुत्रो हवि-र्धानः, तत्पुत्रो बर्हिष्मदयमुच्यते । स च पृथुर्विस्तृतो धर्मो यस्य, यद्वा पृथोरिव धर्मो यस्य सः पृथुधर्मा कर्मठः कर्मशूरः, कर्मकाण्डे निष्णात इत्यर्थः । अत एव

१. 'भवाति' क. पाठः.

प्राचीनाग्रैः कुशैरास्तृतमिदं भूमण्डलमिति प्राचीनबर्हिरिति नामास्याभूत् । स च शतद्रुतौ भार्यायां प्रचेतसो नामेति प्रचेतस इति तुल्यनाम्नः सुतानजीजनत् । ते च सर्वे सुचेतसः । अत एव त्वत्करुणायाः प्राचीनबर्हिर्विषयाया अङ्कुरा-निवेति ॥ १ ॥

**पितुः सिसृक्षानिरतस्य शासनाद् भवत्तपस्यानिरता दशापि ते ।**
**पयोनिधिं पश्चिममेत्य तत्तटे सरोवरं सन्ददृशुर्मनोहरम् ॥ २ ॥**

**पितुरिति** । सिसृक्षानिरतस्य प्रजासर्गकामस्य प्रजाः सृजतेति शासनात् ते प्रचेतसो दशापि भवत्तपस्यायां निरताः ॥ २ ॥

अथ भगवान् रुद्रस्तत्रागत्य तेषां भगवत्स्तोत्रमुपदिदेशेत्याह —

**तदा भवत्तीर्थमिदं समागतो भवो भवत्सेवकदर्शनादृतः ।**
**प्रकाशमासाद्य पुरः प्रचेतसामुपादिशद् भक्ततमस्तव स्तवम् ॥ ३ ॥**
**स्तवं जपन्तस्तममी जलान्तरे भवन्तमासेविषतायुतं समाः ।**
**भवत्सुखास्वादरसादमीष्वियान् बभूव कालो ध्रुववन्न शीघ्रता ॥ ४ ॥**

**स्तवमिति** । भवानेव सुखं भवत्सुखं ब्रह्मानन्दः तस्यास्वादने रस आग्रहः ॥

**तपोभिरेषामतिमात्रवर्धिभिः स यज्ञहिंसानिरतोऽपि पावितः ।**
**पितापि तेषां गृहयातनारदप्रदर्शितात्मा भवदात्मतां ययौ ॥ ५ ॥**

**तपोभिरिति** । स यज्ञहिंसानिरतो वेनः पृथोर्जनकः पावितः दुरितानिवृत्तिद्वारा नरकादुत्तारितः । तेषां पिता प्राचीनबर्हिरपि गृहयातेन नारदेन प्रदर्शित उपदिष्ट आत्मा श्रीहरिर्यस्य, 'आप्तत्वाच्च प्रमातृत्वादात्मा हि परमो हरिरि'त्युक्तत्वात् । भवदात्मतां सायुज्यम् ॥ ५ ॥

अथ भक्तवात्सल्येनैव तेषां त्वं प्रादुरभूरित्याह —

**कृपाबलेनैव ततः प्रचेतसां प्रकाशमागाः पतगेन्द्रवाहनः ।**
**विराजिचक्रादिवरायुधांशुभिर्भुजाभिरष्टाभिरुदञ्चितद्युतिः ॥ ६ ॥**
**प्रचेतसां तावदयाचतामपि त्वमेव कारुण्यभराद् वरानदाः ।**
**भवद्विचिन्तापि शिवाय देहिनां भवत्वसौ रुद्रनुतिश्च कामदा ॥ ७ ॥**

**प्रचेतसामिति**। वरानदा इत्युक्तं, तदेवाह भवद्विचिन्तेति। भवतां प्रचेतसां विचिन्तानुस्मरणं शिवाय मङ्गलाय, रुद्रनुतिः रुद्रेण गीता मम स्तुतिश्च ॥ ७ ॥

**अवाप्य कान्तां तनयां महीरुहां तया रमध्वं दशलक्षवत्सरीम् ।**
**सुतोऽस्तु दक्षो ननु तत्क्षणाच्च मां प्रयास्यथेति न्यगदो मुदैव तान् ॥ ८ ॥**

**अवाप्येति** । किञ्च महीरुहां वृक्षाणां तनयां पुत्रीं, प्रम्लोचानाम्नोऽप्सरसः पुत्री तत्परित्यक्ता वृक्षैः पुत्रीत्वेन परिगृहीतेति द्रष्टव्यम् । तां कान्तामवाप्य युष्माभिर्दशभिः सहैवोद्वाह्य तया दशलक्षवत्सराणां समाहारो दशलक्षवत्सरी तावत्कालं रमध्वं भोगाननुभवत । तस्यां दक्षो नाम सुतश्चास्तु । तत्क्षणाद् दशलक्षवत्सरानन्तरमेव मां प्रयास्यथ मुक्ता भविष्यथ इति मुदैव तत्प्रार्थनां विना त्वं तान् न्यगद उक्तवान् ॥ ८ ॥

**ततश्च ते भूतलरोधिनस्तरून् क्रुधा दहन्तो द्रुहिणेन वारिताः ।**
**द्रुमैश्च दत्तां तनयामवाप्य तां त्वदुक्तकालं सुखिनोऽभिरेमिरे ॥ ९ ॥**

**ततश्चेति**। ततो भगवद्गमनानन्तरं सलिलादुत्थितास्ते भूतलं रोद्धुं शीलं येषामिति भूतलरोधिनस्तान् तरून् क्रुधा क्रोधोद्भूताभ्यामनिलानलाभ्यां दहन्तो द्रुहिणेन ब्रह्मणा वारिताः । ततश्च भीतैर्ब्रह्मणोपादिष्टैर्द्रुमैर्दत्तां तां कमललोचनाम् ॥ ९ ॥

**अवाप्य दक्षं च सुतं कृताध्वराः प्रचेतसो नारदलब्धया धिया ।**
**अवापुरानन्दपदं तथाविधस्त्वमीश ! वातालयनाथ ! पाहि माम् ॥ १० ॥**

**अवाप्येति** । नारदाल्लब्धया धिया ज्ञानेनानन्दरूपं पदं, पद्यते प्राप्यत इति पदं ब्रह्म अवापुः । तथाविधस्तादृशभक्तवात्सल्ययुक्तः ॥ १० ॥ ४१ ॥

इति दक्षोत्पत्तिप्रसङ्गवर्णनं दक्षोत्पत्तिवर्णनं च एकोनविंशं दशकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

**भक्तप्रियाख्यायां**

**चतुर्थस्कन्धपरिच्छेदः ।**

---

आदितः श्लोकसङ्ख्या १९९.

## अथ पञ्चमस्कन्धपरिच्छेदः ।

लोकानां प्राक् स्वसृष्टानां मर्यादापालनात्मिका ।
लीला स्थानसमाख्याता हरेः प्रस्तूयतेऽधुना ॥

इदानीं पञ्चमस्कन्धाश्रयणेन भगवतो मर्यादापालनात्मिकां लीलामभिदधानः प्रथममृषभदेवावतारकथनाय तत्पूर्वपरम्परामाह—

**प्रियव्रतस्य प्रियपुत्रभूतादाग्नीध्रराजादुदितो हि नाभिः ।**
**त्वां दृष्टवानिष्टदमिष्टिमध्ये तवैव तुष्ट्यै कृतयज्ञकर्मा ॥ १ ॥**

**प्रियव्रतस्ये**ति । स्वायम्भुवस्य मनोर्ज्येष्ठपुत्रः प्रियव्रतः । तस्य बर्हिष्मत्यां दश पुत्रा अभवन् । तेषु ज्येष्ठ आग्नीध्रो नाम राजा स्वसमानशीलतया पितुः प्रियः । तस्मात् पूर्वचित्तिनामाप्सरसि नाभिर्नाम राजा उदित उत्पन्नः । इष्टिमध्ये यज्ञमध्ये ॥ १ ॥

**अभिष्टुतस्तत्र मुनीश्वरैस्त्वं राज्ञा स्वतुल्यं सुतमर्थ्यमानः ।**
**स्वयं जनिष्येऽहमिति ब्रुवाणस्तिरोदधा बर्हिषि विश्वमूर्ते ! ॥ २ ॥**

**अभिष्टुत** इति । स्वतुल्यमीश्वरतुल्यम् । बर्हिषि अग्नौ तिरोदधाः ॥ २ ॥

**नाभिप्रियायामथ मेरुदेव्यां त्वमंशतोऽभूरृषभाभिधानः ।**
**अलोकसामान्यगुणप्रभावप्रभाविताशेषजनप्रमोदः ॥ ३ ॥**

**नाभी**ति । मेरुदेव्यां मेरुसुतायाम् । अलोकसामान्यैरमानुषैर्गुणैः प्रभावैश्च प्रभावित उत्पादितः अशेषजनप्रमोदो येन ॥ ३ ॥

**त्वयि त्रिलोकीभृति राज्यभारं निधाय नाभिः सह मेरुदेव्या ।**
**तपोवनं प्राप्य भवन्निषेवी गतः किलानन्दपदं पदं ते ॥ ४ ॥**

**त्वयी**ति । आनन्दपदं निरतिशयसुखस्थानं ते पदं वैकुण्ठम् ॥ ४ ॥

**इन्द्रस्त्वदुत्कर्षकृतादमर्षाद् ववर्ष नास्मिन्नजनाभवर्षे ।**
**यदा तदा त्वं निजयोगशक्त्या स्ववर्षमेनद् व्यदधाः सुवर्षम् ॥ ५ ॥**

**जितेन्द्रदत्तां कमनीं जयन्तीमथोद्वहन्नात्मरताशयोऽपि ।**
**अजीजनत् तत्र शतं तनूजान् येषां क्षितीशो भरतोऽग्रजन्मा ॥ ६ ॥**

जितेति । योगशक्त्या जितेनेन्द्रेण दत्ताम् । आत्मरतः आत्मनः श्रीहरेरुपासन एवोत्सुक आशयोऽन्तःकरणं यस्य ॥ ६ ॥

**नवाभवन् योगिवरा नवान्ये त्वपालयन् भारतवर्षखण्डान् ।**
**सैका त्वशीतिस्तव शेषपुत्रास्तपोबलाद् भूसुरभूयमीयुः ॥ ७ ॥**

नवेति । भारतवर्षखण्डान् कुशावर्तेलावर्तब्रह्मावर्तमलयकेतुभद्रसेनविदर्भकीकटादीन् । सैका अशीतिरेकसहिता अशीतिः । भूसुरभूयं ब्राह्मणत्वम् ॥ ७ ॥

**उक्त्वा सुतेभ्योऽथ मुनीन्द्रमध्ये विरक्तिभक्त्यन्वितमुक्तिमार्गम् ।**
**स्वयं गतः पारमहंस्यवृत्तिमधा जडोन्मत्तपिशाचचर्याम् ॥ ८ ॥**

उक्त्वेति । स्वयमृषभदेवः । सुतेभ्यो भरतादिभ्यः । परमहंसानां वृत्तिं गतो जडोन्मत्तपिशाचवच्चरणमधाः अकरोः ॥ ८ ॥

**परात्मभूतोऽपि परोपदेशं कुर्वन् भवान् सर्वनिरस्यमानः ।**
**विकारहीनो विचचार कृत्स्नां महीमहीनात्मरसाभिलीनः ॥ ९ ॥**

परेति । भवान् परात्मभूतो ब्रह्मभूतः, तथापि परेभ्य उपदेशं कुर्वन् ब्रह्मोपदेशं वा । स्वस्य पारमहंस्यवृत्त्यैव परोपदेशो न मुखत इत्याह—सर्वेति । सर्वनिरस्यमानोऽवधूतः । विकारहीनः शरीराभिमाननिवृत्तेः कर्तृत्वभोक्तृत्वसुखदुःखादिरहितः । तत्र हेतुः अहीनात्मरसे परमानन्दानुभवे अभिलीनः तदैक्यं प्राप्तो जीवन्मुक्त इति यावत् ॥ ९ ॥

**शयुव्रतं गोमृगकाकचर्यां चिरं चरन्नाप्य परं स्वरूपम् ।**
**दवाहृताङ्गः कुटकाचले त्वं तापान् ममापाकुरु वातनाथ! ॥ १० ॥**

शय्विति । शयुव्रतमाजगरं व्रतं गोमृगकाकचर्यां च चिरं चरन् शयुवदनुद्यमः सन् गोमृगकाकवच्छुच्यशुद्धिविधिनिषेधादेर्निवृत्तः, केवलं देहस्वभावात् सञ्चरन्नित्यर्थः । परं स्वरूपमाप्य कुटकाचले दवाहृताङ्गो दवाग्निदग्धशरीरः पपातेत्यर्थः ॥ १० ॥

इति ऋषभयोगिचरितवर्णनं विंशं दशकम् ।

———

अथ लोकरक्षायै तत्तद्भूखण्डेषु तत्तद्रूपेण सन्निदधानं भगवन्तं स्तौति—

**मध्योद्भवे भुव इलावृतनाम्नि वर्षे**
**गौरीप्रधानवनिताजनमात्रभाजि ।**
**शर्वेण मन्त्रनुतिभिः समुपास्यमानं**
**सङ्कर्षणात्मकमधीश्वर! संश्रये त्वाम् ॥ १ ॥**

**मध्योद्भव** इति । भुवो मध्यं जम्बूद्वीपः, तन्मध्यभवे वर्षे खण्डे । गौरीशापेन पुरुषागम्यतयात्र शर्व एक एव पुरुषः । अतो गौरीप्रधानं वनिताजनमात्रमेव भजतीति तथा । शर्वेण मन्त्रैर्नुतिभिश्च ॥ १ ॥

**भद्राश्वनामक इलावृतपूर्ववर्षे**
**भद्रश्रवोभिर्ऋषिभिः परिणूयमानम् ।**
**कल्पान्तगूढनिगमोद्धरणप्रवीणं**
**ध्यायामि देव! हयशीर्षतनुं भवन्तम् ॥ २ ॥**

**ध्यायामि दक्षिणगते हरिवर्षवर्षे**
**प्रह्लादमुख्यपुरुषैः परिषेव्यमाणम् ।**
**उत्तुङ्गशान्तधवलाकृतिमेकशुद्ध-**
**ज्ञानप्रदं नरहरिं भगवन्! भवन्तम् ॥ ३ ॥**

**ध्यायामी**ति । एकं शुद्धं निरुपाधिकं ज्ञानं ददातीति तथा ॥ ३ ॥

**वर्षे प्रतीचि ललितात्मनि केतुमाले**
**लीलाविशेषललितस्मितशोभनाङ्गम् ।**
**लक्ष्म्या प्रजापतिसुतैश्च निषेव्यमाणं**
**तस्याः प्रियाय धृतकामतनुं भजे त्वाम् ॥ ४ ॥**

**वर्ष** इति । धृतकामतनुम् अङ्गीकृतकामदेवस्वरूपम् ॥ ४ ॥

**रम्येऽप्युदीचि खलु रम्यकनाम्नि वर्षे**
**तद्वर्षनाथमनुवर्यसपर्यमाणम् * ।**

---

* 'सपर पूजायामि'ति कण्ड्वादः कर्मणि शानचि सपर्यमाणशब्दः ।

भक्तैकवत्सलममत्सरहृत्सु भान्तं
मत्स्याकृतिं भुवननाथ! भजे भवन्तम् ॥ ५ ॥

**रम्य** इति । रम्यकवर्षनाथेन वैवस्वतेन मनुवर्येण सपर्यमाणमाराध्यमानम् ॥ ५ ॥

वर्षं हिरण्मयसमाह्वयमौत्तराह-
मासीनमद्रिधृतिकर्मठकामठाङ्गम् ।
संसेवते पितृगणप्रवरोऽर्यमायं
तं त्वां भजामि भगवन्! परचिन्मयात्मन्! ॥ ६ ॥

**वर्षमिति** । औत्तराहम् उत्तरादिग्भवम् । अद्रिधृतिकर्मठम् अमृतमथने मन्दराद्रिधारणौपयिकं कामठं कौर्ममङ्गं यस्य । परचिन्मयात्मन्! विशुद्धज्ञानस्वरूप! ॥ ६ ॥

किञ्चोत्तरेषु कुरुषु प्रियया धरण्या
संसेवितो महितमन्त्रनुतिप्रभेदैः ।
दंष्ट्राग्रघृष्टघनपृष्ठगरिष्ठवर्ष्मा
त्वं पाहि विज्ञनुतयज्ञवराहमूर्ते! ॥ ७ ॥

**किञ्चेति** । दंष्ट्राग्रेण घृष्टं घनपृष्ठं येन तादृशं गरिष्ठमत्युन्नतं च वर्ष्म स्वरूपं यस्य । विज्ञैर्ज्ञानिभिर्नुता स्तुता यज्ञवराहरूपा मूर्तिर्यस्य ॥ ७ ॥

याम्यां दिशं भजति किम्पुरुषाख्यवर्षे
संसेवितो हनुमता दृढभक्तिभाजा ।
सीताभिरामपरमाद्भुतरूपशाली
रामात्मकः परिलसन् परिपाहि विष्णो! ॥ ८ ॥

**याम्यामिति** । याम्यां दिशं भजति इलावृतसमनन्तरदेशवर्तिनि ॥ ८ ॥

श्रीनारदेन सह भारतखण्डमुख्यै-
स्त्वं साङ्ख्ययोगनुतिभिः समुपास्यमानः ।
आकल्पकालमिह साधुजनाभिरक्षी
नारायणो नरसखः परिपाहि भूमन्! ॥ ९ ॥

---

१. 'रव' क. पाठः.

श्रीति । साङ्ख्यं प्रकृतिपुरुषविवेकज्ञानं, योगोऽष्टाङ्गः, ताभ्यां नुतिभिश्च ॥ ९ ॥

इमं जम्बूद्वीपं परितः क्रमात् प्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करनामानः षड् द्वीपाः । तत्र क्रमादर्केन्दुवह्न्यम्बुवायुब्रह्मरूपेण तत्रत्या भगवन्तं भजन्तीत्याह—

**प्लाक्षेऽर्करूपमयि शाल्मल इन्दुरूपं**
**द्वीपे भजन्ति कुशनामनि वह्निरूपम् ।**
**क्रौञ्चेऽम्बुरूपमथ वायुमयं च शाके**
**त्वां ब्रह्मरूपमयि पुष्करनाम्नि लोकाः ॥ १० ॥**

अथ ज्योतिरनीकात्मकस्य भगवत उपासनाप्रकारमाह—

**सर्वैर्ध्रुवादिभिरुडुप्रकरैर्ग्रहैश्च**
**पुच्छादिकेष्ववयवेष्वभिकल्प्यमानैः ।**
**त्वं शिंशुमारवपुषा महतामुपास्यः**
**सन्ध्यासु रुन्धि नरकं मम सिन्धुशायिन् ! ॥ ११ ॥**

**सर्वैरिति** । उडुप्रकरैरश्विन्यादिभिः ग्रहैः सूर्यादिभिर्यथाक्रमं पुच्छाद्यवयवेषूपासकैरभिकल्प्यमानैरुपलक्षितस्त्वं शिंशुमारवपुषा अवाक्शिरसः कुण्डलीभूतशरीरस्य शिंशुमारस्य वपुरिव वपुर्यस्य, तद्रूपेण महतां महद्भिः सन्ध्यासु त्रिकालमुपास्यः ॥ ११ ॥

अथ प्रपञ्चस्योद्धारकं शेषमूर्तिं स्तौति—

**पातालमूलभुवि शेषतनुं भवन्तं**
**लोलैककुण्डलविराजिसहस्रशीर्षम् ।**
**नीलाम्बरं धृतहलं भुजगाङ्गनाभि-**
**र्जुष्टं भजे हर गदान् गुरुगेहनाथ ! ॥ १२ ॥ २२ ॥**

इति जम्बूद्वीपादिषु भगवदुपासनाप्रकारवर्णनम् एकविंशं दशकं सद्विकम् ।

इति नारायणीयस्तोत्रव्याख्यायां
भक्तप्रियाख्यायां
पञ्चमस्कन्धपरिच्छेदः ।

---

आदितः श्लोकसङ्ख्या २२१.

## अथ षष्ठस्कन्धपरिच्छेदः ।

कृतेऽपि पापे भक्तानां यातना नैव नारकी ।
इति षष्ठगतो विष्णोः स्तूयतेऽनुग्रहोऽधुना ॥

अथाजामिलोपाख्यानमारभते अजामिलेत्येकादशभिः—

**अजामिलो नाम महीसुरः पुरा चरन् विभो! धर्मपथान् गृहाश्रमी ।**
**गुरोर्गिरा काननमेत्य दृष्टवान् सुधृष्टशीलां कुलटां मदाकुलाम् ॥ १ ॥**

**अजामिल** इति । पुराजामिलो नाम अजामिमकुलीनां स्त्रियं लात्यादत्त इत्यजामिल इति प्रसिद्धः कश्चिद् महीसुरो गृहाश्रमी स्वाश्रमोचितान् धर्मपथान् प्रवृत्तिनिवृत्तिमार्गान् चरन् अनुतिष्ठन् गुरोर्गिरा पितुर्निदेशेन फलपुष्पसमित्कुशानाहर्तुं काननमेत्य सुधृष्टमतिशयेन धृष्टं मिथ्याविलासादिभिः परमतिवञ्चनसमर्थं शीलं यस्याः, मदाकुलां मधुमदखेलगमनां काञ्चित् कुलटां पुंश्चलीं दृष्टवान् ॥१॥

**स्वतः प्रशान्तोऽपि तदाहृताशयः स्वधर्ममुत्सृज्य तया समारमन् ।**
**अधर्मकारी दशमी भवन् पुनर्दधौ भवन्नामयुते सुते रतिम् ॥ २ ॥**

**स्वत** इति । ततश्च स्वतः प्रशान्तोऽप्यसौ तयाहृत आशयो यस्य स तथा स्वधर्मं सहधर्मचारिणीं चोत्सृज्य तया सह समारमन् तस्याः कुटुम्बभरणायाधर्मकारी बभूव । पुनश्च दशमी भवन् जरठः सन् भवन्नामयुते नारायणाह्वये सुते बालके दशमपुत्रे रतिमतिस्नेहं दधौ ॥ २ ॥

**स मृत्युकाले यमराजकिङ्करान् भयङ्करांस्त्रीनभिलक्षयन् भिया ।**
**पुरा मनाक् त्वत्स्मृतिवासनाबलाज्जुहाव नारायणनामकं सुतम् ॥ ३ ॥**

**स** इति । मृत्युकाले मरणसमये मनाग् ईषत् त्वत्स्मृतेर्भगवदुपासनाया या वासना संस्कारस्तद्बलाद् नारायणनामकं सुतं जुहाव नारायण! इत्याजुहाव ॥ ३ ॥

**दुराशयस्यापि तदात्वनिर्गतत्वदीयनामाक्षरमात्रवैभवात् ।**
**पुरोऽभिपेतुर्भवदीयपार्षदाश्चतुर्भुजाः पीतपटा मनोहराः ॥ ४ ॥**

**दुराशयस्येति** । कुटुम्बासक्तचेतसोऽप्यस्य तदात्वे मरणदशायां निर्गतस्य त्वदीयनामाक्षरमात्रस्येत्यनेन भक्तिश्रद्धावृत्तिवर्णव्यक्तताद्यभावो व्यज्यते, तथापि नारायणेत्यक्षरचतुष्टयस्य प्रभावाद् भवदीयपार्षदा विष्णुदूता अस्य पुरोऽभिपेतुः प्रादुर्भूताः ॥ ४ ॥

**अमुं च सम्पाश्य विकर्षतो भटान् विमुञ्चतेत्यारुरुधुर्बलादमी ।**
**निवारितास्ते च भवज्जनैस्तदा तदीयपापं निखिलं न्यवेदयन् ॥ ५ ॥**

**अमुमिति** । अमुमजामिलं सम्पाश्य पाशेन गले बद्ध्वा विकर्षतो भटान् यमभटान् अमी विष्णुदूता बलाद् विमुञ्चतेत्यनेन वचनेनैवारुरुधुः । ते यमभटास्तदीयमजामिलस्येदं पापं निखिलं न्यवेदयन् ॥ ५ ॥

**भवन्तु पापानि कथं तु निष्कृते कृतेऽपि भो दण्डनमस्ति पण्डिताः! ।**
**न निष्कृतिः किं विदिता भवादृशामिति प्रभो! त्वत्पुरुषा बभाषिरे ॥६॥**

**भवन्त्विति** । अनन्तरं च त्वत्पुरुषा विष्णुदूता यमभटानिदमुत्तरं बभाषिरे भोः पण्डिताः! सत्यं भवद्भिरुक्तानि पापान्यस्य भवन्तु, किन्तु निष्कृते प्रायश्चित्ते कृतेऽपि कथं दण्डनमस्ति, अनेन च हरिनामग्रहणरूपं प्रायश्चित्तं कृतमेव, भवादृशां युष्मद्विधैर्धर्मराजकिङ्करैर्निष्कृतिः किं न विदितेति ॥ ६ ॥

ननु महतामपि पापानां नामग्रहणमात्रं प्रायश्चित्तमित्ययुक्तं, श्रौतस्मार्तादिप्रायश्चित्तानामतिक्लेशमात्ररूपाणां वैयर्थ्यप्रसङ्गादित्याशङ्क्याह—

**श्रुतिस्मृतिभ्यां विहिता व्रतादयः पुनन्ति पापं न लुनन्ति वासनाम् ।**
**अनन्तसेवा तु निकृन्तति द्वयीमिति प्रभो! त्वत्पुरुषा बभाषिरे ॥ ७ ॥**

**श्रुतीति** । व्रतानि चान्द्रायणादीनि, आदिशब्देन तीर्थस्नानादि । एता निष्कृतयः पापं पुनन्ति शोधयन्ति केवलं, न वासनां सजातीयकर्मोत्पादकं संस्कारमपि लुनन्ति । ततश्च पुनरपि पापं कुर्वन्ति । एवं चान्द्रायणादीनां पापात्यन्तिकनिवर्तकत्वाभावान्न मुख्यप्रायश्चित्तत्वम् । अनन्तस्य हरेः सेवा स्मरणकीर्तनादि तु द्वयीं पापं तद्वासनां च निकृन्तति उन्मूलयाति ॥ ७ ॥

---

१. 'क्त्याद्य' क. ग. पाठः.  २. 'त्यादिव' क. पाठः.

अयं च मरणभयाकुलः सन् हरिनामोच्चारितवान्, अत इतः परं न भवद्‌ण्डनमर्हतीत्याह—

**अनेन भो! जन्मसहस्रकोटिभिः कृतेषु पापेष्वपि निष्कृतिः कृता ।**
**यदग्रहीन्नाम भयाकुलो हरेरिति प्रभो! त्वत्पुरुषा बभाषिरे ॥ ८ ॥**

ननु नासौ म्रियमाणो हरिनामोच्चारितवान्, किन्तु पुत्रं तन्नामानमाजुहावैव। अतो न पापक्षय इत्याशङ्क्याह—

**नृणामबुद्ध्यापि मुकुन्दकीर्तनं दहत्यघौघान् महिमास्य तादृशः ।**
**यथाग्निरेधांसि यथौषधं गदानिति प्रभो! त्वत्पुरुषा बभाषिरे ॥ ९ ॥**

नृणामिति । इदं भगवन्नाम कीर्तितं सदशेषाघौघहरं चेति धिया नामोच्चारणीयम् । अतोऽन्यथाबुद्ध्यापि मुकुन्दकीर्तनमघौघान् दहति, दहनकणस्तूलपिण्डसञ्चयमिवोन्मूलयति । कथमस्य तादृशं सामर्थ्यमिति नानुयोजनीयम् । नाम्नो महिम्नः श्रूयमाणत्वाद् दृष्टत्वाच्चेत्याह — महिमेति । अस्य नाम्नस्तादृशोऽपरिच्छेद्यो महिमा विद्यते । तेषां सन्देहहानाय सदृष्टान्तमाह—यथेति । बालादिना अबुद्ध्या निक्षिप्तोऽग्निः अबुद्ध्योपयुक्तमौषधं च यथा ॥ ९ ॥

**इतीरितैर्याम्यभटैरपासृते भवद्भटानां च गणे तिरोहिते ।**
**भवत्स्मृतिं कञ्चन कालमाचरन् भवत्पदं प्रापि भवद्भटैरसौ ॥ १० ॥**

इतीति । इतीरितैः प्रतिबोधितैर्याम्यभटैरपासृतेऽपसरणे कृते सति भवद्भटानां गणे समूहे तिरोहिते अन्तर्हिते च सति असावजामिलो गङ्गाद्वारे कस्मिंश्चिद् देवसदने स्थित्वा कञ्चन कालं भवत्स्मृतिमाचरन् समाधिजये सति प्रादुर्भूतैस्तैरेव भवत्पार्षदैर्लब्धसारूप्यो विमानेन भवत्पदं वैकुण्ठं प्रापि अनीयत ॥ १० ॥

**स्वकिङ्करावेदनशङ्कितो यमस्त्वदङ्घ्रिभक्तेषु न गम्यतामिति ।**
**स्वकीयभृत्यानशिशिक्षदुच्चकैः स देव! वातालयनाथ! पाहि माम् ॥ ११ ॥**

स्वेति । यमकिङ्करास्तु स्वामिने सर्वं निवेदयामासुः । यमस्तु स्वकिङ्कराणामावेदनेन शङ्कितः स्वभृत्यापराधः स्वस्मिन्नपि स्यादिति भीतः सन् त्वदङ्घ्रि-

भक्तेषु भवाद्भिर्न गम्यतां भगवद्भक्ताः परिहरणीया युष्माभिरित्युच्चैरतिनिर्बन्धेन स्वभृत्यानशिशिक्षत् शिक्षितवान् । तादृशभक्तवात्सल्ययुक्तस्त्वं पाहि ॥ ११ ॥

इत्यजामिलोपाख्यानं द्वाविंशं दशकं सैकम् ।

---

एवमजामिलदृष्टान्तेन नृणामनुग्रहमुक्त्वा स्वर्गिणां भगवदनुग्रहं दर्शयितुं दक्षकथामारभते —

**प्राचेतसस्तु भगवन्नपरोऽपि दक्ष-**
**स्त्वत्सेवनं व्यधित सर्गविवृद्धिकामः ।**
**आविर्बभूविथ तदा लसदष्टबाहु-**
**स्तस्मै वरं ददिथ तां च वधूमसिक्नीम् ॥ १ ॥**

**प्राचेतस** इति । प्राचीनबर्हिषः पुत्रा दश प्रचेतसः, तेषां पुत्रः प्राचेतसो दक्षः । अपरो ब्रह्मपुत्राद् दक्षादन्यः । स मनसैवेमाः प्रजाः सृष्ट्वा पुनस्तद्विवृद्धिकामस्त्वत्सेवनं व्यधित कृतवान् । तं च वरं त्वत्तः प्रभृति व्यवायधर्मेण प्रजासर्गो भविष्यतीत्येवं रूपं, तां पञ्चजनदुहितरम् असिक्नीं वधूं भार्यां च ददिथ दत्तवान् ॥ १ ॥

**तस्यात्मजास्त्वयुतमीश ! पुनः सहस्रं**
**श्रीनारदस्य वचसा तव मार्गमापुः ।**
**नैकत्रवासमृषये मुमुचे स शापं**
**भक्तोत्तमस्त्वृषिरनुग्रहमेव मेने ॥ २ ॥**

**तस्येति** । तस्य दक्षस्य हर्यश्वसंज्ञा अयुतमात्मजा आसन् । पुनः शबलाश्वसंज्ञाः सहस्रं च सुता आसन् । ते सर्वेऽपि पितुरादेशात् सर्गवृद्धये तपः कुर्वन्तः श्रीनारदस्य वचसा निवृत्तिमार्गोपदेशरूपेण तव मार्गं मोक्षमापुः प्राप्तवन्तः । स दक्षः क्रुद्धो मुनये श्रीनारदाय नैकत्रवासं सदासञ्चारित्वं शापं मुमुचे । ऋषिस्तु भक्तोत्तमत्वेन तमनुग्रहमेव मेने ॥ २ ॥

**षष्ट्या ततो दुहितृभिः सृजतः कुलौघान्**
**दौहित्रसूनुरथ तस्य स विश्वरूपः ।**
**त्वत्स्तोत्रवर्मितमजापयदिन्द्रमाजौ**
**देव ! त्वदीयमहिमा खलु सर्वजैत्रः ॥ ३ ॥**

**षष्ट्येति** । ततः षष्ट्या दुहितृभिरदितिदित्याद्याभिः कुलौघान् स्थिरचरभेदसमूहान् सृजतोऽस्य दक्षस्य दौहित्रो दितेः पुत्रस्त्वष्टा तत्सूनुस्त्वाष्ट्रो विश्वरूपः । सः त्वत्स्तोत्रेण नारायणात्मकेन वर्मणा वर्मितं कृतरक्षम् इन्द्रम् आजौ देवासुरयुद्धे अजापयद् †जयमकरोत् ॥ ३ ॥

अथ वृत्रवधप्रस्तावाय प्राग्जन्मकथामाह —

**प्राक् शूरसेनविषये किल चित्रकेतुः**
**पुत्राग्रही नृपतिरङ्गिरसः प्रभावात् ।**
**लब्ध्वैकपुत्रमथ तत्र हते सपत्नी-**
**सङ्घैरमुह्यदवशस्तव माययासौ ॥ ४ ॥**

**प्रागिति** । अङ्गिरसः प्रभावात् तत्कृतयज्ञोच्छिष्टप्राशनेन ज्येष्ठभार्यायामेकं पुत्रं लब्ध्वा तत्र तस्मिन् पुत्रे सपत्नीसङ्घैर्हते ॥ ४ ॥

**तं नारदस्तु सममङ्गिरसा दयालुः**
**सम्प्राप्य तावदुपदर्श्य सुतस्य जीवम् ।**
**कस्यास्मि पुत्र इति तस्य गिरा विमोहं**
**त्यक्त्वा त्वदर्चनविधौ नृपतिं न्ययुङ्क्त ॥ ५ ॥**

**तमिति** । अङ्गिरसा समं सह सुतस्य मृतस्य जीवं योगबलेनोपदर्श्य दर्शयित्वा अहं कस्य पुत्रोऽस्मीति तस्य गिरा नृपतेर्विमोहं त्यक्त्वा ॥ ५ ॥

**स्तोत्रं च मन्त्रमपि नारदतोऽथ लब्ध्वा**
**तोषाय शेषवपुषो ननु ते तपस्यन् ।**

---

† जयन्तं प्रयोजितवान् ।

विद्याधराधिपतितां स हि[1] सप्तरात्रे
लब्ध्वाप्यकुण्ठमतिरन्वभजद् भवन्तम् ॥ ६ ॥

**स्तोत्रमिति** । शेषवपुषोऽनन्तमूर्तेः ते तव हरेस्तोषाय प्रसादाय तपस्यन् स चित्रकेतुः सप्तरात्रे सप्तरात्रान्ते विद्याधराधिपतितां लब्ध्वा भवन्तं शेषमूर्तिम् ॥ ६ ॥

त्वं चानन्तरूपेण[2] प्रादुर्भूयात्मतत्त्वमुपदिश्य तिरोहितवानित्याह—

तस्मै मृणालधवलेन सहस्रशीर्ष्णा
रूपेण बद्धनुतिसिद्धगणावृतेन ।
प्रादुर्भवन्नचिरतो नुतिभिः प्रसन्नो
दत्त्वात्मतत्त्वमनुगृह्य तिरोदधाथ ॥ ७ ॥

त्वद्भक्तमौलिरथ सोऽपि च लक्षलक्षं
वर्षाणि हर्षुलमना भुवनेषु कामम् ।
सङ्गापयन् गुणगणं तव सुन्दरीभिः
सङ्गातिरेकरहितो ललितं चचार ॥ ८ ॥

**त्वदिति** । (ते?) तव गुणगणं हरिचरितं विद्याधरसुन्दरीभिः सङ्गापयन् ॥

अत्यन्तसङ्गविलयाय भवत्प्रणुन्नो
नूनं स रूप्यगिरिमाप्य महत्समाजे ।
निश्शङ्कमङ्ककृतवल्लभमङ्गजारिं
तं शङ्करं परिहसन्नुमयाभिशेपे ॥ ९ ॥

**अत्यन्तेति** । स च श्रीशङ्करं परिहसन् उमयाभिशेपे आसुरीं योनिं याहीति शप्तोऽभूत् । स्वतः सङ्गातिरेकरहितस्यात्यन्तसङ्गविलयाय भवतेश्वरेण प्रणुन्नः प्रेरितोऽसौ नूनमिति तर्कयामि, अन्यथा तस्य देवहेलनायोगात् ॥ ९ ॥

निस्सम्भ्रमस्त्वयमयाचितशापमोक्षो
वृत्रासुरत्वमुपगम्य सुरेन्द्रयोधी ।

---

१. 'ति' ख. पाठः.  २. 'पः प्रा' ख. पाठः.

भक्त्यात्मतत्त्वकथनैः समरे विचित्रं
शत्रोरपि भ्रममपास्य गतः पदं ते ॥ १० ॥

**निःसम्भ्रम** इति । ततश्चासौ निःसम्भ्रमः शापभयरहितः **समर आत्मतत्त्वकथनैः शत्रोरि**न्द्रस्यापि **भ्रम**मज्ञानम**पास्य** तद्वज्रेण हतः **ते पदं** वैकुण्ठं **गतः** । **चित्र**माश्चर्यमेतत् । अत्र गुरुहेलनेनासुरेभ्यः पराजितैर्देवैः पौरोहित्याय वृतो विश्वरूपः । स तु दितिसुतापत्यतया मातृपक्षपातेन रहसि दैत्येभ्यो हविर्भागं दत्तवान् । इन्द्रस्तु तदालक्ष्यास्य शिरांस्यवृश्चत् । ततश्च त्वष्टुर्हतपुत्रस्याभिचारकुण्डादुत्थितो वृत्रः समरभुवि इन्द्रेण हत इति कथानुसन्धेया ॥ १० ॥

अथ दितेर्घोरसङ्कल्पादिन्द्रस्य मरुद्वधाच्च भगवदनुग्रहाच्छ्रेयःप्राप्तिमाह—

त्वत्सेवनेन दितिरिन्द्रवधोद्यतापि
तान् प्रत्युतेन्द्रसुहृदो मरुतोऽभिलेभे ।
दुष्टाशयेऽपि शुभदैव भवन्निषेवा
तत्तादृशस्त्वमव मां पवनालयेश! ॥ ११ ॥

**त्वदि**ति । **दितिरिन्द्रवधोद्यता** काश्यपं प्रसाद्य इन्द्रहणं पुत्रं वृतवती । तस्माद् गर्भं चाधत्त । तथापि **त्वत्सेवनेन** काश्यपोपदिष्टपुंसवनव्रतानुष्ठानेनेन्द्रहणं पुत्रं लेभे । अपितु **प्रत्यु**त विपरीतं जातम् । इन्द्रेणाकाले स्वपन्त्या दितेरुदरं प्रविश्य ये सप्त सप्तधा वृक्णास्ता**निन्द्र**स्य **सुहृदो मरुत** एकोनपञ्चाशत्पुत्रान**भिलेभे** । एवं च **दुष्टाशयेऽपि भवन्निषेवा शुभदैव**, यथा दितेरिन्द्रस्य च । **तत्तादृशो**ऽनन्यसदृशः ॥ ११ ॥ २२ ॥

इति चित्रकेतूपाख्यानं मरुदुत्पत्तिवर्णनं च त्रयोविंशं दशकं सैकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

भक्तप्रियाख्यायां

षष्ठस्कन्धपरिच्छेदः ।

---

आदितः श्लोकसङ्ख्या २४३.

## अथ सप्तमस्कन्धपरिच्छेदः ।

प्राक्कर्मवासनाभेदा ऊतयः सप्तमोदिताः ।
प्रह्लादपितृदृष्टान्तैर्लक्ष्यन्तेऽथ हरेर्गुणाः ॥

अथ प्रह्लादचरितवर्णनाय तदुत्पत्तेः पूर्वं तत्पितुर्हिरण्यकशिपोर्भगवद्विद्वेषादिकं प्रस्तौति—

**हिरण्याक्षे पोत्रिप्रवरवपुषा देव ! भवता**
**हते शोकक्रोधग्लपितधृतिरेतस्य सहजः ।**
**हिरण्यप्रारम्भः कशिपुरमराराातिसदसि**
**प्रतिज्ञामातेने तव किल वधार्थं मुररिपो[1] ! ॥ १ ॥**

**विधातारं घोरं स खलु तपसित्वा नचिरतः**
**पुरः साक्षात्कुर्वन् सुरनरमृगाद्यैरनिधनम् ।**
**वरं लब्ध्वा दृप्तो जगदिह भवन्नायकमिदं**
**परिक्षुन्दन्निन्द्रादहरत दिवं त्वामगणयन् ॥ २ ॥**

**विधातारमिति** । परिक्षुन्दन् चूर्णीकुर्वन् ॥ २ ॥

**निहन्तुं त्वां भूयस्तव पदमवाप्तस्य च रिपो-**
**र्बहिर्दृष्टेरन्तर्दधिथ हृदये सूक्ष्मवपुषा ।**
**नदन्नुच्चैस्तत्राप्यखिलभुवनान्ते च मृगयन्**
**भिया यातं मत्वा स खलु जितकाशी निववृते ॥ ३ ॥**

**निहन्तुमिति** । तव पदं वैकुण्ठमवाप्तस्य प्राप्तस्य रिपोर्हिरण्यकशिपोर्बहिर्दृष्टेर्मांसचक्षुषः सकाशात् त्वं सूक्ष्मवपुषा ज्ञानदृष्टिरहितस्यास्य हृदये अन्तर्दधिथ अन्तर्हितवान् । ततस्त्वां भीतं मत्वोच्चैर्नदन् सिंहनादं कुर्वन् तत्र वैकुण्ठलोके अखिलभुवनान्ते चतुर्दशसु लोकेषु जितकाशी जितंमन्यो निववृते निवृत्तोऽभूत् ॥

**ततोऽस्य प्रह्लादः समजनि सुतो गर्भवसतौ**
**मुनेर्वीणापाणेरधिगतभवद्भक्तिमहिमा ।**

---

१. 'मधुरि' क. घ. पाठः.

स वै जात्या दैत्यः शिशुरपि समेत्य त्वयि रतिं
गतस्त्वद्भक्तानां वरद! परमोदाहरणताम् ॥ ४ ॥

तत इति। हिरण्यकशिपौ तपसे मन्दराद्रिं गतवति देवा असुरान् निर्जित्यान्तर्वर्त्नीं प्रह्लादमातरं कयाधुं नेतुमारब्धा नारदवचनाद् विसृज्य प्रतिनिवृत्ताः। देवर्षिस्तु तस्यै प्रह्लादमुद्दिश्य भक्तिज्ञानमार्गानुपदिदेश। अतोऽसौ शिशुरपि त्वयीश्वरे रतिं प्रेमलक्षणां भक्तिम् ॥ ४ ॥

सुरारीणां हास्यं तव चरणदास्यं निजसुते
स दृष्ट्वा दुष्टात्मा गुरुभिरशिशिक्षच्चिरममुम्।
गुरुप्रोक्तं चासाविदमिदमभद्राय दृढमि-
त्यपाकुर्वन् सर्वं तव चरणभक्त्यैव ववृधे ॥ ५ ॥

सुरारीणामिति। गुरुभिः शुक्रपुत्राभ्यां शण्डामर्काभ्याम्। गुरुप्रोक्तं त्रिवर्गस्योपायं वार्तादण्डनीत्यादि भेददृष्ट्याश्रितत्वादिदमिदमभद्राय शरीरबन्धेन संसाराय भवति दृढं निश्चितमिति त्वद्भक्तेरन्यत् सर्वमपाकुर्वन् तव चरणभक्त्या केवलया ववृधे। अस्य शरीरवृद्ध्यनुसारेण भक्तिरपि ववृध इत्यर्थः ॥ ५ ॥

अधीतेषु श्रेष्ठं किमिति परिपृष्टेऽथ तनये
भवद्भक्तिं वर्यामभिगदति पर्याकुलधृतिः।
गुरुभ्यो रोषित्वा सहजमतिरस्येत्यभिविदन्
वधोपायानस्मिन् व्यतनुत भवत्पादशरणे ॥ ६ ॥

अधीतेष्विति। अथ कदाचित् पित्रा त्वयाधीतेषु मध्ये किं श्रेष्ठमिति तनये प्रह्लादे पृष्टे सति भवद्भक्तिं वर्यां श्रेष्ठामभिगदति च सति पर्याकुला चलिता धृतिर्यस्मात् स तथा अस्य मतिः सहजेति गुरुमुखादभिविदन् अस्मिन् प्रह्लादे वधोपायान् व्यतनुत ॥ ६ ॥

वधोपायानाह—

स शूलैराविद्धः सुबहु मथितो दिग्गजगणै-
र्महासर्पैर्दष्टोऽप्यनशनगराहारविधुतः।

गिरीन्द्रावक्षिप्तोऽप्यहह परमात्मन्नयि विभो!
त्वयि न्यस्तात्मत्वात् किमपि न निपीडामभजत ॥ ७ ॥

स इति । परमात्मनि त्वयि न्यस्त आत्मा मनो यस्य । अथवात्मा जीवः, ब्रह्मभूतत्वादित्यर्थः ॥ ७ ॥

ततः शङ्काविष्टः स पुनरतिदुष्टोऽस्य जनको
गुरूक्त्या तद्गेहे किल वरुणपाशैस्तमरुणत् ।
गुरोश्चासान्निध्ये स पुनरनुगान् दैत्यतनयान्
भवद्भक्तेस्तत्त्वं परममपि विज्ञानमशिषत् ॥ ८ ॥

तत इति । तद्गेहे गुरुगृहे स प्रह्लादोऽनुगान् सखीन् भवद्भक्तेस्तत्त्वं स्वरूपं कारणं फलं च परमं विज्ञानं ब्रह्मज्ञानमप्यशिषद् उपदिदेश ॥ ८ ॥

पिता शृण्वन् बालप्रकरमखिलं त्वत्स्तुतिपरं
रुषान्धः प्राहैनं कुलहतक! कस्ते बलमिति ।
बलं मे वैकुण्ठस्तव च जगतां चापि स बलं
स एव त्रैलोक्यं सकलमिति धीरोऽयमगदीत् ॥ ९ ॥

पितेति । कुलहतक! असुराधम! ममाज्ञालङ्घने कस्ते बलमिति पिता प्राह पप्रच्छ । वैकुण्ठो विष्णुर्मे बलं, न केवलं मम, तवापि त्रिभुवनविजये स विष्णुरेव बलं, जगतां जगद्वासिनामपि । किञ्च सकलं त्रैलोक्यं स विष्णुरेव, न ततः पृथक् किञ्चिदप्यस्तीत्ययं प्रह्लादोऽगदीद् व्यक्तमुक्तवान् । धीरो निर्भयो विद्वान् वा ॥ ९ ॥

तदनन्तरं हिरण्यकशिपोः प्रवृत्तिमाह—

अरे! क्वासौ क्वासौ सकलजगदात्मा हरिरिति
प्रभिन्ते स्म स्तम्भं चलितकरवालो दितिसुतः ।
अतः पश्चाद् विष्णो! न हि वदितुमीशोऽस्मि सहसा
कृपात्मन्! विश्वात्मन्! पवनपुरवासिन्! मृडय माम् ॥ १० ॥

---

१. 'हृ' क. घ. पाठः.

अरे इति। सकलं जगद् आत्मा स्वरूपं यस्यासौ हरिः क्वेति दुर्घटत्वेन कोपावेशेन चासकृदुच्चरन्नेव स्तम्भं प्रभिन्ते स्म ताडितवान्। अतः पश्चात् स्तम्भभञ्जनानन्तरं तत्र किं जातमिति न हि सहसा वक्तुमीशोऽस्मि। कृपायुक्त आत्मा यस्य, हे कृपात्मन्! भक्तवत्सल! विश्वात्मन्! स्पष्टविश्वात्मतत्त्व! हे विष्णो! जगद्व्यापनशील! हे पवनपुरवासिन्! मां मृडय सुखय ॥ १० ॥

**इति प्रह्लादचरिते नृसिंहाविर्भावप्रसङ्गवर्णनं चतुर्विंशं दशकम्।**

---

**स्तम्भे घट्टयतो हिरण्यकशिपोः कर्णौ समाचूर्णय-**
**न्नाघूर्णज्जगदण्डकुण्डकुहरो घोरस्तवाभूद् रवः[2]।**
**श्रुत्वा यं किल दैत्यराजहृदये पूर्वं कदाप्यश्रुतं**
**कम्पः कश्चन सम्पपात चलितोऽप्यम्भोजभूर्विष्टपात्[3] ॥ १ ॥**

**स्तम्भ** इति। एवं स्तम्भभञ्जनानन्तरं प्रादुर्भवतस्तव घोरो रवः सिंहनादोऽभूत्। घोरत्वमेवाह—घट्टयतो निघ्नतः। आघूर्णज्जगदण्डकुण्डकुहरः सम्भ्रान्तब्रह्माण्डकटाहान्तर्गतचराचरः। पूर्वं कदाप्यश्रुतं यं श्रुत्वा दैत्यस्य हिरण्यकशिपोर्हृदये कश्चनानिर्देश्यरूपः कम्पः सम्पपात। अपिच अम्भोजभूरपि विष्टपात् सत्यलोकाच्चलितः किमिदमकाण्डे कल्पापाय इति सम्भ्रान्तोऽभूत् ॥ १ ॥

**दैत्ये दिक्षु विसृष्टचक्षुषि महासंरम्भिणि स्तम्भतः**
**सम्भूतं न मृगात्मकं न मनुजाकारं वपुस्ते विभो!।**
**किं किं भीषणमेतदद्भुतमिति व्युद्भ्रान्तचित्तेऽसुरे**
**विस्फूर्जद्धवलोग्ररोमविकसद्वर्ष्मा समाजृम्भथाः ॥ २ ॥**

**दैत्य** इति। विसृष्टचक्षुषि सर्वतः सञ्चारितनयने सति न मृगात्मकं न मनुजाकारं नरसिंहाकारं वपुः तद् दृष्ट्वा किं किमेतद् भीषणमद्भुतं चेति व्युद्भ्रान्तचित्तेऽसुरे हिरण्यकशिपौ विस्फूर्जद्भिर्विकस्वरैर्धवलोग्ररोमभिः विकसत् प्रकाशमानं च वर्ष्म स्वरूपं यस्य स त्वं समाजृम्भथाः स्फुटनिर्गतोन्नतरूपोऽभूः ॥ २ ॥

---

१. 'त्मक! हे' क. पाठः. २. 'तः' क. घ. पाठः. ३. 'रा' घ. पाठः.

तद्रूपमेव वर्णयति—

**तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसर-**
**प्रोत्कम्पप्रनिकुम्बिताम्बरमहो जीयात् तवेदं वपुः ।**
**व्यात्तव्याप्तमहादरीसखमुखं खड्गोग्रवल्गन्महा-**
**जिह्वानिर्गमदृश्यमानसुमहादंष्ट्रायुगोड्डामरम् ॥ ३ ॥**

तप्तेति । तप्तस्वर्णसवर्णे विलीनावस्थितपुरटसदृशे घूर्णती भ्रमिते अतिरूक्षे अक्षिणी यस्मिन्, सटाकेसरप्रोत्कम्पप्रनिकुम्बिताम्बरं प्रचलितस्कन्धरोमाञ्चलाच्छादितगगनतलं, व्यात्तं विवृतं व्याप्तमहादरीसखं विस्तृतमहागुहासदृशं मुखं यस्मिन्, खड्गवदुग्राया वल्गन्त्याश्चलिताया महाजिह्वाया बहिर्निर्गमे दृश्यमानेन सुमहता दंष्ट्रायुगेनोड्डामरमतिभीषणं तदिदं ते वपुर्जीयात् सर्वोत्कृष्टतया प्रकाशताम् ॥ ३ ॥

**उत्सर्पद्वलिभङ्गभीषणहनुं ह्रस्वस्थवीयस्तर-**
**ग्रीवं पीवरदोश्शतोद्गतनखक्रूरांशुदूरोल्बणम् ।**
**व्योमोल्लङ्घिघनाघनोपमघनप्रध्वाननिर्धावित-**
**स्पर्धालुप्रकरं नमामि भवतस्तन्नारसिंहं वपुः ॥ ४ ॥**

उत्सर्पदिति । भवतस्तन्नारसिंहं वपुर्नमामि । कीदृशम् उत्सर्पद्भिरट्टहासविजृम्भणादिषूपर्युपरि गच्छद्भिर्वलिभङ्गैर्भीषणौ हनुप्रदेशौ यस्मिन्, ह्रस्वा स्थवीयस्तरा अतिशयेन स्थूला ग्रीवा यस्मिन्, पीवराणां दोष्णां शतादुद्गतानां नखानां क्रूरैरंशुभिर्दूरोल्बणमतिशयेन भयङ्करं, सजलजलधरध्वानवदतिभीषणसिंहनादैर्विद्रावितवैरिनिकरम् ॥ ४ ॥

**नूनं विष्णुरयं निहन्म्यमुमिति भ्राम्यद्गदाभीषणं**
**दैत्येन्द्रं समुपाद्रवन्तमधृथा दोर्भ्यां पृथुभ्याममुम् ।**
**वीरो निर्गलितोऽथ खड्गफलके गृह्णन् विचित्रश्रमान्**
**व्यावृण्वन् पुनरापपात भुवनग्रासोद्यतं त्वामहो ॥ ५ ॥**

नूनमिति । कपटवेषभृद् विष्णुरेवायं नूनं तर्कयामि, अमुं भ्रातृहणं निहन्मीति निश्चित्य । अधृथास्त्वमग्रहीः । कराभ्यां निर्गलितो वीरो वीरम्मन्यो-

ऽथानन्तरं विचित्रश्रमान् व्यायाममार्गेषु दक्षिणसव्यसञ्चरणभेदेषु शिक्षाविशेषान् व्यावृण्वन् प्रकाशयन् भुवनग्रासोद्यतं ब्रह्माण्डकबलीकरणसमर्थं त्वामापपाताससाद ॥ ५ ॥

भ्राम्यन्तं दितिजाधमं पुनरपि प्रोद्गृह्य दोर्भ्यां जवाद्
द्वारेऽथोरुयुगे निपात्य नखरान् व्युत्खाय वक्षोभुवि ।
निर्भिन्दन्नधिगर्भनिर्भरगलद्रक्ताम्बु बद्धोत्सवं
पायं पायमुदैरयो बहुजगत्संहारिसिंहारवान् ॥ ६ ॥

भ्राम्यन्तमिति । अन्तर्बहिश्च हन्तुमशक्यत्वाद् द्वारे । जले स्थले चाशक्यत्वादूरुयुगे दितिजाधमं निपात्यायुधैर्हन्तुमशक्यत्वान्नखरान् वक्षोभुवि व्युत्खाय निर्भिन्दन् विदारयन् अधिगर्भं वक्षोन्तर्भागे निर्भरगलद्रक्ताम्बु सिरामुखतः सन्तततनिःष्यन्दमानं रुधिराम्बु । बद्धोत्सवं यथा भवति तथा । बहून् जगत्संहारिणो ब्रह्माण्डकटाहभेदकान् सिंहारवानुदैरयः प्रायुङ्क्थाः ॥ ६ ॥

त्यक्त्वा तं हतमाशु रक्तलहरीसिक्तोन्नमद्वर्ष्मणि
प्रत्युत्पत्य समस्तदैत्यपटलीं चाखाद्यमाने त्वयि ।
भ्राम्यद्भूमि विकम्पिताम्बुधिकुलं व्यालोलशैलोत्करं
प्रोत्सर्पत्खचरं चराचरमहो दुःस्थामवस्थां दधौ ॥ ७ ॥

त्यक्त्वेति । रक्तलहरीसिक्तोन्नमद्वर्ष्मणि रुधिरस्रावाक्तोन्नतकाये त्वयि हतं तं त्यक्त्वाशु प्रत्युत्पत्य तदनुगसमस्तदैत्यसमूहांश्चाखाद्यमाने भक्षयति च सति चराचरं दुःस्थामनवस्थितस्वस्थाननिवेशामवस्थां दधौ । तदेवाह—भ्राम्यन्ती भूमिर्यस्मिन् । विकम्पितमम्बुधिकुलं यस्मिन् । व्यालोलशैलोत्करं कन्दुकायमानकुलाचलनिकरम् । प्रोत्सर्पत्खचरं केसरोत्क्षिप्तज्योतिर्गणम् ॥ ७ ॥

तावन्मांसवपाकरालवपुषं घोरान्त्रमालाधरं
त्वां मध्येसभमिद्धरोषमुषितं[1] दुर्वारगुर्वारवम् ।
अभ्येतुं न शशाक कोऽपि भुवने दूरे स्थिता भीरवः
सर्वे शर्वविरिञ्चवासवमुखाः प्रत्येकमस्तोषत ॥ ८ ॥

---

१. 'कोपमु' ख. पाठः.

**तावदिति** । तावत् तस्मिन् काल एव मध्येसभमुपितं त्वामभ्येतुं कोऽपि न शशाक । कोऽपि ब्रह्मापीति वा । तत्र हेतवः मांसवपाभ्यां करालं वपुर्यस्य तम् । ततश्च सर्वे प्रत्येकमस्तोषत तुष्टुवुः ॥ ८ ॥

**भूयोऽप्यक्षतरोषधाम्नि भवति ब्रह्माज्ञया बालके**
**प्रह्लादे पदयोर्नमत्यपभये कारुण्यभाराकुलः ।**
**शान्तस्त्वं करमस्य मूर्ध्नि समधाः स्तोत्रैरथोद्गायत-**
**स्तस्याकामधियोऽपि तेनिथ वरं लोकाय चानुग्रहम् ॥ ९ ॥**

**भूय** इति । भूयोऽपि ब्रह्माद्यैः संस्तुतोऽप्यक्षतरोषधाम्नि अन्यूनकोपभाजि भवति सति प्रह्लादे तव पदयोर्नमति सति तद्वात्सल्येन शान्तस्त्यक्तरोषस्त्वमस्य मूर्ध्नि करं समधाः । अकामधियोऽप्यस्य दैत्याधिपत्यं लोकानुग्रहरूपं वरं तेनिथ तदौदासीन्येऽपि स्वयं चकर्थ ॥ ९ ॥

ननु किमेवं क्रूरस्वभावो हरिः, न, यथा नटो रौद्ररसमभिनयति तद्वदित्याह—

**एवं नाटितरौद्रचेष्टित! विभो! श्रीतापनीयाभिध-**
**श्रुत्यन्तस्फुटगीतसर्वमहिमन्नत्यन्तशुद्धाकृते! ।**
**तत्तादृङ्निखिलोत्तरं पुनरहो कस्त्वां परो लङ्घयेत्**
**प्रह्लादप्रिय! हे मरुत्पुरपते! सर्वामयात् पाहि माम् ॥१०॥**

**एवमिति** । अत्र प्रमाणमा —श्रीतापनीयेति । श्रीतापनीयोपनिषत्प्रतिपादितैवंविधसकलमहत्त्व! अत्यन्तशुद्धा सच्चिदानन्दरूपा आकृतिः स्वरूपं यस्य । तत्तादृशमनुपमं निखिलोत्तरं सर्वोत्कृष्टं त्वां कः परो लङ्घयेत् त्वत्स्वरूपभूतत्वत्पार्षदादन्यः को वा त्वदप्रियमाचरेदित्यर्थः । हे प्रह्लादप्रिय! भक्तवत्सल! ॥ १० ॥ २० ॥

इति प्रह्लादचरितवर्णनं पञ्चविंशं दशकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

**भक्तप्रियाख्यायां**

**सप्तमस्कन्धपरिच्छेदः ।**

---

आदितः श्लोकसङ्ख्या २६३.

## अथाष्टमस्कन्धपरिच्छेदः ।

मन्वन्तराख्यः सद्धर्मो मन्वादिप्रतिबोधितः ।
लक्ष्यतेऽष्टमनिर्दिष्टो हरिलीलोपबृंहितः ॥

अथापदि श्रीहरौ मनोनिवेशनं धर्मसारांशभूतमिति गजेन्द्रदृष्टान्तेन दर्शयिष्यन् अस्य प्राग्जन्मकथामाह द्वाभ्याम्—

**इन्द्रद्युम्नः पाण्ड्यखण्डाधिराजस्त्वद्भक्तात्मा चन्दनाद्रौ कदाचित् ।**
**त्वत्सेवायां मग्नधीरालुलोके नैवागस्त्यं प्राप्तमातिथ्यकामम् ॥ १ ॥**

इन्द्रेति । पाण्ड्यखण्डो भारतखण्डदक्षिणभागः ॥ १ ॥

**कुम्भोद्भूतः सम्भृतक्रोधभारः स्तब्धात्मा त्वं हस्तिभूयं भजेति ।**
**शप्त्वाथैनं प्रत्यगात् सोऽपि लेभे हस्तीन्द्रत्वं त्वत्स्मृतिव्यक्तिधन्यम् ॥२॥**

**कुम्भोद्भूत** इति । हस्तिभूयं हस्तित्वम् । प्रत्यगात् प्रतिनिवृत्तः । त्वत्स्मृतेः प्राग्जन्माभ्यस्ताया व्यक्तिः प्रकाशस्तेन धन्यं पुरुषार्थप्रदम् ॥ २ ॥

**दुग्धाम्भोधेर्मध्यभाजि त्रिकूटे क्रीडञ्छैले यूथपोऽयं वशाभिः ।**
**सर्वान् जन्तूनत्यवर्तिष्ट शक्त्या त्वद्भक्तानां कुत्र नोत्कर्षलाभः ॥ ३ ॥**

**दुग्धे**ति । त्वद्भक्तानां कुत्र केषु योनिषु नोत्कर्षलाभः, यद् गजत्वेऽपि सर्वजन्तूनत्यवर्तिष्ट अतिशयितवान् ॥ ३ ॥

**स्वेन स्थेम्ना दिव्यदेहत्वशक्त्या सोऽयं खेदानप्रजानन् कदाचित् ।**
**शैलप्रान्ते घर्मतान्तः सरस्यां यूथैः सार्धं त्वत्प्रणुन्नोऽभिरेमे ॥ ४ ॥**

**स्वेने**ति । स्वेनानन्यसाधारणेन स्थेम्ना बलेन बलाधिकेतरसत्त्वसमुद्भूतान् खेदान् पीडाः । घर्मतान्तः ग्रीष्मकालोद्भूतेनोष्मणा क्लान्तः । शैलप्रान्ते पर्वतनितम्बवर्तिनि ऋतुमन्नाम्न्युद्याने सरस्यां त्वत्प्रणुन्नो निजपदं प्रापयिष्यतेश्वरेण प्रेरितः ॥ ४ ॥

**हूहूस्तावद् देवलस्यापि शापाद् ग्राहीभूतस्तज्जले वर्तमानः ।**
**जग्राहैनं हस्तिनं पाददेशे शान्त्यर्थं हि श्रान्तिदोऽसि स्वकानाम् ॥ ५ ॥**

हूहूरिति । तावत् तस्मिन् काल एव हूहूर्नाम गन्धर्वोऽपि देवलस्यर्षेः शापाद् ग्राहीभूतो ग्राहतां प्राप्तः । ननु गजेन्द्रश्चेद् भक्तः कथं ग्राहादभिभव इति नाशङ्कनीयमित्याह—शान्त्यर्थमिति । हि यस्माच्छान्त्यर्थं विषयविरक्त्यर्थं स्वकानां भक्तानां श्रान्तिदोऽसि पीडाकरो भवसि ॥ ५ ॥

**त्वत्सेवाया वैभवाद् दुर्निरोधं युध्यन्तं तं वत्सराणां सहस्रम् ।**
**प्राप्ते काले त्वत्पदैकाग्र्यसिद्ध्यै नक्राक्रान्तं हस्तिवीरं व्यधास्त्वम् ॥ ६ ॥**

त्वदिति । प्राप्ते काले प्रारब्धेऽवसिते त्वत्पदयोरैकाग्र्यं समाधिस्तस्य सिद्ध्यै प्राप्तये । अथवा प्राग्जन्माभ्यस्तस्य त्वत्पदैकाग्र्यस्य सिद्धिः फलं मोक्षस्तत्प्राप्तये ॥ ६ ॥

**आर्तिव्यक्तप्राक्तनज्ञानभक्तिः शुण्डोत्क्षिप्तैः पुण्डरीकैः समर्चन् ।**
**पूर्वाभ्यस्तं निर्विशेषात्मनिष्ठं स्तोत्रश्रेष्ठं सोऽन्वगादीत् परात्मन् ! ॥ ७ ॥**

आर्तीति । आर्त्या नक्राक्रान्तिजन्यया पीडया व्यक्ते प्राक्तने जन्मान्तराभ्यस्ते ज्ञानभक्ती यस्य । निर्विशेषात्मनिष्ठं निर्गुणब्रह्मविषयम् ॥ ७ ॥

**श्रुत्वा स्तोत्रं निर्गुणस्थं समस्तं ब्रह्मेशाद्यैर्नाहमित्यप्रयाते ।**
**सर्वात्मा त्वं भूरिकारुण्यवेगात् तार्क्ष्यारूढः प्रेक्षितोऽभूः पुरस्तात् ॥ ८ ॥**

श्रुत्वेति । ब्रह्मेशाद्यैर्ब्रह्माहमीशोऽहमित्यभिमानिभिर्नाहमनेन स्तुतः, यतो ब्रह्मनिष्ठं स्तोत्रमस्येत्यप्रयाते सति त्वं पुरस्तात् प्रेक्षितः प्रादुर्भूतोऽभूः । ननु विष्णुरपि विष्णुरहमित्यभिमान्येव, नेत्याह — सर्वात्मेति । ब्रह्मादीनामप्यात्मान्तर्यामी त्वम् ॥ ८ ॥

अथ गजेन्द्रमोक्षमाह—

**हस्तीन्द्रं तं हस्तपद्मेन धृत्वा चक्रेण त्वं नक्रवर्यं व्यदारीः ।**
**गन्धर्वेऽस्मिन् मुक्तशापे स हस्ती त्वत्सारूप्यं प्राप्य देदीप्यते स्म ॥ ९ ॥**

भगवतैवानुगृहीतां फलश्रुतिमाह—

**एतद् वृत्तं त्वां च मां च प्रगे यो गायेत् सोऽयं भूयसे श्रेयसे स्यात्।**
**इत्युक्त्वैनं तेन सार्धं गतस्त्वं धिष्ण्यं विष्णो! पाहि वातालयेश! ॥१०॥**

**एतदिति** । प्रगे प्रातः । वृत्तं गजेन्द्रमोक्षणरूपं हरिचरितम् । भूयसे श्रेयसे स्याद् मोक्षप्राप्तियोग्यो भवेदित्युक्त्वानुगृह्य । धिष्ण्यं वैकुण्ठम् ॥ १० ॥

**इति गजेन्द्रमोक्षवर्णनं षड्विंशं दशकम् ।**

---

अथ समुद्रदृष्टान्तेन सम्पदि सत्यां तामर्थिषु स्वात्मना सह समर्पयेदित्ययं धर्मः प्रकाश्यते । स हि सुरासुरेभ्योऽर्थिभ्य आत्ममथनेन सकलसम्पत्समर्पणं कृतवानिति जलधिमथनतदुपयोगिभगवदवतारचरितकथनाय प्रथमं देवानां शापनिमित्तैश्वर्यभ्रंशमाह द्वाभ्यां—

**दुर्वासाः सुरवनिताप्तदिव्यमाल्यं शक्राय स्वयमुपदाय तत्र भूयः ।**
**नागेन्द्रप्रतिमृदिते शशाप शक्रं का क्षान्तिस्त्वदितरदेवतांशजानाम् ॥१॥**

**दुर्वासा** इति । सुरवनितायाः हस्ताल्लब्धं शक्रायैरावतमारुह्य गच्छते । उपदाय दत्त्वा । तत्र दिव्यमाल्ये । शक्रं ‡निःश्रीका (देवा) भवन्त्विति शशाप । त्वदितरदेवताः श्रीशङ्करादयः, दुर्वासा हि शङ्करांशजः ॥ १ ॥

**शापेन प्रथितजरेऽथ निर्जरेन्द्रे देवेष्वप्यसुरजितेषु निष्प्रभेषु ।**
**शर्वाद्याः कमलजमेत्य सर्वदेवा निर्वाणप्रभव! समं भवन्तमापुः ॥२॥**

**शापेनेति** । हे निर्वाणप्रभव! मोक्षप्राप्तिस्थानभूत! ॥ २ ॥

**ब्रह्माद्यैर्नुतमहिमा चिरं तदानीं प्रादुःषन् वरद! पुरः परेण धाम्ना ।**
**हे देवा! दितिजकुलैर्विधाय सन्धिं पीयूषं *परिमथतेति पर्यशास्त्वम् ॥३॥**

---

१. स्थिताय उ' क. पाठः.

---

‡ 'निःश्रीको भव त्वमिति' इति वा पाठ्यम् । * 'मथे विलोडने' भौवादिकः ।

**सन्धानं कृतवति दानवैः सुरौघे मन्थानं नयति मदेन मन्दराद्रिम् ।**
**भ्रष्टेऽस्मिन् बदरमिवोद्वहन् खगेन्द्रे सद्यस्त्वं विनिहितवान् पयःपयोधौ ॥ ४ ॥**

**सन्धानमिति** । सुरदानवौघे मन्थानं मथनसाधनम् । अस्मिन् मन्दराद्रौ श्रान्तशक्रवैरोचनादिहस्तेभ्यो भ्रष्टे निपतिते सति त्वं खगेन्द्रे गरुडे एकेन हस्तेनोद्धृत्यारोप्योद्वहन् ॥ ४ ॥

**आधाय द्रुतमथ वासुकिं वरत्रां पाथोधौ विनिहितसर्वबीजजाले ।**
**प्रारब्धे मथनविधौ सुरासुरैस्तैर्व्याजात् त्वं भुजगमुखेऽकरोः सुरारीन् ॥ ५ ॥**

**आधायेति** । अथ वासुकिं वरत्रां नेत्रम् । विनिहितानि निक्षिप्तानि सर्वबीजजालानि वीरुत्तृणौषधिसमूहा यस्मिन् । व्याजादिति । हरिः सुरैः सार्धमहिपुच्छममङ्गलमित्युच्चैर्वदन् पूर्वं पूर्वकायं जगृहे । ततोऽसुरा वयं श्लाघ्याः पुच्छं न गृह्णीम इति तूष्णींभूतान् सुरारीन् अतिसम्माननया भुजगमुखे निर्गमिष्यद्विषाग्न्युल्बणे ॥ ५ ॥

**क्षुब्धाद्रौ क्षुभितजलोदरे तदानीं दुग्धाब्धौ गुरुतरभारतो निमग्ने ।**
**देवेषु व्यथिततमेषु तत्प्रियैषी प्राणैषीः कमठतनुं कठोरपृष्ठाम् ॥ ६ ॥**

**क्षुब्धेति** । क्षुब्धे भ्रमितेऽद्रौ मन्दराचले दुग्धाब्धौ निमग्ने सति त्वं कमठतनुं कच्छपरूपं प्राणैषीः प्रणीतवान् ॥ ६ ॥

**वज्रातिस्थिरतरकर्परेण विष्णो ! विस्तारात् परिगतलक्षयोजनेन ।**
**अम्भोधेः कुहरगतेन वर्ष्मणा त्वं निर्मग्नं क्षितिधरनाथमुन्निनेथ ॥ ७ ॥**

**वज्रेति** । वज्रादतिस्थिरतरपृष्ठदेशयुक्तेन वर्ष्मणा मूर्त्या उन्निनेथ उन्मग्नमकरोः ॥ ७ ॥

**उन्मग्ने झटिति तदा धराधरेन्द्रे निर्मेथुर्दृढमिह सम्मदेन सर्वे ।**
**आविश्य द्वितयगणेऽपि सर्पराजे वैवश्यं परिशमयन्नवीवृधस्तान् ॥ ८ ॥**

**उन्मग्न इति** । द्वितयगणे सुरगणेऽसुरगणे च तदन्यतमरूपेणाविश्य सर्पराजेऽपि सूक्ष्मरूपेणाविश्य तेषां वैवश्यं पीडां परिशमयन् अवीवृधस्तान् बलवीर्यसम्पन्नानकरोः ॥ ८ ॥

**उद्दामभ्रमणजवोन्नमद्गिरीन्द्रन्यस्तैकस्थिरतरहस्तपङ्कजं त्वाम् ।**
**अभ्रान्ते विधिगिरिशादयः प्रमोदादुद्भ्रान्ता नुनुवुरुपात्तपुष्पवर्षाः ॥ ९ ॥**

**उद्दामेति** । उद्दाम्ना सातिशयेन भ्रमणजवेनोन्नमति उत्पतति गिरीन्द्रे न्यस्तो निक्षिप्त एकः स्थिरतरहस्तपङ्कजो (?) येन तं त्वाम् । अभ्रान्ते मेघमार्गे उद्भ्रान्ताः प्रमोदविवशा नुनुवुस्तुष्टुवुः ॥ ९ ॥

**दैत्यौघे भुजगमुखानिलेन तप्ते तेनैव त्रिदशकुलेऽपि किञ्चिदार्ते ।**
**कारुण्यात् तव किल देव! वारिवाहाः प्रावर्षन्नमरगणान् न दैत्यसङ्घान् ॥**

**दैत्यौघ** इति । वारिवाहाः मेघाः ॥ १० ॥

**उद्भ्राम्यद्बहुतिमिनक्रचक्रवाले तत्राब्धौ चिरमथितेऽपि निर्विकारे ।**
**एकस्त्वं करयुगकृष्टसर्पराजः संराजन् पवनपुरेश! पाहि रोगात् ॥ ११ ॥**

**उद्भ्राम्यदिति** । उद्भ्राम्यतामुत्पततां, तिमिर्महामत्स्यः, बहुतिमिनक्राणां चक्रवालं समूहो यस्मिन् । तत्र तास्मिन् ॥ ११ ॥

इत्यमृतमथने देवासुराणामशक्तौ भगवत्कृतमथनवर्णनं

**सप्तविंशं दशकं सैकम् ।**

---

**गरलं तरलानलं पुरस्ताज्जलधेरुद्विजगाल कालकूटम् ।**
**अमरस्तुतिवादमोदनिघ्नो गिरिशस्तन्निपपौ भवत्प्रियार्थम् ॥ १ ॥**

**गरलमिति** । उद्विजगाल उद्गलितमभूत् , तदामराणां गिरिशविषयो यः स्तुतिवादस्तन्निघ्नस्तदधीनः सन् तद् गरलं निपपौ पीतवान् ॥ १ ॥

**विमथत्सु सुरासुरेषु जाता सुरभिस्तामृषिषु न्यधास्त्रिधामन् ।**
**हयरत्नमभूदथेभरत्नं द्युतरुश्चाप्सरसः सुरेषु तानि ॥ २ ॥**

**विमथत्स्विति** । हयरत्नमुच्चैःश्रवाः । इभरत्नमैरावतः । द्युतरुः कल्पवृक्षः । तानि सुरेषु च न्यधाः दत्तवान् ॥ २ ॥

**जगदीश ! भवत्परा तदानीं कमनीया कमला बभूव देवी ।**
**अमलामवलोक्य यां विलोलः सकलोऽपि स्पृहयाम्बभूव लोकः ॥ ३ ॥**

**जगदिति** । भवान् परः प्रधानो यस्याः सा भवत्परा ॥ ३ ॥

**त्वयि दत्तहृदे तदैव देव्यै त्रिदशेन्द्रो मणिपीठिकां व्यतारीत् ।**
**सकलोपहृताभिषेचनीयैर्ऋषयस्तां श्रुतिगीर्भिरभ्याषिञ्चन् ॥ ४ ॥**

**त्वयीति** । त्वयि दत्तं समर्पितं हृद् यया सा तथा तस्यै दत्तहृदे । यदैवमवगता, तदैव सकलैः सरिद्भूम्यादिभिरुपहृतैरभिषेचनीयैरभिषेकसाधनैरोषधीकुम्भपवित्रादिभिर्ऋषयस्तां महालक्ष्मीं श्रुतिगीर्भिर्मन्त्रैरभ्यषिञ्चन् ॥ ४ ॥

**अभिषेकजलानुपातिमुग्धत्वदपाङ्गैरवभूषिताङ्गवल्लीम् ।**
**मणिकुण्डलपीतचेलहारप्रमुखैस्ताममरादयोऽन्वभूषन् ॥ ५ ॥**

**अभिषेकेति** । अभिषेकजलपातसमनन्तरं पतितुं शीलं येषां तैर्मुग्धैस्त्वदपाङ्गैरेवावभूषिता अङ्गवल्ली यस्यास्ताम् । अमरादयो मणिकुण्डलपीतचेलहारप्रमुखैरन्वभूषन् ‡ अलञ्चक्रुः ॥ ५ ॥

**वरणस्रजमात्तभृङ्गनादां दधती सा कुचकुम्भमन्दयाना ।**
**पदशिञ्जितमञ्जुनूपुरा त्वां कलितव्रीलविलासमाससाद ॥ ६ ॥**

**वरणेति** । वरणस्रजं स्वयंवरमालाम् ॥ ६ ॥

**गिरिशद्रुहिणादिसर्वदेवान् गुणभाजोऽप्यविमुक्तदोषलेशान् ।**
**अवमृश्य सदैव सर्वरम्ये निहिता त्वय्यनयापि दिव्यमाला ॥ ७ ॥**

**गिरिशेति** । अविमुक्तदोषलेशान् कामक्रोधादिषड्दोषयुक्तान् अवमृश्य विचार्य सदैव सर्वैर्गुणैर्दोषरहितै रम्ये त्वयि तवांसदेशेऽनया श्रिया दिव्यमाला निहिता ॥ ७ ॥

---

‡ 'भूष अलङ्कारे' भौवादिकः ।

**उरसा तरसा ममानिथैनां भुवनानां जननीमनन्यभावाम् ।**
**त्वदुरोविलसत्तदीक्षणश्रीपरिवृष्ट्या परिपुष्टमास विश्वम् ॥ ८ ॥**

**उरसेति** । त्वं च तरसैनामुरसा ममानिथ स्वोरसि निवासमकरोः । नान्यस्मिन् भावोऽनुरागो यस्याः सानन्यभावा । त्वदुरसि विलसन्त्यास्तस्या ईक्षणश्रियः सकरुणकटाक्षशोभायाः परिवृष्ट्या विश्वं परिपुष्टं सकलसम्पत्समृद्धम् आस अभूत् ॥ ८ ॥

अथ वारुणी देव्युदभूदित्याह—

**अतिमोहनविभ्रमा तदानीं मदयन्ती खलु वारुणी निरागात् ।**
**तमसः पदवीमदास्त्वमेनामतिसम्माननया महासुरेभ्यः ॥ ९ ॥**

**अतीति** । तमसोऽज्ञानस्य पदवीं हेतुभूतां वारुणीम् ॥ ९ ॥

अथ धन्वन्तर्यवतारमाह—

**तरुणाम्बुदसुन्दरस्तदा त्वं ननु धन्वन्तरिरुत्थितोऽम्बुराशेः ।**
**अमृतं कलशे वहन् कराभ्यामखिलार्तिं हर मारुतालयेश ! ॥ १० ॥**

इत्यमृतमथनवर्णनम् अष्टाविंशं दशकम् ।

---

**उद्गच्छतस्तव करादमृतं हरत्सु**
**दैत्येषु तानशरणाननुनीय देवान् ।**
**सद्यस्तिरोदधिथ देव ! भवत्प्रभावा-**
**दुद्यत्सयूथ्यकलहा दितिजा बभूवुः ॥ १ ॥**

**उद्गच्छत** इति । उद्गच्छतः प्रादुर्भवतः । अशरणाननन्यशरणान् । भवतः प्रभावः शक्तिर्माया तस्मादुद्यन् सयूथ्यकलहोऽन्योन्यविवादो येषां ते ॥ १ ॥

**श्यामां रुचापि वयसापि तनुं तदानीं**
**प्राप्तोऽसि तुङ्गकुचमण्डलभङ्गुरां त्वम् ।**
**पीयूषकुम्भकलहं परिमुच्य सर्वे**
**तृष्णाकुलाः[1] प्रतिययुस्त्वदुरोजकुम्भे ॥ २ ॥**

**श्यामामिति** । वयसापि श्यामां यौवनमध्यस्थाम् । भङ्गुरां नम्राम् । त्वदुरोजकुम्भे पीयूषादप्यतिमधुरे ॥ २ ॥

---

१. 'परिय' घ. पाठः.

**का त्वं मृगाक्षि! विभजस्व सुधामिमामि-**
**त्यारूढरागविवशानभियाचतोऽमून् ।**
**विश्वस्यते मयि कथं कुलटास्मि दैत्या !**
**इत्यालपन्नपि सुविश्वसितानतानीः ॥ ३ ॥**

**केति** । हे दैत्याः ! अहं कुलटा पुंश्चल्यस्मि, भवद्भिः कथं मयि विश्वस्यते इत्यालपन्नपि तदानीन्तनसप्रेमस्मितकटाक्षादिभिः सुविश्वसिता- नतानीः ॥ ३ ॥

**मोदात् सुधाकलशमेषु ददत्सु सा त्वं**
**दुश्चेष्टितं मम सहध्वमिति ब्रुवाणा ।**
**पङ्क्तिप्रभेदविनिवेशितदेवदैत्या**
**लीलाविलासगतिभिः समदाः सुधां ताम् ॥ ४ ॥**

**मोदादिति** । यत्किञ्चिद् मया क्रियमाणं दुश्चेष्टितं सहध्वम् । पङ्क्तिप्र- भेदेन द्विधा विनिवेशिता देवदैत्या यया सा तथा दैत्यान् वञ्चयितुं तद्विषयया लीलया विलासेन गत्यातिसमीपसञ्चरणेन च समदाः सम्यक् सुरेभ्य एवाददाः । तां जरामरणहारिणीं सुधामित्यर्थः ॥ ४ ॥

**अस्मास्वियं प्रणयिनीत्यसुरेषु तेषु**
**जोषं स्थितेष्वथ समाप्य सुधां सुरेषु ।**
**त्वं भक्तलोकवशगो निजरूपमेत्य**
**स्वर्भानुमर्धपरिपीतसुधं व्यलावीः ॥ ५ ॥**

**अस्मास्विति** । असुरेषु तु अस्मास्वियं प्रणयिनी, अहो भाग्यम्, एषास्मान् न वञ्चयेदिति । जोषं तूष्णीम् । स्वर्भानुं देवलिङ्गच्छन्नं चक्रेण व्यलावीः शिरोऽच्छिनः ॥ ५ ॥

**त्वत्तः सुधाहरणयोग्यफलं परेषु**
**दत्त्वा गते त्वयि सुरैः खलु ते व्यगृह्णन् ।**
**घोरेऽथ मूर्छति रणे बलिदैत्यमाया-**
**व्यामोहिते सुरगणे त्वमिहाविरासीः ॥ ६ ॥**

१. 'भिश्च सु' ग. पाठः.

त्वत्त इति। त्वत्तः सुधाहरणस्य योग्यं फलं व्यर्थपरिश्रमं परेषु दैत्येषु। ते दैत्याः सुरैर्व्यगृह्णन् कलहं चक्रुः ॥ ६ ॥

त्वं कालनेमिमथ मालिमुखाञ्जघन्थ
शक्रो जघान बलिजम्भवलान् सपाकान्।
शुष्कार्द्रदुष्करवधे नमुचौ च लूने
फेनेन नारदगिरा न्यरुणो रणं तम् ॥ ७ ॥

त्वमिति। शुष्केणार्द्रेण च दुष्करवधो नमुचिस्तस्मिन् उभयात्मकेन फेनेन लूने छिन्नशिरस्के ब्रह्मणा प्रेषितस्य नारदस्य गिरा त्वं रणं न्यरुणः ॥ ७ ॥

योषावपुर्दनुजमोहनमाहितं ते
श्रुत्वा विलोकनकुतूहलवान् महेशः।
भूतैः समं गिरिजया च गतः पदं ते
स्तुत्वाब्रवीदभिमतं त्वमथो तिरोधाः ॥ ८ ॥

योषेति। ते योषावपुः स्त्रीरूपमाहितं कृतं श्रुत्वा ते पदं वैकुण्ठम्। अभिमतं योषिद्रूपदर्शनम्। अथो प्रार्थनानन्तरम् ॥ ८ ॥

आरामसीमनि च कन्दुकघातलीला-
लोलायमाननयनां कमनीं मनोज्ञाम्।
त्वामेष वीक्ष्य विगलद्वसनां मनोभू-
वेगादनङ्गरिपुरङ्ग! समालिलिङ्ग ॥ ९ ॥

आरामेति। विगलद्वसनां मारुतहृतदुकूलाम्। यद्यप्यनङ्गरिपुरयं, तथापि मनोभूवेगात् त्वां समालिलिङ्ग ॥ ९ ॥

भूयोऽपि विद्रुतवतीमुपधाव्य देवो
वीर्यप्रमोक्षविकसत्परमार्थबोधः।
त्वन्मानितस्तव महत्त्वमुवाच देव्यै
तत्तादृशस्त्वमव वातनिकेतनाथ! ॥ १० ॥

**भूय** इति। विद्रुतवतीं प्राद्रवन्तीमुपधाव्य वीर्यस्य रेतसः प्रमोक्षेण। त्वया सम्मानितः तव महत्त्वं देव्यै उवाच ॥ १० ॥

इति देवानाममृतोपलब्धिप्रकारवर्णनं मोहिनीदर्शनेन शिवस्य धैर्यच्युतिवर्णनं च

एकोनत्रिंशं दशकम्।

---

प्रतिज्ञानिर्वहणादौ धर्मे महाबलिर्दृष्टान्त इति तत्कथां तदुपयोगिभगवदवतारचरितं च प्रकाशयिष्यन् प्रथमं बलिविजयमाह—

**शक्रेण संयति हतोऽपि बलिर्महात्मा**
**शुक्रेण जीविततनुः क्रतुवर्धितोष्मा ।**
**विक्रान्तिमान् भयनिलीनसुरां त्रिलोकीं**
**चक्रे वशे स तव चक्रमुखादभीतः ॥ १ ॥**

**शक्रेणे**ति। शक्रेण हतोऽपि शुक्रेण मृतसञ्जीविन्याख्यया[1] विद्यया जीविततनुः। विश्वजिदाख्येन क्रतुना वर्धित ऊष्मा शक्तिर्यस्य। भयेन युद्धे निलीनाः सुरा यस्याम्। स बलिश्चक्रमुखात् सुदर्शनादभीतः, प्रह्लादवंश्यत्वात् ॥१॥

**पुत्रार्तिदर्शनवशाददितिर्विषण्णा**
**तं काश्यपं निजपतिं शरणं प्रपन्ना ।**
**त्वत्पूजनं तदुदितं हि पयोव्रताख्यं**
**सा द्वादशाहमचरत् त्वयि भक्तिपूर्णा ॥ २ ॥**

**पुत्रे**ति। पुत्रस्यार्तिः इन्द्रस्य स्वर्गापहरणजा पीडा। तदुदितं काश्यपोदितम् ॥ २॥

**तस्यावधौ त्वयि निलीनमतेरमुष्याः**
**श्यामश्चतुर्भुजवपुः स्वयमाविरासीः ।**
**नम्रां च तामिह भवत्तनयो भवेयं**
**गोप्यं मदीक्षणमिति प्रलपन्नयासीः ॥ ३ ॥**

---

१. 'वन्या वि' ख. पाठः.  २. 'तः' क. पाठः.

तस्येति । तस्य पयोव्रतस्यावधावन्ते । प्रलपन् त्वं भर्तर्येवंरूपं मां भावयन्ती भर्तारमुपतिष्ठेत्यादि कथयन् अयासीः तिरोभूः ॥ ३ ॥

त्वं काश्यपे तपसि सन्निदधत् तदानीं
प्राप्तोऽसि गर्भमदितेः प्रणुतो विधात्रा ।
प्रासूत च प्रकटवैष्णवदिव्यरूपं
सा द्वादशीश्रवणपुण्यदिने भवन्तम् ॥ ४ ॥

त्वमिति । काश्यपे काश्यपसम्बन्धिनि तपसि तपःसम्भृते वीर्ये सन्निदधत् प्रविष्टः । प्रकटवैष्णवदिव्यरूपं शङ्खचक्रगदापद्मकिरीटमकुटमकरकुण्डलश्रीवत्सकौस्तुभवनमालापीतवसनकाञ्चीनूपुराद्युपलक्षितम् ॥ ४ ॥

पुण्याश्रमं तमभिवर्षति पुष्पवर्षै-
र्हर्षाकुले सुरकुले कृततूर्यघोषे ।
बद्ध्वाञ्जलिं जय जयेति नुतः पितृभ्यां
त्वं तत्क्षणे पटुतमं वटुरूपमाधाः[2] ॥ ५ ॥

पुण्येति । तत्क्षण एव वटुरूपम् ॥ ५ ॥

तावत् प्रजापतिमुखैरुपनीय मौञ्जी-
दण्डाजिनाक्षवलयादिभिरर्च्यमानः ।
देदीप्यमानवपुरीश[1] कृताग्निकार्य-
स्त्वं प्रास्थिथा बलिगृहं प्रकृताश्वमेधम् ॥ ६ ॥

तावदिति । प्रजापतिमुखैर्ऋषिभिरुपनीय उपनयनाख्यं कर्म कृत्वा तैर्मौञ्ज्यादिभिरर्च्यमान इति । सविता तस्य गायत्रीमुपदिदेश । बृहस्पतिर्यज्ञोपवीतं, पिता मौञ्जीं, भूमिः कृष्णाजिनं, सोमो दण्डम्, अदितिः कौपीनं, द्यौश्छत्रं, ब्रह्मा कमण्डलुं, सप्तर्षयो दर्भान्, सरस्वत्यक्षमालां च ददौ । एवं देदीप्यमानमतिशयेन शोभमानं वपुर्यस्य, कृताग्निकार्योऽनुष्ठितसमिदाधानकर्मा प्रकृताश्वमेधं प्रारब्धाश्वमेधयागं बलिगृहं बलेर्यज्ञशालां प्रास्थिथाः प्रस्थितवान् ॥ ६ ॥

---

१. 'रं' क. पाठः. २. 'व पटुतमं वटुरूपम् आधाः (दधौ ?)' क. पाठः.

**गात्रेण भाविमहिमोचितगौरवं प्राग्**
**व्यावृण्वतेव धरणीं चलयन्नयासीः ।**
**छत्रं परोष्मतिरणार्थमिवादधानो**
**दण्डं च दानवजनेष्विव सन्निधातुम् ॥ ७ ॥**

**गात्रेणे**ति । भाविमहिमा विश्वरूपं, तदुचितं गौरवं प्रागेव धरणीचलनेन व्यावृण्वता प्रकाशयता । परेषां दैत्यानामूष्मणः पराक्रमस्य तिरणार्थं वारणार्थम् । सन्निधातुं दण्डयितुम् ॥ ७ ॥

**तां नर्मदोत्तरतटे हयमेधशाला-**
**मासेदुषि त्वयि रुचा तव रुद्धनेत्रैः ।**
**भास्वान् किमेष दहनो नु सनत्कुमारो**
**योगी नु कोऽयमिति शुक्रमुखैः शशङ्के ॥ ८ ॥**

**तामि**ति । आसेदुषि प्राप्तवति ॥ ८ ॥

**आनीतमाशु भृगुभिर्महसाभिभूतै-**
**स्त्वां रम्यरूपमसुरः पुलकावृताङ्गः ।**
**भक्त्या समेत्य सुकृती परिषिच्य पादौ**
**तत्तोयमन्वधृत मूर्धनि तीर्थतीर्थम् ॥ ९ ॥**

**आनीतामि**ति । त्वन्महसाभिभूतैर्भ्रष्टतेजस्कैर्भृगुभिः शुक्रेणानीतं प्रतिगृह्य बलिनिकटं नीतम् । असुरो बलिः । तीर्थतीर्थं सर्वशोधकम् ॥ ९ ॥

**प्रह्लादवंशजतया क्रतुभिर्द्विजेषु**
**विश्वासतो नु तदिदं दितिजोऽपि लेभे ।**
**यत् ते पदाम्बु गिरिशस्य शिरोभिलाल्यं**
**स त्वं विभो! गुरुपुरालय! पालयेथाः ॥ १० ॥**

**प्रह्लादे**ति । भक्तोत्तंसप्रह्लादवंशजतया नु, क्रतुभिर्नु, द्विजेषु विश्वासतः सत्सङ्गान्नु, समस्तैरेतैर्नु (न) निश्चितं, बलिर्दितिजोऽपि तदिदं पादोदकस्य मूर्ध्नि

धारणं लेभे । तादृङ्महिमेदमित्याह—यदिति ॥ १० ॥

इति वामनचरिते महाबलेरातिथ्यवर्णनं त्रिंशं दशकम् ।

---

प्रीत्या दैत्यस्तव तनुमहःप्रेक्षणात् सर्वथापि
त्वामाराध्यन्नजित! रचयन्नञ्जलिं सञ्जगाद ।
मत्तः किं ते समभिलषितं विप्रसूनो! वद त्वं
वित्तं भक्तं भवनमवनीं वापि सर्वं प्रदास्ये ॥ १ ॥

प्रीत्येति । तनोर्महसश्च प्रेक्षणात् सर्वथा स्वागतवचनादिभिः । भक्तं मृष्टान्नम् ॥ १ ॥

तामक्षीणां बलिगिरमुपाकर्ण्य कारुण्यपूर्णो-
ऽप्यस्योत्सेकं शमयितुमना दैत्यवंशं प्रशंसन् ।
भूमिं पादत्रयपरिमितां प्रार्थयामासिथ त्वं
सर्वं देहीति तु निगदिते कस्य हास्यं न वा स्यात् ॥ २ ॥

तामिति । अक्षीणां जगदीश्वरत्वख्यापयित्रीं, हे विश्वेश्वर! सर्वं सर्वस्वं मे देहीति निगदिते याचिते तद्वचः कस्य वा न हास्यं स्यात् । अतः पदत्रयमेव याचितवानसि ॥ २ ॥

विश्वेशं मां त्रिपदमिह किं याचसे बालिशस्त्वं
सर्वां भूमिं वृणु किममुनेत्यालपत् त्वां स दृप्यन् ।
यस्माद् दर्पात् त्रिपदपरिपूर्त्यक्षमः क्षेपवादान्
बन्धं चासावगमदतदर्होऽपि गाढोपशान्त्यै ॥ ३ ॥

विश्वेशमिति । स दृप्यन् सर्वां भूमिं वृणिवत्यालपत् । दर्पस्य फलमाह—यस्मादिति । अतदर्हो बन्धनक्षेपवादानर्हः । तर्हि कथं भगवान् बबन्ध । अनुग्रहायेत्याह—गाढेति । सम्यग् विषयविरक्तिमापाद्य स्वस्मिन् मनस्समाधानायेत्यर्थः ॥ ३ ॥

भगवानुत्तरमाह—

**पादत्रय्या यदि न मुदितो विष्टपैर्नापि तुष्ये-**
**दित्युक्तेऽस्मिन् वरद! भवते दातुकामेऽथ तोयम्।**
**दैत्याचार्यस्तव खलु परीक्षार्थिनः प्रेरणात् तं**
**मा मा देयं हरिरयमिति व्यक्तमेवाबभाषे ॥ ४ ॥**

**पादे**ति। यदि न मुदितः सोऽसन्तुष्टो विष्टपैस्त्रिभिर्लोकैरपि न तुष्येत्। तोयं तोयपूर्वकं महीं दातुकामे दैत्याचार्यः शुक्रो मा मा देयमिति भविष्यत्त्रिपदक्रमणादिकथनपूर्वकमाबभाषे न्यषेधत्। ननु कथं काव्यस्य भगवत्प्रतिकूलाचरणमित्याशङ्क्याह — तव प्रेरणादिति। तदपि किमर्थमित्यत आह — परीक्षार्थिन इति। बलेर्धर्मस्थैर्यपरीक्षार्थी त्वं तदन्तर्यामित्वेन प्रेरितवानित्यर्थः ॥ ४ ॥

**याचत्येवं यदि स भगवान् पूर्णकामोऽस्मि सोऽहं**
**दास्याम्येव स्थिरमिति वदन् काव्यशप्तोऽपि दैत्यः।**
**विन्ध्यावल्या निजदयितया दत्तपाद्याय तुभ्यं**
**चित्रं चित्रं सकलमपि स प्रार्पयत् तोयपूर्वम् ॥ ५ ॥**

**याचती**ति। शुक्रेण भ्रष्टैश्वर्यो भवेति शप्तोऽपि सकलं हरिरयं त्रैलोक्यमाच्छिद्य शक्राय दास्यतीति गुरुवचनाद्विदिततत्त्वस्त्रैलोक्यं सकलं प्रार्पयत् ॥ ५ ॥

**निस्सन्देहं दितिकुलपतौ त्वय्यशेषार्पणं तद्**
**व्यातन्वाने मुमुचुर्ऋषयः सामराः पुष्पवर्षम्।**
**दिव्यं रूपं तव च तदिदं पश्यतां विश्वभाजा-**
**मुच्चैरुच्चैरवृधदवधीकृत्य विश्वाण्डभाण्डम् ॥ ६ ॥**

**निःसन्देह**मिति। पश्यतां विश्वभाजां सर्वेषु पश्यत्सु। तदिदं वामनरूपम्। विश्वाण्डभाण्डं ब्रह्माण्डकटाहमवधीकृत्य ववृधे ॥ ६ ॥

**त्वत्पादाग्रं निजपदगतं पुण्डरीकोद्भवोऽसौ**
**कुण्डीतोयैरसिचदपुनाद् यज्जलं विश्वलोकान्।**

हर्षोत्कर्षात् सुबहु ननृते खेचरैरुत्सवेऽस्मिन्
भेरीं निघ्नन् भुवनमचरज्जाम्बवान् भक्तिशाली ॥ ७ ॥

त्वदिति । निजपदगतं सत्यलोकागतम् ॥ ७ ॥

तावद् दैत्यास्त्वनुमतिमृते भर्तुरारब्धयुद्धा
देवोपेतैर्भवदनुचरैः सङ्गता भङ्गमापन् ।
कालात्मायं वसति पुरतो यद्वशात् प्राग् जिताः स्मः
किं वो युद्धैरिति बलिगिरा तेऽथ पातालमापुः ॥ ८ ॥

पाशैर्बद्धं पतगपतिना दैत्यमुच्चैरवादी-
स्तार्तीयीकं दिश मम पदं किं न विश्वेश्वरोऽसि ।
पादं मूर्ध्नि प्रणय भगवन्नित्यकम्पं वदन्तं
प्रह्लादस्तं स्वयमुपगतो मानयन्नस्तवीत् त्वाम् ॥ ९ ॥

पाशैरिति । तार्तीयीकं तृतीयम् ॥ ९ ॥

दर्पोच्छित्त्यै विहितमखिलं दैत्य! सिद्धोऽसि पुण्यै-
र्लोकस्तेऽस्तु त्रिदिवविजयी वासवत्वं च पश्चात् ।
मत्सायुज्यं भज च पुनरित्यन्वगृह्णा बलिं तं
विप्रैः सन्तानितमखवरः पाहि वातालयेश! ॥ १० ॥

दर्पेति । विप्रैः सन्तानितः कारितप्रायश्चित्तो मखवरो राजसूयाख्यो येन ॥ १० ॥

इति वामनचरितवर्णनम् एकत्रिंशं दशकम् ।

---

अथ ब्रह्मणे सत्यव्रताय च वेदतदर्थप्रतिपादनाय मात्स्यं वपुर्धृतवतो भगवतश्चरितमुपक्रमते—

पुरा हयग्रीवमहासुरेण षष्ठान्तरान्तोद्यदकाण्डकल्पे ।
निद्रोन्मुखब्रह्ममुखाद्धृतेषु वेदेष्वधित्सः किल मत्स्यरूपम् ॥ १ ॥

पुरेति । षष्ठान्तरस्य चाक्षुषमन्वन्तरस्यान्तेऽवसाने उद्यत्युद्भूते अत एवाकाण्डकल्पेऽवान्तरप्रलये । अधित्सः विधातुमैच्छः ॥ १ ॥

**सत्यव्रतस्य द्रमिलाधिभर्तुर्नदीजले तर्पयतस्तदानीम् ।**
**कराञ्जलौ स ज्वलिताकृतिस्त्वमदृश्यथाः कश्चन बालमीनः ॥ २ ॥**

सत्येति । नद्या कृतमालाया जले ॥ २ ॥

**क्षिप्तं जले त्वां चकितं विलोक्य निन्येऽम्बुपात्रेण मुनिः स्वगेहम् ।**
**स्वल्पैरहोभिः कलशीं च कूपं वापीं सरश्चानशिषे विभो ! त्वम् ॥ ३ ॥**

क्षिप्तमिति । आनशिषे व्याप्तोऽभूः ॥ ३ ॥

**योगप्रभावाद् भवदाज्ञयैव नीतस्ततस्त्वं मुनिना पयोधिम् ।**
**पृष्टोऽमुना कल्पदिदृक्षुमेनं सप्ताहमास्स्वेति वदन्नयासीः ॥ ४ ॥**

योगेति । मुनिना राजर्षिणा । योगप्रभावात् तपश्शक्त्या । भवदाज्ञया महामत्स्यं मामपी[1]दानीमुदधिजले प्रक्षिपेत्येवंरूपया । कल्पदिदृक्षुं प्रलयार्णवदर्शनोत्सुकम् ॥ ४ ॥

**प्राप्ते त्वदुक्तेऽहनि वारिधारापरिप्लुते भूमितले मुनीन्द्रः ।**
**सप्तर्षिभिः सार्धमपारवारिण्युद्घूर्णमानः शरणं ययौ त्वाम् ॥ ५ ॥**

प्राप्त इति । अपारवारिणि प्रलयाब्धौ । उद्घूर्णमानः सम्भ्रान्तः ॥ ५ ॥

**धरां त्वदादेशकरीमवाप्तां नौरूपिणीमारुरुहुस्तदा ते ।**
**तत्कम्पकम्प्रेषु च तेषु भूयस्त्वमम्बुधेराविरभूर्महीयान् ॥ ६ ॥**

धरामिति । ततस्त्वदादेशकरीं त्वत्प्रेरितां नौरूपिणीं भूमिम् । तेषु सत्यव्रतसप्तर्षिषु ॥ ६ ॥

**झषाकृतिं योजनलक्षदीर्घां दधानमुच्चैस्तरतेजसं त्वाम् ।**
**निरीक्ष्य तुष्टा मुनयस्त्वदुक्त्या त्वत्तुङ्गशृङ्गे तरणिं बबन्धुः ॥ ७ ॥**

झषाकृतिमिति । तरणिं नावम् ॥ ७ ॥

---

1. 'प्युद' क. पाठः.

आकृष्टनौको मुनिमण्डलाय प्रदर्शयन् विश्वजगद्विभागान् ।
संस्तूयमानो नृवरेण तेन ज्ञानं परं चोपदिशन्नचारीः ॥ ८ ॥

आकृष्टेति । मुनिमण्डलाय सत्यव्रतसप्तर्षिभ्यः । ज्ञानं परं च शास्त्रज्ञानं ब्रह्मज्ञानं च ॥ ८ ॥

कल्पावधौ सप्त मुनीन् पुरोवत् प्रस्थाप्य सत्यव्रतभूमिपं तम् ।
वैवस्वताख्यं मनुमादधानः क्रोधाद्धयग्रीवमभिद्रुतोऽभूः ॥ ९ ॥

कल्पेति । वैवस्वताख्यमिदानीन्तनम् ॥ ९ ॥

स्वतुङ्गशृङ्गक्षतवक्षसं तं निपात्य दैत्यं निगमान् गृहीत्वा ।
विरिञ्चये प्रीतहृदे ददानः प्रभञ्जनागारपते ! प्रपायाः ॥ १० ॥

स्वेति । विरिञ्चये ब्रह्मणे ॥ १० ॥ ७१ ॥

इति मत्स्यावतारवर्णनं द्वात्रिंशं दशकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

भक्तप्रियाख्यायाम्

अष्टमस्कन्धपरिच्छेदः ।

---

आदितः श्लोकसङ्ख्या ३३४.

## अथ नवमस्कन्धपरिच्छेदः ।

वर्णिते रामचरिते किमन्यैश्चरितैरिति ।
तत्प्रधानेशानुकथा लक्ष्यते नवमोदिता ॥

अथाम्बरीषचरितमुपक्रमते—

**वैवस्वताख्यमनुपुत्रनभागजात-**
**नाभागनामकनरेन्द्रसुतोऽम्बरीषः ।**
**सप्तार्णवावृतमहीदयितोऽपि रेमे**
**त्वत्सङ्गिषु त्वयि च मग्नमनाः सदैव ॥ १ ॥**

**वैवस्वतेति** । ब्रह्मणः पुत्रो मरीचिः, तत्पुत्रः काश्यपः, तत्पुत्रो विवस्वान्, तत्पुत्रः श्राद्धदेवोऽयं वैवस्वताख्यमनुः, तत्पुत्रो नभागः, तत्पुत्रो नाभागः, तस्य पुत्रोऽम्बरीषः, स सप्तार्णवावृतायाः सप्तद्वीपवत्या दयितः सार्वभौमोऽपि त्वयि ईश्वरे त्वत्सङ्गिषु त्वद्भक्तेषु[1] च रेमे ॥ १ ॥

**त्वत्प्रीतये सकलमेव वितन्वतोऽस्य**
**भक्त्यैव देव ! नचिरादभृथाः प्रसादम् ।**
**येनास्य याचनमृतेऽप्यभिरक्षणार्थं**
**चक्रं भवान् प्रविततार सहस्रधारम् ॥ २ ॥**

**त्वदिति** । सकलं लौकिकं वैदिकं च कर्म त्वत्प्रीतये वितन्वतः कुर्वतोऽस्य भक्त्यैव त्वं नचिरादल्पेन कालेन प्रसादमभृथाः, येन प्रसादेनास्याभिरक्षणार्थं शत्रुनिवारणार्थं भवान् चक्रं सुदर्शनं प्रविततार दत्तवान् ॥ २ ॥

**स द्वादशीव्रतमथो भवदर्चनार्थं**
**वर्षं दधौ मधुवने यमुनोपकण्ठे ।**
**पत्न्या समं सुमनसा महतीं वितन्वन्**
**पूजां द्विजेषु विसृजन् पशुषष्टिकोटिम् ॥ ३ ॥**

---

१. 'षु परेषु च' ग. पाठः.

**स** इति । अथो अनन्तरं सोऽम्बरीषो भवदर्चनार्थं वर्षं संवत्सरं द्वादशीव्रतं दधौ । यमुनोपकण्ठे यमुनाया उपकण्ठे तीरे सुमनसा भक्तियुक्तया महतीं सर्वोपहारमहाभिषेकयुक्तां पूजां वितन्वन् । विसृजन् ददत् ॥ ३ ॥

**तत्राथ पारणदिने भवदर्चनान्ते**
**दुर्वाससास्य मुनिना भवनं प्रपेदे ।**
**भोक्तुं वृतश्च स नृपेण परार्तिशीलो**
**मन्दं जगाम यमुनां नियमान् विधास्यन् ॥ ४ ॥**

**तत्रेति** । भवदर्चनस्यान्तेऽवसाने । पारणादिन इत्यवसानदिने विप्रान् भोजयित्वा स्वयं भोक्तुकामे सतीत्यर्थः । श्रीदुर्वाससा मुनिनास्य भवनं प्रपेदे प्रापद्यत । परार्तिशीलः परपीडानिरतः । अतः पारणकालातिक्रम एव नियमान् विधायागमिष्यामीति मन्दं जगाम ॥ ४ ॥

राज्ञस्तत्सङ्कटमाह —

**राज्ञाथ पारणमुहूर्तसमाप्तिखेदाद्**
**वारैव पारणमकारि भवत्परेण ।**
**प्राप्तो मुनिस्तदथ दिव्यदृशा विजानन्**
**क्षिप्यन् क्रुधोद्धृतजटो विततान कृत्याम् ॥ ५ ॥**

**राज्ञेति** । पारणमुहूर्तस्य समाप्तिर्भविष्यति प्रतिपालने, अप्रतिपालने च मुनिकोपः स्यादिति खेदाद् वारा जलेनैव पारणमकारि । तत् पारणं विजानन् क्षिप्यन् बह्वाक्षेपवादान् कुर्वन्, क्रुधोद्धृतजटः जटया कृत्यां विततान ॥ ५ ॥

**कृत्यां च तामसिधरां भुवनं दहन्ती-**
**मग्रेऽभिवीक्ष्य नृपतिर्न पदाच्चकम्पे ।**
**त्वद्भक्तबाधमभिवीक्ष्य सुदर्शनं ते**
**कृत्यानलं शलभयन्मुनिमन्वधावीत् ॥ ६ ॥**

**कृत्यामिति** । ते सुदर्शनं त्वद्भक्तस्य बाधं पीडाम् । कृत्यानलं शलभयद् अनलपतितशलभमिव कुर्वद् मुनिमन्वधावीद् धावतो मुनेः पृष्ठतो धावनमकरोत् ॥ ६ ॥

धावन्नशेषभुवनेषु भिया स पश्यन्
विश्वत्र चक्रमपि ते गतवान् विरिञ्चम् ।
कः कालचक्रमतिलङ्घयतीत्यपास्तः
शर्वं ययौ स च भवन्तमवन्दतैव ॥ ७ ॥

**धावन्निति** । स विश्वत्र सर्वत्रापि ते चक्रं पश्यन् विरिञ्चं शरणं गतवान् । कः कालचक्रमतिलङ्घयतीति तद्वचनादपास्तः प्रतिनिवृत्तः शर्वं शिवं प्राप्तवान् । यस्य चक्रमिदं, तमेव हरिं शरणं व्रजेत्यभिप्रायेण स भवन्तमवन्दतैव ॥ ७ ॥

भूयो भवन्निलयमेत्य मुनिं नमन्तं
प्रोचे भवानहमृषे! ननु भक्तदासः ।
ज्ञानं तपश्च विनयान्वितमेव मान्यं
याह्यम्बरीषपदमेव भजेति भूमन्! ॥ ८ ॥

**भूय** इति । भवन्निलयं वैकुण्ठम् । अहं भक्तानां दास इव, तदधीनत्वात् । नन्वहमपि ज्ञानतपोनिष्ठत्वात् त्वद्भक्त एव । सत्यम् । ज्ञानं तपश्च यदि विनयेनोपशमेन युक्तं भवति, तर्ह्येव मान्यं निःश्रेयसाय भवति । दुर्विनीतस्यैतद् द्वयमपि न सुखाय, यथा भवतः । तदम्बरीषस्य पदं पादावेव शरणं भज व्रज ॥ ८ ॥

तावत् समेत्य मुनिना स गृहीतपादो
राजापसृत्य भवदस्त्रमसाव(नौषी?नावी)त् ।
चक्रे गते मुनिरदादखिलाशिषोऽस्मै
त्वद्भक्तिमागसि कृतेऽपि कृपां च शंसन् ॥ ९ ॥

**तावदिति** । सोऽम्बरीषः पादस्पर्शलज्जया अपसृत्य भवदस्त्रं सुदर्शनमनौषीत् तुष्टाव । चक्रे गते शान्ते सति आगसि कृत्योत्पादनापराधे कृतेऽपि स्वविषयामम्बरीषस्य कृपां शंसन् स्तुवन् अस्मा आशिषो वरान् ॥ ९ ॥

राजा प्रतीक्ष्य मुनिमेकसमामनाश्वान्
सम्भोज्य साधु तमृषिं विसृजन् प्रसन्नम् ।

भुक्त्वा स्वयं त्वयि ततोऽपि दृढं रतोऽभूत्
सायुज्यमाप च स मां पवनेश! पायाः ॥ १० ॥

राजेति। राजा एकसमामेकसंवत्सरमनाश्वान् अनश्नन्नब्भक्षो भूत्वा मुनिं प्रतीक्ष्य प्रतिपाल्य साधु सम्भोज्य तच्छेषं स्वयं भुक्त्वा विसृजन्ननुज्ञाय ततोऽपि पूर्वस्मादपि त्वयि रतो भक्तोऽभूत्। अन्ते सायुज्यं मोक्षं चाप ॥ १० ॥

इत्यम्बरीषचरितवर्णनं त्रयस्त्रिंशं दशकम्।

---

अथ श्रीरामचरितं प्रस्तौति —

गीर्वाणैरर्थ्यमानो दशमुखनिधनं कोसलेष्वृश्यशृङ्गे
पुत्रीयामिष्टिमिष्ट्वा ददुषि दशरथक्ष्माभृते पायसाग्र्यम्।
तद्भुक्त्या तत्पुरन्ध्रीष्वपि तिसृषु समं जातगर्भासु जातो
रामस्त्वं लक्ष्मणेन स्वयमथ भरतेनापि[1] शत्रुघ्ननाम्ना ॥ १ ॥

त्वं श्रीहरिरेव रामो जात इत्युक्तम्। तदुपपादयति —

कोदण्डी कौशिकस्य क्रतुवरमवितुं लक्ष्मणेनानुयातो
यातोऽभूस्तातवाचा मुनिकथितमनुद्वन्द्वशान्ताध्वखेदः।
नृणां त्राणाय बाणैर्मुनिवचनबलात् ताटकां पाटयित्वा
लब्ध्वास्मादस्त्रजालं मुनिवनमगमो देव! सिद्धाश्रमाख्यम् ॥ २ ॥

कोदण्डीति। बाल्य एव दुष्टनिग्रहशिष्टपरिपालनसज्जनबहुमानादिः केवलमनुष्यसम्बन्धी न भवतीति भावः ॥ २ ॥

अपिच, मुनिपत्न्याः शापमोक्षो महेश्वरचापखण्डनादि चास्य विष्ण्वंशत्वं प्रकटयतीत्याह —

मारीचं द्रावयित्वा मखशिरसि शरैरन्यरक्षांसि निघ्नन्
कल्यां कुर्वन्नहल्यां पथि पदरजसा प्राप्य वैदेहगेहम्।
भिन्दानश्चान्द्रचूडं धनुरवनिसुतामिन्दिरामेव[2] लब्ध्वा
राज्यं प्रातिष्ठथास्त्वं त्रिभिरपि च समं भ्रातृवीरैः सदारैः ॥ ३ ॥

---

१. 'थ' क. पाठः. २. 'म' क. ख. पाठः.

भार्गवरामजयः तेन स्वतेजसः श्रीरामे समर्पणमपि रामावतारस्येतरावताराद् विशिष्टत्वमवगमयतीत्याह —

आरुन्धाने रुषान्धे[1] भृगुकुलतिलके संक्रमय्य स्वतेजो
याते यातोऽस्ययोध्यां सुखमिह निवसन् कान्तया कान्तमूर्ते ! ।
शत्रुघ्नेनैकदाथो गतवति भरते मातुलस्याधिवासं
तातारब्धोऽभिषेकस्तव किल विहतः केकयाधीशपुत्र्या ॥ ४ ॥

एवमवतारमुपपाद्यास्य लोकसंग्रहणार्थमङ्गीकृतं चरितं स्तौति —

तातोक्त्या यातुकामो वनमनुजवधूसंयुतश्चापधारः
पौरानारुध्य मार्गे गुहनिलयगतस्त्वं जटाचीरधारी ।
नावा सन्तीर्य गङ्गामधिपदवि पुनस्तं भरद्वाजमारा-
न्नत्वा तद्वाक्यहेतोरतिसुखमवसश्चित्रकूटे गिरीन्द्रे ॥ ५ ॥

तातोक्त्येति । तातोक्त्यैव राज्यश्रियमपहाय जटाचीरधारी त्वं चित्रकूटे सुखमवसः । एवं गुरुवचनपरैर्भवितव्यमिति लोकान् ग्राहयितुमेतदिति भावः ॥ ५ ॥

श्रुत्वा पुत्रार्तिखिन्नं खलु भरतमुखात् स्वर्गयातं स्वतातं
तप्तो दत्त्वाम्बु तस्मै निदधिथ भरते पादुकां मेदिनीं च ।
अत्रिं नत्वाथ गत्वा वनमतिविपुलं दण्डकां चण्डकायं
हत्वा दैत्यं विराधं सुगतिमकलयश्चारु भोः ! शारभङ्गीम् ॥ ६ ॥

श्रुत्वेति । शारभङ्गीं शरभङ्गसम्बन्धिनीं सुगतिं मोक्षम् ॥ ६ ॥

नत्वागस्त्यं समस्ताशरनिकरसपत्राकृतिं तापसेभ्यः
प्रत्यश्रौषीः प्रियैषी तदनु च मुनिना वैष्णवे दिव्यचापे ।
ब्रह्मास्त्रे चापि दत्ते पथि पितृसुहृदं वीक्ष्य भूयो जटायुं
मोदाद् गोदातटान्ते परिरमसि पुरा पञ्चवट्यां वधूट्या ॥ ७ ॥

नत्वेति । समस्ताशरनिकरसपत्राकृतिं सर्वराक्षसवधं प्रत्यश्रौषीः प्रतिज्ञातवान् । गोदा गोदावरी । परिरमसि पुरा स्वैरं न्यवसः ॥ ७ ॥

---

1. 'न्धे किल भृगुति' घ. पाठः.

प्राप्ताया: शूर्पणख्या मदनचलधृतेरर्थनैर्निस्सहात्मा
तां सौमित्रौ विसृज्य प्रबलतमरुषा तेन निर्लूननासाम् ।
दृष्ट्वैनां रुष्टचित्तां खरमभिपतितं दूषणं च त्रिमूर्धं
व्याहिंसीराशरानप्ययुतसमधिकांस्तत्क्षणादक्षतोष्मा ॥ ८ ॥

सोदर्याप्रोक्तवार्ताविवशदशमुखादिष्टमारीचमाया-
सारङ्गं सारसाक्ष्या स्पृहितमनुगतः प्रावधी*र्बाणघातम् ।
तन्मायाक्रन्दनिर्यापितभवदनुजां रावणस्तामहार्षीत्
तेनार्तोऽपि त्वमन्तः किमपि मुदमधास्तद्वधोपायलाभात् ॥ ९ ॥

सोदर्येति । तेन सीताविरहेण बहिरार्त इति सिध्यति, अन्तः किमपि मुदमधा इत्युक्तेः । अनेन च स्वविचनं प्रमाणीकुर्वतामेवं दुःखमिति ग्राहयितुमेतदित्यपि सूचितम् ॥ ९ ॥

भूयस्तन्वीं विचिन्वन्नहृत दशमुखस्त्वद्वधूं मद्वधेने-
त्युक्त्वा याते जटायौ दिवमथ सुहृदः प्रातनोः प्रेतकार्यम् ।
गृह्णानं तं कबन्धं जघनिथ शबरीं प्रेक्ष्य पम्पातटे त्वं
सम्प्राप्तो वातसूनुं भृशमुदितमनाः पाहि वातालयेश ! ॥ १० ॥

इति श्रीरामचरिते पम्पासरसि हनूमत्समागमवर्णनं

चतुस्त्रिंशं दशकम् ।

---

नीतः सुग्रीवमैत्रीं तदनु हनुमता दुन्दुभेः कायमुच्चैः
क्षिप्त्वाङ्गुष्ठेन भूयो लुलविथ युगपत् पत्रिणा सप्त सालान् ।
हत्वा सुग्रीवघातोद्यतमतुलबलं वालिनं व्याजवृत्त्या
वर्षावेलामनैषीर्विरहतरलितस्त्वं मतङ्गाश्रमान्ते ॥ १ ॥
सुग्रीवेणानुजोक्त्या सभयमभियता व्यूहितां वाहिनीं ता-
मृक्षाणां वीक्ष्य दिक्षु द्रुतमथ दयितामार्गणायावनम्राम् ।

१. 'तां' क. ग. पाठः.

* 'करणे हनः' (३-४-३७) इति णमुल् ।

**सन्देशं चाङ्गुलीयं पवनसुतकरे प्रादिशो मोदशाली**
**मार्गे मार्गे ममार्गे कपिभिरपि तदा त्वत्प्रिया सप्रयासैः ॥ २ ॥**

सुग्रीवेणेति । अनुजस्य लक्ष्मणस्योक्त्या सुग्रीवेण सहाभियताभिगच्छता । ऋक्षाणां वाहिनीम् । ममार्गे अन्विष्टा ॥ २ ॥

**त्वद्वार्ताकर्णनोद्यद्गरुदुरुजवसम्पातिसम्पातिवाक्य-**
**प्रोत्तीर्णार्णोधिरन्तर्नगरि जनकजां वीक्ष्य दत्त्वाङ्गुलीयम् ।**
**प्रक्षुद्योद्यानमक्षक्षपणचणरणः सोढबन्धो दशास्यं**
**दृष्ट्वा प्लुष्ट्वा च लङ्कां झटिति स हनुमान् मौलिरत्नं ददौ ते ॥ ३ ॥**

त्वदिति । रामायणाकर्णनेन सञ्जातपक्षस्य उरुजवसम्पातिन उपर्युड्डीय सीतां दृष्टवतः सम्पातेर्वाक्येन । प्रक्षुद्य चूर्णीकृत्य । अक्षक्षपणेनाक्षकुमारवधेन प्रसिद्धो रणो यस्य । सोढः शापस्मरणान्मर्षितो बन्धो येन ॥ ३ ॥

**त्वं सुग्रीवाङ्गदादिप्रबलकपिचमूचक्रविक्रान्तभूमी-**
**चक्रोऽभिक्रम्य पारेजलधि निशिचरेन्द्रानुजाश्रीयमाणः ।**
**तत्प्रोक्तां शत्रुवार्तां रहसि निशमयन् प्रार्थनापार्थ्यरोष-**
**प्रास्ताग्नेयास्त्रतेजस्त्रसदुदधिगिरा लब्धवान् मध्यमार्गम् ॥ ४ ॥**

त्वमिति । पारेजलधि जलधेः पारे । प्रार्थनाया आपार्थ्यं वैफल्यम् । प्रास्तस्य प्रक्षिप्तस्य ॥ ४ ॥

**कीशैराशान्तरोपाहृतगिरिनिकरैः सेतुमाधाप्य यातो**
**यातून्यामर्द्य दंष्ट्रानखशिखरिशिलासालशस्त्रैः स्वसैन्यैः ।**
**व्याकुर्वन् सानुजस्त्वं समरभुवि परं विक्रमं शक्रजेत्रा**
**वेगान्नागास्त्रबद्धः पतगपतिगरुन्मारुतैर्मोचितोऽभूः ॥ ५ ॥**

कीशैरिति । व्याकुर्वन् प्रकाशयन् ॥ ५ ॥

**सौमित्रिस्त्वत्र शक्तिप्रहृतिगलदसुर्वातजानीतशैल-**
**घ्राणात् प्राणानुपेतो व्यकृणुत कुसृतिश्लाघिनं मेघनादम् ।**

---

१. 'तामभिगच्छताम्' क. ग. पाठः. २. 'णानुक' ख. पाठः.

मायाक्षोभेषु वैभीषणवचनहृतस्तम्भनः कुम्भकर्णं
सम्प्राप्तं कम्पितोर्वीतलमखिलचमूभक्षिणं व्यक्षिणोस्त्वम् ॥ ६ ॥

गृह्णन् जम्भारिसम्प्रेषितरथकवचौ रावणेनाभियुध्यन्*
ब्रह्मास्त्रेणास्य भिन्दन् गलततिमबलामग्निशुद्धां प्रगृह्णन् ।
देव ! श्रेणीवरोज्जीवितसमरमृतैरक्षतैर्ऋक्षसङ्घै-
र्लङ्काभर्त्रा च साकं निजनगरमगाः सप्रियः पुष्पकेण ॥ ७ ॥

गृह्णन्निति । श्रेणीवरैर्हनुमदादिभिरुज्जीविताः समरमृता येषु ऋक्षसङ्घेषु । देवश्रेणीनां वरैरुज्जीविता इति वा ॥ ७ ॥

प्रीतो दिव्याभिषेकैरयुतसमधिकान् वत्सरान् पर्यरंसी-
र्मैथिल्यां पापवाचा शिव शिव किल तां गर्भिणीमभ्यहासीः ।
शत्रुघ्नेनार्दयित्वा लवणनिशिचरं प्रार्दयः शूद्रपाशं
तावद् वाल्मीकिगेहे कृतवसतिरुपासूत सीता सुतौ ते ॥ ८ ॥

प्रीत इति । अर्दयित्वा घातयित्वा स्वयमेव शूद्रपाशं कुत्सितं शूद्रमुनिं प्रार्दयः ॥ ८ ॥

वाल्मीकेस्त्वत्सुतोद्गापितमधुरकृतेराज्ञया यज्ञवाटे
सीतां त्वय्याप्तुकामे क्षितिमविशदसौ त्वं च कालार्थितोऽभूः ।
हेतोः सौमित्रिघाती स्वयमथ सरयूमग्ननिश्शेषभृत्यैः
साकं नाकं प्रयातो निजपदमगमो देव! वैकुण्ठमाद्यम् ॥ ९ ॥

वाल्मीकेरिति । त्वत्सुताभ्यां कुशलवाभ्यामुद्गापिता मधुरा कृती रामायणं काव्यं येन स तथा । कालार्थितो यमधर्मराजेन स्वर्गारोहणाय याचितोऽभूः । हेतोः सौमित्रिघातीति । अयमर्थः—रहस्संवादिनोरावयोर्द्रष्टारं त्य(क्ष्ये?क्ष्यामि) इति धर्मराजस्य पुरतः कृतप्रतिज्ञो रामस्तदन्तरा प्राप्तं सौमित्रिं प्रतिज्ञाभङ्गभयात् तत्याजेति । अथ स्वयं निश्शेषैर्देवांशैः पौरैश्च साकं नाकं स्वर्गं ततश्च निजपदं वैकुण्ठम् । आद्यं ब्रह्माण्डोत्पत्तेः प्रागपि विद्यमानम् ॥ ९ ॥

---

* युध्यन्निलनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् ।

नन्वीश्वरस्यापि यदि शरीरबन्धस्तर्हि संसारित्वप्रसङ्ग इति चेद् नेत्याह—

**सोऽयं मर्त्यावतारस्तव खलु नियतं मर्त्यशिक्षार्थमेवं**
**विश्लेषार्तिर्निरागस्त्यजनमपि भवेत् कामधर्मातिसक्त्या ।**
**नो चेत् स्वात्मानुभूतेः क्वनु तव मनसो विक्रिया चक्रपाणे !**
**स त्वं सत्त्वैकमूर्ते ! पवनपुरपते ! व्याधुनु व्याधितापान् ॥ १० ॥**

**स** इति । तव स्वाधीनमायस्य सः ब्रह्मादिभिरप्यविज्ञातविभवः अयं प्रदर्शितो मर्त्यावतारः खलु लीलाविग्रहपरिग्रह एव, नेतरवन्मायापरतन्त्रतया संसार इति भावः । तदपि मर्त्यशिक्षार्थम् । किन्तर्ह्यनेन शिक्षितं भवति, तत्राह—एवमिति । कामातिसक्त्या विश्लेषार्तिः प्रियाविरहदुःखं धर्मातिसक्त्या निरागस्त्यजनमपि भवति, यथा सीतायाः । अतः कामादावतिसक्तिर्मा भूदिति । तदुपपादयति—नो चेदिति । स्वात्मा स्वस्वरूपमेवानुभूतिः प्रकाशो यस्य तस्य स्वप्रकाशसंविद्रूपस्य परब्रह्मणस्तव मनसो विक्रिया रागद्वेषमोहादयः क्वनु, न भवत्येवेत्यर्थः । कालात्मकं चक्रं पाणौ स्वाधीनतया स्थितं यस्य तस्य तव संसारापादने कालो न प्रभुः । किन्तु सत्त्वैकमूर्ते! इति । भक्तानुग्रहाय शुद्धसत्त्वमयमूर्त्यङ्गीकार एवायमवतार इति भावः । व्याधुनु अपाकुरु ॥ १० ॥

इति श्रीरामचरितवर्णनं पञ्चत्रिंशं दशकम् ।

---

अथ दत्तात्रेयावतारमाह—

**अत्रेः पुत्रतया पुरा त्वमनसूयायां हि दत्ताभिधो**
**जातः शिष्यनिबन्धतन्द्रितमनाः स्वस्थश्चरन् कान्तया ।**
**दृष्टो भक्ततमेन हेहयमहीपालेन तस्मै वरा-**
**नष्टैश्वर्यमुखान् प्रदाय ददिथ स्वेनैव चान्ते वधम् ॥ १ ॥**

**अत्रेरिति** । दत्तो मयाहमिति भगवतोक्तत्वाद् दत्त इत्यभिधा यस्य स त्वं समाधिनैरन्तर्यविघातकतया शिष्यनिबन्धतन्द्रितमनास्तन्निराकरणाय कान्तया सह मधुमदविवशभावं प्रदर्श्य स्वस्थ आत्मारामश्चरन् हेहयमहीपालेन श्रीकार्तवीर्यार्जुनेन ॥ १ ॥

अथ श्रीपरशुरामावतारमाह—

**सत्यं कर्तुमथार्जुनस्य च वरं तच्छक्तिमात्रानतं**
**ब्रह्मद्वेषि तदाखिलं नृपकुलं हन्तुं च भूमेर्भरम् ।**
**सञ्जातो जमदग्नितो भृगुकुले त्वं रेणुकायां हरे!**
**रामो नाम तदात्मजेष्ववरजः पित्रोरधाः सम्मदम् ॥ २ ॥**

सत्यमिति। अर्जुनस्य वरमन्ते त्वयैव वधम्। तच्छक्तिरर्जुनस्य शक्तिस्तन्मात्रेणानतम् ईषच्छमितब्रह्मोपद्रवम् ॥ २ ॥

**लब्धाम्नायगणश्चतुर्दशवया गन्धर्वराजे मना-**
**गासक्तां किल मातरं प्रति पितुः क्रोधाकुलस्याज्ञया ।**
**ताताज्ञातिगसोदरैः सममिमां छित्वाथ शान्तात् पितु-**
**स्तेषां जीवनयोगमापिथ वरं माता च तेऽदाद् वरम् ॥ ३ ॥**

लब्धेति। चतुर्दशवया एव लब्ध अर्थज्ञानपर्यन्तमधीत आम्नायगणो येन गन्धर्वराजे चित्ररथे मनागीषदासक्तामत एव जलानयने सविलम्बां मातरं रेणुकां प्रति इमां जहीति तातस्य जमदग्नेराज्ञामतिगच्छन्त्यतिक्रामन्तीति तथा तैः सोदरैर्ज्येष्ठैः समं सहेमां रेणुकां मातरं छित्वा निगृह्य पुनः शान्तात् प्रसन्नात् पितुः सकाशात् तेषां मातुर्भ्रातॄणां च जीवनयोगं वरमापिथ प्राप्तवान् ॥ ३ ॥

**पित्रा मातृमुदे स्तवाहृतवियद्धेनोर्निजादाश्रमात्**
**प्रस्थायाथ भृगोर्गिरा हिमगिरावाराध्य गौरीपतिम् ।**
**लब्ध्वा तत्परशुं तदुक्तदनुजच्छेदी महास्त्रादिकं**
**प्राप्तो मित्रमथाकृतव्रणमुनिं प्राप्यागमः स्वाश्रमम् ॥ ४ ॥**

पित्रेति। अथानन्तरं पित्रा जमदग्निना मातू रेणुकाया मुदे प्रीत्यै स्तवेनाहृतानीता वियद्धेनुः सुरभिर्यस्मिन् तस्मादाश्रमाद् भृगोः पितामहस्य गिरा प्रस्थाय तस्य गौरीपतेः परशुं लब्ध्वा तेन गौरीपतिनोक्तम्। तस्मादेव महास्त्रादिकं प्राप्तः सिंहमुखाद् रक्षितमकृतव्रणमुनिं मित्रं प्राप्य स्वाश्रममगमः ॥ ४ ॥

---

१. 'रान्' घ. पाठः.

आखेटोपगतोऽर्जुनः सुरगवीसम्प्राप्तसम्पद्गणै-
स्त्वत्पित्रा परिपूजितः पुरगतो दुर्मन्त्रिवाचा पुनः ।
गां क्रेतुं सचिवं न्ययुङ्क्त कुधिया तेनापि रुन्धन्मुनि-
प्राणक्षेपसरोषगोहतचमूचक्रेण वत्सो हृतः ॥ ५ ॥

आखेटेति । आखेटोपगतो मृगयाप्रसङ्गेनाश्रमं गतः । सुरगवीसम्प्राप्तैः सुरभिसकाशाल्लब्धैः सम्पद्गणैर्दिव्यैर्भोग्यैः । पुरं माहिष्मतीं गतः । पुनर्दुर्मन्त्रिवाचा गां तां सुरभिं क्रेतुं स्वीकर्तुम् । कुधिया (तेन सचिवेन ? ।) गवाहरणं रुन्धतो मुनेर्जमदग्नेः प्राणक्षेपो वधस्तेन सरोषया गवा हतं चमूचक्रं यस्य तेन सचिवेन सुरभेर्वत्सो हृतो माहिष्मतीं नीतः ॥ ५ ॥

शुक्रोज्जीविततातवाक्यचलितक्रोधोऽथ सख्या समं
बिभ्रद् ध्यातमहोदरोपनिहितं चापं कुठारं शरान् ।
आरूढः सहवाहयन्तृकरथं माहिष्मतीमाविशन्
वाग्भिर्वत्समदाशुषि क्षितिपतौ सम्प्रास्तुथाः सङ्गरम् ॥ ६ ॥

शुक्रेति । सख्या अकृतव्रणेन ध्यातेन महोदरेण गिरिशपार्षदेनोपनिहितमानीतं चापादिचतुष्टयं बिभ्रदारूढश्च सन् क्षितिपतावर्जुने । सम्प्रास्तुथा आरब्धवान् ॥ ६ ॥

अथ सैन्यनाशे सत्यर्जुनः स्वयमेव श्रीपरशुराममापतदित्याह—

पुत्राणामयुतेन सप्तदशभिश्चाक्षौहिणीभिर्महा-
सेनानीभिरनेकमित्रनिवहैर्व्याजृम्भितायोधनः ।
सद्यस्त्वत्ककुठारबाणविदलन्निश्शेषसैन्योत्करो
भीतिप्रद्रुतनष्टशिष्टतनयस्त्वामापतद्धैहयः ॥ ७ ॥

लीलावारितनर्मदाजलवलल्लङ्केशगर्वापह-
श्रीमद्बाहुसहस्रमुक्तबहुशस्त्रास्त्रं निरुन्धन्नमुम् ।

**चक्रे त्वय्यथ वैष्णवेऽपि विफले बुद्ध्वा हरिं त्वां मुदा**
**ध्यायन्तं छितसर्वदोषमवधीः सोऽगात् परं ते पदम् ॥ ८ ॥**

लीलेति। लीलया बाहुसहस्रेण वारिते नर्मदाजले बलतः प्लवमानस्य लङ्केशस्य गर्वमपहन्तीति तथा, येन कारागृहं प्रापितो रावणस्तेन श्रीमद्बाहुसहस्रेण मुक्तानि बहूनि शस्त्राणि अस्त्राणि च येन तममुं कार्तवीर्यं निरुन्धन् निवारयन् अथ त्वयि तत्प्रयुक्ते वैष्णवे चक्रेऽपि विफले जाते त्वां हरिं बुद्ध्वा श्रीहरिं ध्यायन्तमत एव छितसर्वदोषं नष्टकामक्रोधादिदोषं वृक्णबाहुसहस्रं कृत्वावधीर्निहतवान्॥ ८ ॥

**भूयोऽमर्षितहैहयात्मजगणैस्ताते हते रेणुका-**
**माघ्नानां हृदयं निरीक्ष्य बहुशो घोरां प्रतिज्ञां वहन्।**
**ध्यानानीतरथायुधस्त्वमकृथा विप्रद्रुहः क्षत्रियान्**
**दिक्चक्रेषु कुठारयन् विशिखयन् निःक्षत्रियां मेदिनीम् ॥ ९ ॥**

भूय इति। अमर्षितैर्निजपितृवधमसहमानैर्नष्टशिष्टैर्हैहयात्मजगणैस्त्वद्विहीनमाश्रमं प्राप्तैस्तव ताते जमदग्नौ हते हृदयमाघ्नानां सोरस्ताडनं विलपन्तीम्। पूर्ववद् ध्यानानीतरथायुधो दिक्चक्रेषु ये विप्रद्रुहः क्षत्रियास्तान् कुठारयन्* कुठारेण निघ्नन् विशिखयन् विशिखैर्निघ्नन् ॥ ९ ॥

**तातोज्जीवनकृन्नृपालककुलं त्रिःसप्तकृत्वो जयन्**
**सन्तर्प्याथ समन्तपञ्चकमहारक्तह्रदौघे पितॄन्।**
**यज्ञे क्ष्मामपि काश्यपादिषु दिशन् साल्वेन युध्यन् पुनः**
**कृष्णोऽमुं निहनिष्यतीति शमितो युद्धात् कुमारैर्भवान् ॥ १० ॥**

तातेति। पितुः शिरः कायेन सन्धाय मखैः पितरं जीवयन् काश्यपादिष्वृत्विक्षु दिशन् ददत् पुनः साल्वेन युध्यन् कुमारैः सनकादिभिस्तद्वाक्येन श्रीकृष्णोऽमुं निहनिष्यतीति ज्ञात्वा भवान् युद्धाच्छमितोऽभूत् ॥ १० ॥

---

* 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' इति णिच्। एवं विशिखयन्निति।

अथ महेन्द्रभूभृति तपस्यन् मुनिभिरभ्यर्थितः केरलभूमिं समुद्रमग्नामुद्धृतवानित्याह —

**न्यस्यास्त्राणि महेन्द्रभूभृति तपस्तन्वन् पुनर्मज्जितां**
**गोकर्णावधि सागरेण धरणीं दृष्ट्वार्थितस्तापसैः ।**
**ध्यातेष्वासधृतानलास्त्रचकितं सिन्धुं स्रुवक्षेपणा-**
**दुत्सार्योद्धृतकेरलो भृगुपते! वातेश! संरक्ष माम् ॥ ११ ॥ ४१ ॥**

इति दत्तात्रेयपरशुरामयोरवतारवर्णनं परशुरामचरितवर्णनं च षट्त्रिंशं दशकं सैकम् ।

श्लोकार्थचिन्तासन्देहप्रश्नाख्यानोपपादनैः ।
हरिचिन्ताविनाभूतैः क्षणं सफलयामहे ॥

इति नारायणीयस्तोत्रव्याख्यायां

**भक्तप्रियाख्यायां**

**नवमस्कन्धपरिच्छेदः ।**

---

आदितः श्लोकसङ्ख्या ३७५.

## अथ दशमस्कन्धपरिच्छेदः ।

कृष्णलीला निरोधाख्या भूभारहरणात्मिका ।
स्तूयते नातिसंक्षिप्ता श्लोकैः श्रोत्रमनोहरैः ॥

**सान्द्रानन्दतनो! हरे! ननु पुरा दैवासुरे सङ्गरे**
**त्वत्कृत्ता अपि कर्मशेषवशतो ये ते न याता गतिम् ।**
**तेषां भूतलजन्मनां दितिभुवां भारेण दूरार्दिता**
**भूमिः प्राप विरिञ्चमाश्रितपदं देवैः पुरैवागतैः ॥ १ ॥**

**सान्द्रानन्दे**ति । आदौ मङ्गलार्थमुपात्तमन्तेऽपि 'परमानन्दसन्दोहलक्ष्मीम्' इति प्रयोक्ष्यन् मध्येऽपि मङ्गलार्थं परब्रह्मवाचकमानन्दपदं प्रयुङ्क्ते—सान्द्रानन्देति। हे परमानन्दस्वरूप! दैवासुरे देवासुरसम्बन्धिनि । त्वत्कृत्ता अपीति । त्वया निगृहीतानां सद्य एव मुक्तिः द्वित्रैर्जन्मभिर्वा स्यादेव। तत्र ये ते प्रसिद्धाः कालनेम्यादयो दैत्याः, ते कर्मशेषवशतो मनुष्यत्वापादकपुण्यपापशेषपरतन्त्रतया भगवता निगृहीता अपि गतिं मोक्षं न याताः न प्राप्ताः । अत एव कंसादिरूपेण भूतले जन्म येषां तेषां भारेण भरेण दूरार्दिता अतिशयेन पीडिता पुरा भुवः प्राप्तेः पूर्वमेवागतैः प्राप्तैर्देवैः सह भूमिर्विरिञ्चं प्राप । आश्रितपदं सत्यलोकस्थम्, अथवोपासितभगवत्पादपद्मं, यद्वा देवैराश्रितं पादपद्मं यस्य स तथेति ॥ १ ॥

**हा हा दुर्जनभूरिभारमथितां पाथोनिधौ पातुका-**
**मेतां पालय हन्त मे विवशतां संपृच्छ देवानिमान् ।**
**इत्यादिप्रचुरप्रलापविवशामालोक्य धाता महीं**
**देवानां वदनानि वीक्ष्य परितो दध्यौ भवन्तं हरे! ॥ २ ॥**

**हा हे**ति । हा हा कष्टं दुर्जना एव भूरिभारस्तेन मथितां परिक्लिष्टाम् । पाथोनिधावावरणोदके पातुकां मग्नप्रायाम् । वदनानि सत्यमेवास्या वच इति वचनगर्भाणि मुखानि परितो विलोक्य ॥ २ ॥

**ऊचे चाम्बुजभूरमूनयि सुराः[1] सत्यं धरित्र्या वचो**
**नन्वस्या भवतां च रक्षणविधौ दक्षो हि लक्ष्मीपतिः ।**

---

१. 'पि' क. पाठः.

**सर्वे शर्वपुरस्सरा वयमितो गत्वा पयोवारिधिं**
**नत्वा तं स्तुमहे जवादिति ययुः साकं तवाकेतनम् ॥ ३ ॥**

**ऊच** इति । धरित्र्या वचः सत्यं, मया दिव्येन चक्षुषा दृष्टम् । लक्ष्मीपतिरिति । भुवो रक्षणाभावेऽसौ केवलं लक्ष्मीपतिरेव स्यादिति भावः । तवाकेतनं क्षीराब्धिम् ॥ ३ ॥

**ते मुग्धानिलशालिदुग्धजलधेस्तीरं गताः सङ्गता**
**यावत् त्वत्पदचिन्तनैकमनसस्तावत् स पाथोजभूः ।**
**त्वद्वाचं हृदये निशम्य सकलानानन्दयन्नूचिवा-**
**नाख्यातः परमात्मना स्वयमहं वाक्यं तदाकर्ण्यताम् ॥ ४ ॥**

**त** इति । ते यावत् तीरं गताः, तावत् पाथोजभूस्तव शेषशायिनो वाचं हृदये हृदयाकाशे प्रकाशितां निशम्यावगम्य परमात्मना विष्णुना स्वयं स्वेनैवाहमाख्यातः, तत् तस्य वाक्यमाकर्ण्यतामित्यूचिवान् ॥ ४ ॥

**जाने दीनदशामहं दिविषदां भूमेश्च भीमैर्नृपै-**
**स्तत्क्षेपाय भवामि यादवकुले सोऽहं समग्रात्मना ।**
**देवा वृष्णिकुले भवन्तु कलया देवाङ्गनाश्चावनौ**
**मत्सेवार्थमिति त्वदीयवचनं पाथोजभूरूचिवान् ॥ ५ ॥**

**जान** इति । भीमैर्नृपैर्जरासन्धादिभिर्हेतुभूतैः । दीनदशां पराधीनवृत्तिताम् । तेषां क्षेपाय निग्रहाय सः सच्चिदानन्दस्वरूपोऽहं समग्रात्मना, नांशेन । देवाः कलया अंशेन वृष्णिकुले गोपालाः देवाङ्गना गोप्यश्च भवन्तु ॥ ५ ॥

**श्रुत्वा कर्णरसायनं तव वचः सर्वेषु निर्वापित-**
**स्वान्तेष्वीश ! गतेषु तावककृपापीयूषतृप्तात्मसु ।**
**विख्याते मधुरापुरे किल भवत्सान्निध्यपुण्योत्तरे**
**धन्यां देवकनन्दनामुदवहद् राजा स शूरात्मजः ॥ ६ ॥**

**श्रुत्वेति** । निर्वापितानि सुखितानि स्वान्तानि येषाम् । भवत्सान्निध्येन यत् पुण्यमभ्युदयानिःश्रेयसकरत्वं तेनोत्तर उत्कृष्टे । उदवहद् उपयेमे । शूरात्मजो वसुदेवः ॥ ६ ॥

उद्वाहावसितौ तदीयसहजः कंसोऽथ सम्मानय-
न्नेतौ सूततया गतः पथि रथे व्योमोत्थया त्वद्गिरा।
अस्यास्त्वामतिदुष्टमष्टमसुतो हन्तेति हन्तेरितः
सन्त्रासात् स तु हन्तुमन्तिकगतां तन्वीं कृपाणीमधात् ॥ ७ ॥

उद्वाहेति । एतौ देवकीवसुदेवौ सूततया सम्मानयन् । त्वद्गिरेति 'दैवमप्यनृतं वक्ति' (श्रीभा. स्क. १०.अ. ४. श्लो. १७) इति पुनः कंसवचनात् । हन्ता हनिष्यति। हन्त अहो कृतार्था देवा भूश्चेतीरितः। तन्वीं देवकीम्। अधाद् आददे ॥

गृह्णानश्चिकुरेषु तां खलमतिः शौरेश्चिरं सान्त्वनै-
र्नो मुञ्चन् पुनरात्मजार्पणगिरा प्रीतोऽथ यातो गृहान्।
आद्यं त्वत्सहजं तथार्पितमपि स्नेहेन नाहन्नसौ
दुष्टानामपि देव! पुष्टकरुणा दृष्टा हि धीरेकदा ॥ ८ ॥

गृह्णान इति । चिरं दीर्घकालं प्रयुक्तैः सान्त्ववचनैः । आत्मजार्पणगिरा अस्याः पुत्रांस्तुभ्यं दास्यामीति प्रतिज्ञया ॥ ८ ॥

तावत् त्वन्मनसैव नारदमुनिः प्रोचे स भोजेश्वरं
यूयं नन्वसुराः सुराश्च यदवो जानासि किं न प्रभो!।
मायावी स हरिर्भवद्वधकृते भावी सुरप्रार्थना-
दित्याकर्ण्य यदूनदूधुनदसौ शौरेश्च सूनूनहन् ॥ ९ ॥

तावदिति । यावत् कंसो गृहं गतवान्, तावत् त्वन्मनसा त्वया प्रेरित एव, अन्यथा श्रीनारदस्य कंसं प्रति द्वैधीभावप्रकाशनायोगात् । यूयमसुराः कालनेम्यादयः। भवद्वधकृते नृपीभूतानां भवतां वधार्थं हरिरस्या अष्टमपुत्रो भावी । अदूधुनत् स्थानाच्च्यावयामास ॥ ९ ॥

प्राप्ते सप्तमगर्भतामहिपतौ त्वत्प्रेरणान्मायया
नीते माधव! रोहिणीं त्वमपि भोः! सच्चित्सुखैकात्मकः।

देवक्या जठरं विवेशिथ विभो! संस्तूयमानः सुरैः
स त्वं कृष्ण! विधूय रोगपटलीं भक्तिं परां देहि मे ॥ १० ॥

प्राप्त इति । देवक्याः सप्तमगर्भतां प्राप्तेऽहिपतावनन्ते मायया रोहिणीं नीते । सच्चिदिति सच्चिदानन्दैकरसः । हे कृष्ण! सः देवकीजठरस्थः ॥ १० ॥

इति कृष्णावतारप्रसङ्गवर्णनं सप्तत्रिंशं दशकम् ।

---

आनन्दरूप! भगवन्नयि! तेऽवतारे
प्राप्ते प्रदीप्तभवदङ्ग*निरीयमाणैः ।
कान्तिव्रजैरिव घनाघनमण्डलैर्द्या-
मावृण्वती विरुरुचे किल वर्षवेला ॥ १ ॥

आनन्देति । प्रदीप्तात् प्रकाशोज्ज्वलाद् भवदङ्गान्निरीयमाणैर्बहिर्निर्गच्छद्भिः ॥ १ ॥

आशासु शीतलतरासु पयोदतोयै-
राशासिताप्तिविवशेषु च सज्जनेषु ।
नैशाकरोदयविधौ निशि मध्यमायां
क्लेशापहस्त्रिजगतां त्वमिहाविरासीः ॥ २ ॥

आशास्विति । आशासितस्याभीष्टार्थस्याप्त्या लाभेन विवशेषु प्रीतिवेगेनाविदितेतिकर्तव्यताकेषु । मध्यमायां निशि अर्धरात्रे ॥ २ ॥

बाल्यस्पृशापि वपुषा दधुषा विभूती-
रुद्यत्किरीटकटकाङ्गदहारभासा ।
शङ्खारिवारिजगदापरिभासितेन
मेघासितेन परिलेसिथ सूतिगेहे ॥ ३ ॥

बाल्येति । बाल्यं स्पृशति तेन सम्बध्यत इति बाल्यस्पृक् । विभूतीरीश्व-

---

* 'ईङ् गतौ' दिवादिः ।

रत्नद्योतकानि दधुषा धृतवता । तदेवाह — उद्यदिति । उद्यन्त्यः किरीटादीनां भासो यस्मिन्निति वपुर्विशेषणम् । परिलेसिथ शुशुभिषे ॥ ३ ॥

वक्षःस्थलीसुखनिलीनविलासिलक्ष्मी-
मन्दाक्षलक्षितकटाक्षविमोक्षभेदैः ।
तन्मन्दिरस्य खलकंसकृतामलक्ष्मी-
मुन्मार्जयन्निव विरेजिथ वासुदेव ! ॥ ४ ॥

वक्षःस्थलीति[1] । वक्षःस्थलीसुखनिलीनाया निजकमितुर्मूर्त्यन्तरपरिग्रहेण विलासिन्या नवीकृतप्रेमप्रकर्षद्योतकचेष्टाविशेषयुक्ताया लक्ष्म्या मन्दाक्षेण लक्षितैरुपलक्षितैर्लज्जामन्थैरारित्यर्थः ॥ ४ ॥

शौरिस्तु धीरमुनिमण्डलचेतसोऽपि
दूरस्थितं वपुरुदीक्ष्य निजेक्षणाभ्याम् ।
आनन्दबाष्पपुलकोद्गमगद्गदार्द्र-
स्तुष्टाव दृष्टिमकरन्दरसं भवन्तम् ॥ ५ ॥

शौरिरिति । धीरस्य साधनचतुष्टयसम्पन्नस्य मुनिमण्डलस्य चेतसः समाधेः सकाशादपि दूरे स्थितम् आनन्दबाष्पेण पुलकोद्गमेन गद्गदेन[2][3] चार्द्रो मिलितः सन् ॥

देव! प्रसीद परपूरुष! तापवल्ली-
निर्लूनिदात्र! समनेत्र! कलाविलासिन्! ।
खेदानपाकुरु कृपागुरुभिः कटाक्षै-
रित्यादि तेन मुदितेन चिरं नुतोऽभूः ॥ ६ ॥

देवेति । परपूरुष! परमात्मन्! तापवल्ल्या निर्लूनौ मूलच्छेदे दात्र! अतितीक्ष्णशस्त्रभूत! समनेत्र! सर्वनियन्तः! कलया स्वांशभूतया मायया जगत्सृष्ट्यादिक्रीडाशील!, अथवा तापवल्ल्या निर्लूनौ दात्रसमो नेत्रकलायाः कटाक्षस्य विलासोऽस्यास्तीति तथेति ॥ ६ ॥

---

१. 'ति । निज' क. ख. पाठः. २. 'दवाक्येन' ग. पाठः. ३. 'न वाक्येन चा' ख. पाठः.

मात्रा च नेत्रसलिलास्तृतगात्रवल्ल्या
स्तोत्रैरभिष्टुतगुणः करुणालयस्त्वम् ।
प्राचीनजन्मयुगलं प्रतिबोध्य ताभ्यां
मातुर्गिरा दधिथ मानुषबालवेषम् ॥ ७ ॥

**मात्रेति** । प्राचीनजन्मयुगलं प्राग् युवयोः पृश्निसुतपसोः पुत्रतया पृश्निगर्भाख्ययाहं जातः, पुनश्चादितिकाश्यपयोर्वामनाख्ययेति प्रतिबोध्य ॥ ७ ॥

त्वत्प्रेरितस्तदनु नन्दतनूजया ते
व्यत्यासमारचयितुं स हि शूरसूनुः ।
त्वां हस्तयोरधित चित्तविधार्यमार्यै-
रम्भोरुहस्थकलहंसकिशोररम्यम् ॥ ८ ॥

**त्वादिति** । कंसभ्रान्त्यर्थं मां यशोदाशयने न्यस्य तत्सुतां मन्मातुः शयने कुर्विति त्वया प्रेरितः सः आर्यैर्मुनिभिश्चित्तेन विधार्यं ध्येयम् ॥ ८ ॥

जाता तदा पशुपसद्मनि योगनिद्रा
निद्राविमुद्रितमथाकृत पौरलोकम्[1] ।
त्वत्प्रेरणात् किमिह चित्रमचेतनैर्यद्
द्वारैः स्वयं व्यघटि सङ्घटितैः सुगाढम् ॥ ९ ॥

**जातेति** । तदा त्वत्प्रस्थानारम्भे सति योगनिद्रा माया भगवती पशुपस्य नन्दगोपस्य सद्मनि यशोदायां जातावतीर्णा सा त्वत्प्रेरणात् पौरलोकं मथुरापुरवासिनं जनं निद्राविमुद्रितं निश्चेष्टमकृत । किमिव चित्रमिति । अघटमानघटनापटीयस्यास्त्वत्प्रेरणाद् द्वारविघटनकरणादि न चित्रमित्यर्थः ॥ ९ ॥

शेषेण भूरिफणवारितवारिणाथ
स्वैरं प्रदर्शितपथो मणिदीपितेन ।

---

१. 'सर्वलो' क. पाठः.

त्वां धारयन् स खलु धन्यतमः प्रतस्थे
सोऽयं त्वमीश! मम नाशय रोगवेगान् ॥ १० ॥

शेषेणेति । भूरिभिः फणैर्वारितं वारि वर्षबिन्दवो येन तेन शेषेणानन्तेन फणामणिदीपितेनात एव स्वैरं प्रदर्शितः पन्था मार्गो यस्य ॥ १० ॥

इति कृष्णावतारवर्णनं कृष्णस्य गोकुलनयनवर्णनं च

अष्टात्रिंशं दशकम् ।

---

भवन्तमयमुद्वहन् यदुकुलोद्वहो निस्सरन्
ददर्श गगनोच्चलज्जलभरां कलिन्दात्मजाम् ।
अहो सलिलसञ्चयः स पुनरैन्द्रजालोदितो
जलौघ इव तत्क्षणात् प्रपदमेयतामाययौ ॥ १ ॥

भवन्तमिति । निस्सरन् गच्छन् । गगनोच्चलज्जलभरां वीचीजालैर्गगनतल-विलङ्घिजलौघपूर्णाम् ॥ १ ॥

प्रसुप्तपशुपालिकां निभृतमारुदद्बालिका-
मपावृतकवाटिकां पशुपवाटिकामाविशन् ।
भवन्तमयमर्पयन् प्रसवतल्पके तत्पदाद्
वहन् कपटकन्यकां स्वपुरमागतो वेगतः ॥ २ ॥

प्रसुप्तेति । प्रसुप्ताः पशुपालिका यस्यां, निभृतं यशोदासूतिगेहज्ञापनार्थं मन्दं मन्दमारुदती बालिका यस्याम्, अपावृता विघटिताः कवाटिका यस्यां, तां पशुपवाटिकां नन्दगोपगृहमाविशन्नयं वसुदेवो यशोदायाः प्रसवतल्पके भवन्तम-र्पयन् तत्पदात् तस्मात् स्थानात् ॥ २ ॥

ततस्त्वदनुजारवक्षपितनिद्रवेगद्रव-
द्भटोत्करनिवेदितप्रसववार्तयैवार्तिमान् ।

विमुक्तचिकुरोत्करस्त्वरितमापतन् भोजरा-
ड्तुष्ट इव दृष्टवान् भगिनिकाकरे कन्यकाम् ॥ ३ ॥

**तत** इति । त्वदनुजाया यशोदाकन्याया रुदितरवेण क्षपितनिद्र*वेगैः प्रबुद्धैर्द्रवद्भिर्धावद्भिर्भटोत्करै रक्षिपुरुषैर्निवेदितया, देवक्या अष्टमः पुत्रो जात इति प्रसववार्तयैवार्तिमान् मरणभययुक्तः कथमियं कन्यका भवेदिति बहुविधचिन्ताकुलतयातुष्ट इव ॥ ३ ॥

ध्रुवं कपटशालिनो मधुहरस्य माया भवे-
दसाविति किशोरिकां भगिनिकाकरालिङ्गिताम् ।
द्विपो नलिनिकान्तरादिव मृणालिकामाक्षिप-
न्नयं त्वदनुजामजामुपलपट्टके पिष्टवान् ॥ ४ ॥

**ध्रुवमिति** । मधुहरस्य मधुसूदनस्य । अजां मायाम् ॥ ४ ॥

ततो भवदुपासको झटिति मृत्युपाशादिव
प्रमुच्य तरसैव सा समधिरूढरूपान्तरा ।
अधस्तलमजग्मुषी विकसदष्टबाहुस्फुर-
न्महायुधमहो गता किल विहायसा दिद्युते ॥ ५ ॥

**तत** इति । ततः प्रमुच्य कंसकराद् विगलिता विकसन्त्यष्टबाहुस्फुरन्महायुधानि यस्मिन्निति क्रियाविशेषणम् । विहायसा मार्गेण गता दिद्युते शुशुभे ॥ ५ ॥

नृशंसतर! कंस! ते किमु मया विनिष्पिष्टया
बभूव भवदन्तकः क्वचन चिन्त्यतां ते हितम् ।
इति त्वदनुजा विभो! खलमुदीर्य तं जग्मुषी
मरुद्गणपणायिता भुवि च मन्दिराण्येयुषी ॥ ६ ॥

**नृशंसेति** । नृशंसतर! अतिदुष्कर्मकारिन्! । तं खलं कंसमुदीर्योक्त्वा मरु-

* क्षपितनिद्रैर्वेगेन द्रवद्भिश्चेति तु युक्तम् ।

द्गणैः पणायिता स्तुता जग्मुषी गतवती भुवि मन्दिराण्येयुषी नृणामनुग्रहाय तत्तत्स्थानाभिमानितया स्थितवती ॥ ६ ॥

प्रगे पुनरगात्मजावचनमीरिता भूभुजा
प्रलम्बबकपूतनाप्रमुखदानवा मानिनः ।
भवन्निधनकाम्यया जगति बभ्रमुर्निर्भयाः
कुमारकविमारकाः किमिव दुष्करं निष्कृपैः ॥ ७ ॥

**प्रग** इति । पुनः परेद्युः प्रगेऽहर्मुखे भूभुजा कंसेन प्रलम्बाद्या अगात्मजाया देव्या वचनमीरिता उक्ताः ॥ ७ ॥

ततः पशुपमन्दिरे त्वयि मुकुन्द ! नन्दप्रिया-
प्रसूतिशयनेशये रुवति किञ्चिदञ्चत्पदे ।
विबुध्य वनिताजनैस्तनयसम्भवे घोषिते
मुदा किमु वदाम्यहो सकलमाकुलं गोकुलम् ॥ ८ ॥

**तत** इति । ततः पशुपमन्दिरे नन्दगेहे प्रसूतिशयने शेत इति प्रसूतिशयनेशयस्तस्मिन् किञ्चिदञ्चत्पदे चलितालपकमृदुलाङ्घ्रिपल्लवे त्वयि रुवति रुदति सति ॥ ८ ॥

अहो खलु यशोदया नवकलायचेतोहरं
भवन्तमलमन्तिके प्रथममापिबन्त्या दृशा ।
पुनः स्तनभरं निजं सपदि पाययन्त्या मुदा
मनोहरतनुस्पृशा जगति पुण्यवन्तो जिताः ॥ ९ ॥

**अहो** इति । यशोदया भवद्दर्शनस्पर्शनस्तनदानादिना पुण्यवन्तो मुनयोऽपि जिता अधःकृताः खलु अहो ॥ ९ ॥

भवत्कुशलकाम्यया स खलु नन्दगोपस्तदा
प्रमोदभरसंकुलो द्विजकुलाय किं नाददात् ।

तथैव पशुपालकाः किमु न मङ्गलं तेनिरे
जगत्त्रितयमङ्गल ! त्वमिह पाहि मामामयात् ॥ १० ॥

भवदिति । भवतः कुशलकाम्ययाभ्युदयेच्छया ॥ १० ॥

इति योगमायानयनादिवर्णनम् एकोनचत्वारिंशं दशकम् ।

---

तदनु नन्दममन्दशुभास्पदं नृपपुरीं करदानकृते गतम् ।
समवलोक्य जगाद भवत्पिता विदितकंससहायजनोद्यमः ॥ १ ॥

तदन्विति । अमन्दशुभास्पदं लोकोत्तरगुणाकरं नन्दं करदानकृते यदुराजाय वार्षिकषष्ठांशदानार्थं गतं मथुरापुरीस्थो भवत्पिता वसुदेवो विदितः कंससहायजनानां पूतनातृणावर्तादीनामुद्यमः सकलबालहननोत्साहो येन ॥ १ ॥

अयि सखे! तव बालकजन्म मां सुखयतेऽद्य निजात्मजजन्मवत् ।
इति भवत्पितृतां व्रजनायके समधिरोप्य शशंस तमादरात् ॥ २ ॥

अयीति । वसुदेवो नन्दं प्रति त्वद्गेहस्थो बालो मत्पुत्र इति नोवाच, किन्तु व्रजनायके नन्दे भवत्पितृतामारोप्य तमादराच्छशंस । स्वपुत्रवत् सावधानं रक्षितुमेतादिति ज्ञातव्यम् ॥ २ ॥

इह च सन्त्यनिमित्तशतानि ते कटकसीम्नि ततो लघु गम्यताम् ।
इति च तद्वचसा व्रजनायको भवदपायभिया द्रुतमाययौ ॥ ३ ॥

इहेति । अनिमित्तशतानि दुर्निमित्तानि । कटकसीम्नि व्रजे ॥ ३ ॥

नन्दस्य व्रजागमनात् पूर्वं ललितवेषायाः पूतनाया व्रजप्रवेशमाह—

अवसरे खलु तत्र च काचन व्रजपदे मधुराकृतिरङ्गना ।
तरलषट्पदलालितकुन्तला कपटपोतक ! ते निकटं गता ॥ ४ ॥

सपदि सा हृतबालकचेतना निशिचरान्वयजा किल पूतना ।
व्रजवधूष्विह केयमिति क्षणं विमृशतीषु भवन्तमुपाददे ॥ ५ ॥

सपदीति । हृतबालकचेतना बालघातिनीत्यर्थः ॥ ५ ॥

ललितभावविलासहृतात्मभिर्युवतिभिः प्रतिरोद्धुमपारिता ।
स्तनमसौ भवनान्तनिषेदुषी प्रददुषी भवते कपटात्मने ॥ ६ ॥

ललितेति । युवतिभिर्गोपीभिः प्रतिरोद्धुं लङ्घयितुमपारिताशक्या सती भवनान्ते निषेदुषी उपविष्टा प्रददुषी दत्तवती । कपट आत्मा मनो मूर्तिर्वा यस्य ॥ ६ ॥

समधिरुह्य तदङ्कमशङ्कितस्त्वमथ बालकलोपनरोषितः ।
महदिवाम्रफलं कुचमण्डलं प्रतिचुचूषिथ दुर्विषदूषितम् ॥ ७ ॥

समधिरुह्येति । बालकानां लोपनेन मारणेन रोषितः प्रतिचुचूषिथ आम्रलाद् वक्त्रे निवेश्यौष्ठाभ्यामवपीड्य बहुशो निष्ठीवनं कृतवान् ॥ ७ ॥

असुभिरेव समं धयति त्वयि स्तनमसौ स्तनितोपमनिस्वना ।
निरपतद् भयदायि निजं वपुः प्रतिगता प्रविसार्य भुजावुभौ ॥ ८ ॥

असुभिरिति । असुभिः प्राणैः समं सह धयति पिबति सत्यसौ पूतना स्तनितोपमो मेघध्वनिसदृशो निस्वन आक्रन्दितं यस्याः सा तथा ॥ ८ ॥

भयदघोषणभीषणविग्रहश्रवणदर्शनमोहितवल्लवे ।
व्रजपदे तदुरःस्थलखेलनं ननु भवन्तमगृह्णत गोपिकाः ॥ ९ ॥

भयदेति । भयदघोषणस्य भीषणविग्रहस्य च श्रवणेन दर्शनेन च मोहिता वल्लवा गोपा यत्र ॥ ९ ॥

**भुवनमङ्गल! नामभिरेव ते युवतिभिर्बहुधा कृतरक्षणः।**
**त्वमयि वातनिकेतननाथ! मामगदयन् कुरु तावकसेवकम्॥ १०॥**

**भुवनेति**। अगदयन् नीरोगं कुर्वन्॥ १०॥

इति वार्षिककरदानाय नन्दस्य मथुराप्रवेशवर्णनं पूतनामोक्षवर्णनं च

चत्वारिंशं दशकम्।

---

**व्रजेश्वरः शौरिवचो निशम्य समाव्रजन्नध्वनि भीतचेताः।**
**निष्पिष्टनिश्शेषतरुं निरीक्ष्य कञ्चित् पदार्थं शरणं गतस्त्वाम्॥ १॥**

**व्रजेति**। शौरिवच 'इह च सन्त्यनिमित्तशतानि' (दश. ४०. श्लो. ३) इति। समाव्रजन् स्वगृहमागच्छन् निष्पिष्टाः पतनजवेन पतिताश्चूर्णीकृताश्च निश्शेषतरवो गव्यूत्यन्तरस्थद्रुमा येन तं पूतनादेहं कञ्चित् पदार्थमतिमहत्त्वाद-दृष्टपूर्वतया च किमिदमिति ज्ञातुमशक्यम् एतादृशसङ्कटे[1] भ्रमन् बालकः क्वेति परवशस्त्वद्रक्षणाय त्वामेव शरणं गतः रक्षितृत्वेनाश्रितवान्॥ १॥

**निशम्य गोपीवचनादुदन्तं सर्वेऽपि गोपा भयविस्मयान्धाः।**
**त्वत्पातितं घोरपिशाचदेहं देहुर्विदूरेऽथ कुठारकृत्तम्॥ २॥**

**निशम्येति**। उदन्तं पूतनावृत्तान्तम्। घोररूपदर्शनाद् भयं, त्वया पातितामिति विस्मयः। अथ विदूरे कुठारैः खण्डशः कृत्वा बहुभिर्दूरं नीत्वा देहुर्भस्मीचक्रुः॥ २॥

**त्वत्पीतपूतस्तनतच्छरीरात् समुच्चलन्नुच्चतरो हि धूमः।**
**शङ्कामधादागरवः किमेष किं चान्दनो गौग्गुलवोऽथवेति॥ ३॥**

**त्वादिति**। त्वत्पीतत्वात् पूतं रजस्तमोविलये शुद्धसत्त्वमयः स्तनो यस्मि-

---

१. 'टेऽत्र मद्वाल' क. ख. पाठः.

स्तस्मात् तच्छरीरादिति, तत्स्तनाधिष्ठानतया भगवतस्तदङ्कारोहणाच्च शुद्धसत्त्वमयतामापन्नात् पूतनाशवशरीरादित्यर्थः । अत एव सत्त्वकार्यत्वाद् धूमस्यागरवादिशङ्का ॥ ३ ॥

**मदङ्गसङ्गस्य फलं न दूरे क्षणेन तावद् भवतामपि स्यात् ।**
**इत्युल्लपन् वल्लवतल्लजेभ्यस्त्वं पूतनामातनुथाः सुगन्धिम् ॥ ४ ॥**

**मदिति** । मम ब्रह्ममयस्याङ्कारोपणलालनादौ योऽङ्गसङ्गस्तस्य फलं मुक्तिर्न दूरे जन्मान्तरे, यथा मां हन्तुमिच्छन्त्या अस्याः पिशाच्याः । भवतां मद्योगक्षेमैकचित्तानां क्षणेन । वल्लवतल्लजेभ्यो भाग्यवत्तया प्रशस्तेभ्यो गोपालकेभ्यः इत्युल्लपन्[2] इति सम्यग् बोधनार्थमेव त्वं पूतनां सुगन्धिमातनुथाः ॥ ४ ॥

**चित्रं पिशाच्या न हतः कुमारश्चित्रं पुरैवाकथि शौरिणेदम् ।**
**इति प्रशंसन् किल गोपलोको भवन्मुखालोकरसे न्यमाङ्क्षीत् ॥ ५ ॥**

**चित्रमिति** । पुरैव 'इह च सन्त्यनिमित्तशतानी'त्यादिनेदं भयं शौरिणा वसुदेवेनाकथि कथितमिति शौरिं प्रशंसन् भवन्मुखालोके[1] रस आनन्दस्तास्मिन् न्यमाङ्क्षीद् निमग्नोऽभूत् ॥ ५ ॥

**दिने दिनेऽथ प्रतिवृद्धलक्ष्मीरक्षीणमङ्गल्यशतो व्रजोऽयम् ।**
**भवन्निवासादयि वासुदेव! प्रमोदसान्द्रः परितो विरेजे ॥ ६ ॥**

**दिने दिन इति** । व्रजो व्रजजनः परितः प्रमोदसान्द्र इति स्थिरचराणामप्यानन्दातिशय उक्तः ॥ ६ ॥

**गृहेषु ते कोमलरूपहासमिथःकथासङ्कुलिताः कमन्यः ।**
**वृत्तेषु कृत्येषु भवन्निरीक्षासमागताः प्रत्यहमत्यनन्दन् ॥ ७ ॥**

**गृहेष्विति** । कोमलयो रूपहासयोर्मिथःकथया सङ्कुलिताः सव्यापाराः । वृत्तेष्ववसितेषु ॥ ७ ॥

---

१. 'पलोके' क. ख. पाठः. २. 'न् स' ख. पाठः.

**अहो कुमारो मयि दत्तदृष्टिः स्मितं कृतं मां प्रति वत्सकेन ।**
**एह्येहि मामित्युपसार्य पाणिं त्वयीश! किं किं न कृतं वधूभिः ॥८॥**

**अहो** इति । हे ईश! विष्णो! त्वयि गोपबालरूपिणि वधूभिरङ्कारोपणाश्लेषचुम्बनलालनादि किं किं न कृतम्, अहो भाग्यवत्यस्ता इति भावः ॥ ८ ॥

**भवद्वपुःस्पर्शनकौतुकेन करात् करं गोपवधूजनेन ।**
**नीतस्त्वमाताम्रसरोजमालाव्यालम्बिलोलम्बतुलामलासीः*** ॥ ९ ॥

**भवदिति** । वधूजनपाणिपरम्पराया अरुणसरोजमालायमानतया तव च तद्व्यालम्बिप्रतिनवमधुलुब्धलोलम्बदेशीयतया तत्तुलामलासीः कलितवानसीत्यर्थः ॥

**निपाययन्ती स्तनमङ्कगं त्वां विलोकयन्ती वदनं हसन्ती ।**
**दशां यशोदा कतमां न भेजे स तादृशः पाहि हरे! गदान्माम् ॥ १० ॥**

**निपाययन्तीति** । यशोदा कतमां कीदृशीं दशां विस्मयौत्सुक्यापायशङ्कादैवप्रार्थनवैवश्यादिरूपामवस्थां न भेजे प्राप्तवती ॥ १० ॥

इति पूतनाशरीरदाहवर्णनं बालकलालनेन यशोदादीनां निरतिशयानन्दवर्णनं च

**एकचत्वारिंशं दशकम् ।**

---

**कदापि जन्मर्क्षदिने तव प्रभो! निमन्त्रितज्ञातिवधूमहीसुरा ।**
**महानसस्त्वां सविधे निधाय सा महानसादौ ववृते व्रजेश्वरी ॥ १ ॥**

**कदापीति** । निमन्त्रिता आमन्त्रिता ज्ञातयस्तद्वध्वो महीसुराश्च यया । महतोऽनसः शकटस्य । महानसादौ पाकगेहादौ ववृते प्रवृत्ताभूत् ॥ १ ॥

**ततो भवत्त्राणनियुक्तबालकप्रभीतिसङ्क्रन्दनसङ्कुलारवैः ।**
**विमिश्रमश्रावि भवत्समीपतः परिस्फुटद्दारुचटच्चटारवः ॥ २ ॥**

---

* अलासीरिति 'ला आदाने' इत्यतो लुङ् ।

तत इति । भवतः तव बालकस्य त्राणे रक्षणे यशोदया नियुक्तानां बालकानां शकटपतनचटचटाशब्दोत्थया प्रभीत्या संक्रन्दनस्याक्रन्दनस्य बहुभिः कृतत्वात् सङ्कुलारवैः प्रवृद्धैरारवैर्विमिश्रं यथा भवति तथा परिस्फुटतां विघटितसन्धिबन्धानां दारूणामनोवयवानामारवोऽश्रावि यशोदादिभिः श्रूयते स्म ॥ २ ॥

**ततस्तदाकर्णनसंभ्रमश्रमप्रकम्पिवक्षोजभरा व्रजाङ्गनाः ।**
**भवन्तमन्तर्ददृशुः समन्ततो विनिष्पतद्दारुणदारुमध्यगम् ॥ ३ ॥**

तत इति । ततस्तदाकर्णनेन प्राग्वत् किमिदमिति सम्भ्रमेण स्वस्वगेहान्नन्दगेहं प्रति धावनपरिश्रमेण च प्रकम्पिनौ वक्षोजभरौ यासां ताः अन्तर्भवनान्ते समन्ततः परितो विनिष्पततां दारुणानां गुरुतराणां दारूणामक्षकूबराद्यनोवयवानां मध्यगं ददृशुः ॥ ३ ॥

**शिशोरहो किं किमभूदिति द्रुतं प्रधाव्य नन्दः पशुपाश्च भूसुराः ।**
**भवन्तमालोक्य यशोदया धृतं समाश्वसन्नश्रुजलार्द्रलोचनाः ॥ ४ ॥**

शिशोरिति । नन्दादयः प्रधाव्य वेगादागत्य यशोदया धृतमुद्धृतमवलोक्य समाश्वसन् आश्वासं कृतवन्तः ॥ ४ ॥

**कस्को नु कौतस्कुत एष विस्मयो विशङ्कटं यच्छकटं विपाटितम् ।**
**न कारणं किञ्चिदिहेति ते स्थिताः स्वनासिकादत्तकरास्त्वदीक्षकाः ॥५॥**

कस्क इति । कस्को नु कौतस्कुतः कः कः कीदृशः कुतः कुतः कस्मात् कारणादागतः । सम्भ्रमाद् द्विरुक्तिः । विशङ्कटं विस्तृतं विपाटितं केनापि भिन्नावयवं कृतम् । इह न किञ्चित् कारणं, यतोऽस्मरणीयैवंविधसामर्थ्यो बालकः । स्वनासिकादत्तकरा इति विस्मयानुभावः ॥ ५ ॥

**कुमारकस्यास्य पयोधरार्थिनः प्ररोदने लोलपदाम्बुजाहतम् ।**
**मया मया दृष्टमनो विपर्यगादितीश ! ते पालकबालका जगुः ॥ ६ ॥**

---

१ 'तः स्वबा' ख. ग. पाठः. २. 'त आगतः कौतस्कुतः, कुतः क' क. पाठः.

**कुमारकस्ये**ति । कुमारकस्य पदाम्बुजाभ्यामाहतमनो विपर्ययगाद् व्यत्यस्तावयवमभूद् , मया दृष्टं मयापि दृष्टमिति बालका जगुः ॥ ६ ॥

**भिया तदा किञ्चिदजानतामिदं कुमारकाणामतिदुर्घटं वचः ।**
**भवत्प्रभावाविदुरैरितीरितं मनागिवाशङ्क्यत दृष्टपूतनैः ॥ ७ ॥**

**भिये**ति । इदं वचोऽतिदुर्घटमत्यन्तानुपपन्नम् । अत्र हेतुः — कुमारकाणां बालानां विशेषतस्तदा भिया किञ्चिदप्यजानतामिति । भवतः प्रभावः शक्तिस्तदविदुरैस्तदनभिज्ञैः कैश्चिदितीरितमुक्तम् । दृष्टपूतनैर्नन्दोपनन्दादिभिर्मनागीषत् त्वत्प्रभावादिदमित्थमित्याशङ्क्यतैव ॥ ७ ॥

**प्रवालताम्रं किमिदं पदं क्षतं सरोजरम्यौ नु करौ विरोजितौ ।**
**इति प्रसर्पत्करुणातरङ्गितास्त्वदङ्गमापस्पृशुरङ्गनाजनाः ॥ ८ ॥**

**प्रवाले**ति । पदं क्षतं व्रणितं किं, करौ विरोजितौ भग्नौ न्विति वदन्त्यः प्रसर्पन्त्या करुणया तत्कार्यसन्तताश्रुधारापनयनप्रवृत्त्या तरङ्गिताश्चलिता अङ्गना गोप्यस्त्वदङ्गं मन्दं मन्दमापस्पृशुः ॥ ८ ॥

**अये सुतं देहि जगत्पतेः कृपातरङ्गपातात् परिपातमद्य मे ।**
**इति स्म सङ्गृह्य पिता त्वदङ्गकं मुहुर्मुहुः श्लिष्यति जातकण्टकः ॥ ९ ॥**

**अये इ**ति । अपायानिश्चये सत्यतथादर्शनादये इत्यतर्कितोपनते । जगत्पतेर्विष्णोः कृपातरङ्गपातात् करुणालवप्राप्तेरद्य परिपातं रक्षितं मे सुतं देहीति पिता नन्दः श्लिष्यति स्म ॥ ९ ॥

**अनोनिलीनः किल हन्तुमागतः सुरारिरेवं भवता विहिंसितः ।**
**रजोऽपि नो दृष्टममुष्य तत् कथं स शुद्धसत्त्वे त्वयि लीनवान् ध्रुवम् ॥**

**अनोनिलीन** इति । अनोनिलीनस्तद्रूपः । ननु विहिंसित इत्युक्तं, तत्

कथम् अमुष्य शकटासुरस्य रजोऽपि रजोमात्रतयापि शरीरं नो दृष्टमित्याशङ्क्य आ ज्ञातमित्याह — स इति । स दैत्यः सशरीर एव त्वयि निलीनवान् ध्रुवं निश्चिनोमि । रजोऽपि नो दृष्टमतस्तमसः का कथा । रजस्तमोविलये च त्वयि लीनवान् इत्युक्तिर्युक्तिमतीत्यर्थः ॥ १० ॥

**प्रपूजितैस्तत्र ततो द्विजातिभिर्विशेषतो लम्भितमङ्गलाशिषः$ ।**
**व्रजं निजैर्बाल्यरसैर्विमोहयन् मरुत्पुराधीश! रुजां जहीहि मे ॥ ११ ॥**

**प्रपूजितैरि**ति । भविष्यदपायशङ्कया विशेषतो लम्भिताः प्रापिता मङ्गलरूपा आशिषोऽनुग्रहा यस्य स त्वं मे रुजां रोगं जहीहि त्यज ॥ ११ ॥

**इति शकटासुरवधवर्णनं द्विचत्वारिंशं दशकं सैकम् ।**

---

**त्वामेकदा गुरुमरुत्पुरनाथ! वोढुं**
**गाढाधिरूढगरिमाणमपारयन्ती ।**
**माता निधाय शयने किमिदं बतेति**
**ध्यायन्त्यचेष्टत गृहेषु निविष्टशङ्का ॥ १ ॥**

**त्वामि**ति । त्वां गाढाधिरूढगरिमाणमतिशयेन प्राप्तगुरुत्वं वोढुम् अङ्केनोद्धर्तुमपारयन्त्यशक्नुवती माता यशोदा शयने निधाय किमिदं बतेति निविष्टा शङ्का यस्यां सा त्वां ध्यायन्ती गृहेष्वचेष्टत ॥ १ ॥

**तावद् विदूरमुपकर्णितघोरघोष-**
**व्याजृम्भिपांसुपटलीपरिपूरिताशः ।**
**वात्यावपुः स किल दैत्यवरस्तृणाव-**
**र्ताख्यो जहार जनमानसहारिणं त्वाम् ॥ २ ॥**

---

$ 'अच्' (५-४-७५) इति योगविभागाद् अच्प्रत्ययः समासान्तः पद्मनाभवत । आशिषशब्द एव वा स्वार्थाणन्तः समासे घटितः प्रज्ञादेराकृतिगणत्वात् ।

**तावदिति** । विदूरं दूरादेवोपकर्णितेन घोरघोषेण व्याजृम्भिन्या प्रवृद्धया पांसुपटल्या च परिपूरिता दशाशा येन । वात्या वातसमूहस्तद्वपुस्तृणावर्ताख्यो जनानां मानसहारी त्वं, तं त्वामेव जहार ॥ २ ॥

**उद्दामपांसुतिमिराहतदृष्टिपाते**
**द्रष्टुं किमप्यकुशले पशुपाललोके ।**
**हा बालकस्य किमिति त्वदुपान्तमाप्ता**
**माता भवन्तमविलोक्य भृशं रुरोद ॥ ३ ॥**

**उद्दामेति** । उद्दामाभ्यां पांसुतिमिराभ्यामाहतो दृष्टिपातो यस्य । अतः किमपि द्रष्टुमकुशलेऽसमर्थे बालकस्य किं जातमिति ॥ ३ ॥

**तावत् स दानववरोऽपि च दीनमूर्ति-**
**र्भावत्कभारपरिधारणलूनवेगः ।**
**सङ्कोचमाप तदनु क्षतपांसुघोषे**
**घोषे व्यतायत भवज्जननीनिनादः ॥ ४ ॥**

**तावदिति** । दीनमूर्तिः क्षीणशरीरः । भावत्को भवदीयो भारो गुरुत्वं तस्य परिधारणेन लूनवेगो नष्टगमनवेगः सङ्कोचं निश्चेष्टतामाप । तदनु अनन्तरं क्षता नष्टाः पांसवो घोषश्च यस्मिन् तस्मिन् घोषे व्रजे व्यतायत व्याप्तोऽभूत् ॥ ४ ॥

**रोदोपकर्णनवशादुपगम्य गेहं**
**क्रन्दत्सु नन्दमुखगोपकुलेषु दीनः ।**
**त्वां दानवस्त्वखिलमुक्तिकरं मुमुक्षु-**
**स्त्वय्यप्रमुञ्चति पपात वियत्प्रदेशात् ॥ ५ ॥**

**रोदेति** । यशोदाया रोदोपकर्णनवशात् तस्या गेहमुपगम्य । कण्ठे बाहुभ्यां बद्धं त्वां मुमुक्षुः । दीनः क्षीणजीवितः ॥ ५ ॥

**रोदाकुलास्तदनु गोपगणा बहिष्ठ-**
**पाषाणपृष्ठभुवि देहमतिस्थविष्ठम् ।**

प्रैक्षन्त हन्त निपतन्तममुष्य वक्ष-
स्यक्षीणमेव च भवन्तमलं हसन्तम् ॥ ६ ॥

**रोदेति** । तदनु निपतन्तमतिस्थविष्ठं स्थूलतरं तृणावर्तस्य देहम् अमुष्य वक्षसि निपतन्तं भवन्तं च प्रैक्षन्त, यतोऽलं हसन्तम् अतोऽक्षीणमेव च प्रैक्षन्तेत्यर्थः ॥ ६ ॥

ग्रावप्रपातपरिपिष्टगरिष्ठदेह-
भ्रष्टासुदुष्टदनुजोपरि धृष्टहासम् ।
आघ्नानमम्बुजकरेण भवन्तमेत्य
गोपा दधुर्गिरिवरादिव नीलरत्नम् ॥ ७ ॥

**ग्रावेति** । ग्रावप्रपातेन पाषाणपृष्ठनिपतनेन परिपिष्टश्चूर्णीकृतो गरिष्ठो यो देहस्तस्माद् भ्रष्टा असवो यस्य तस्य दुष्टदनुजस्योपरि अम्बुजकरेणाघ्नानं मया हतोऽयमिति दिविष्ठान् ग्राहयितुं निघ्नन्तमिव चलितकराम्बुजम् अत एव धृष्टहासं कपटहासयुक्तं गोपा दधुरुद्धृतवन्तः ॥ ७ ॥

एकैकमाशु परिगृह्य निकामनन्द-
न्नन्दादिगोपपरिरब्धविचुम्बिताङ्गम् ।
आदातुकामपरिशङ्कितगोपनारी-
हस्ताम्बुजप्रपतितं प्रणुमो भवन्तम् ॥ ८ ॥

**एकैकमिति** । एकैकं मृदुकरचरणादिकं परिगृह्य निकाममतिशयेन नन्दद्भिर्मोदमानैर्नन्दादिभिः परिवार्य युगपत् परिरब्धानि विचुम्बितानि चाङ्गानि यस्य । आदातुकामेति मामादातुकामेयमिति परिशङ्कितानां गोपनारीणां हस्ताम्बुजेषु प्रपतितं हस्तप्रसारणात् पूर्वमेव निपत्य ता आकुलीकुर्वन्तम् ॥ ८ ॥

भूयोऽपि किन्नु कृणुमः* प्रणतार्तिहारी
गोविन्द एव परिपालयतात् सुतं नः ।

---

* कुर्म इत्यर्थः । 'कृवि हिंसाकरणयोश्च' ।

**इत्यादि मातरपितृप्रमुखैस्तदानीं**
**सम्प्रार्थितस्त्वदवनाय विभो! त्वमेव ॥ ९ ॥**

**भूय** इति । भूयोऽप्येवंविधसङ्कटेषु गोविन्दो विष्णुरेव नः सुतं परिपालयतात् ॥ ९ ॥

**वातात्मकं दनुजमेवमयि प्रधून्वन्**
**वातोद्भवान् मम गदान् किमु नो धुनोषि ।**
**किं वा करोमि पुनरप्यनिलालयेश!**
**निश्शेषरोगशमनं मुहुरर्थये त्वाम् ॥ १० ॥**

**वातेति** । वातात्मकं तृणावर्तं प्रधून्वन् निगृह्णन् हे अनिलालयेश! तव वातालयस्थत्वे वातनिग्राहकत्वे च सत्यपि मम वातोद्भवान् गदान् किमु नो धुनोषि मत्प्रारब्धकर्मदोषादिति चेत् किं वा करोमि । अपि वा पुनः प्रारब्धावसाने स्थूलसूक्ष्मदेहद्वयपातेन निःशेषाणां बाह्यानां वातादीनामान्तराणां रागादीनामपि रोगाणां शमनं मोक्षमप्यर्थये प्रार्थयामि ॥ १० ॥

**इति तृणावर्तवधवर्णनं त्रयश्चत्वारिंशं दशकम् ।**

---

अथ श्लोकदशकेन गर्गस्य नामकरणजातकर्माख्याने दर्शयति —

**गूढं वसुदेवगिरा कर्तुं ते निष्क्रियस्य संस्कारान् ।**
**हृद्गतहोरातत्त्वो गर्गमुनिस्त्वद्गृहान् विभो! गतवान् ॥ १ ॥**

**गूढमिति** । परमार्थतो निष्क्रियस्यापि मनुष्यदृष्ट्या कर्तव्यान् संस्कारान् नामकरणादीन् हृद्गतहोरातत्त्वः सम्यग् विदितज्योतिश्शास्त्रयाथार्थ्यः ॥ १ ॥

**नन्दोऽथ नन्दितात्मा बृन्दिष्टं मानयन्नमुं यमिनाम् ।**
**मन्दास्मितार्द्रमूचे त्वत्संस्कारान् विधातुमुत्सुकधीः ॥ २ ॥**

---

१. 'षे सङ्कटे गो' क. ग. पाठः.   २. 'हं' क. पाठः.

नन्द इति। नन्दितात्मा सन्तुष्टः यमिनां मुनीनां बृन्दिष्ठं श्रेष्ठं मानयन् यथाविधि पूजयन्॥ २॥

**यदुवंशाचार्यत्वात् सुनिभृतमिदमार्य! कार्यमिति कथयन्।**
**गर्गो निर्गतपुलकश्चक्रे तव साग्रजस्य नामानि॥ ३॥**

यद्विति। मम यदुवंशाचार्यत्वान्मया संस्कृते तव पुत्रे कंसस्य यदुकुमारशङ्का स्यात्। तत्परिहाराय सुनिभृतमतिगूढमिदं कार्यम्। त्वत्स्पर्शान्निर्गतपुलकः॥ ३॥

**कथमस्य नाम कुर्वे सहस्रनाम्नो ह्यनन्तनाम्नो वा।**
**इति नूनं गर्गमुनिश्चक्रे तव नाम नाम रहसि विभो!॥ ४॥**

कथमिति। अनन्तनाम्नः कथं नाम कुर्वे। कथं कानिचिन्नामानि कृतवानिति पृष्टः किं ब्रूयामिति विषण्णो नाम मुनिस्तव नाम रहसि चक्रे॥ ४॥

कृष्णनाम निर्वक्ति—

**कृषिधातुणकाराभ्यां सत्तानन्दात्मतां किलाभिलपत्।**
**जगदघकर्षित्वं वा कथयदृषिः कृष्णनाम ते व्यतनोत्॥ ५॥**

कृषीति। कृषिधातुः सत्तावाचकः, णकार आनन्दवाचकः, तयोः सामानाधिकरण्येन कृष्णनाम सत्तानन्दात्मतामभिलपत् परब्रह्मवाचकं भवति। किलशब्दोऽत्र पुराणप्रसिद्धिं द्योतयति। तदुक्तं—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥"

इति। अथवा जगतामघं कर्षतीति कृष्ण इति निर्वचनमित्याह—जगदिति। कथयदिति नामविशेषणम्॥ ५॥

**अन्यांश्च नामभेदान् व्याकुर्वन्नग्रजे च रामादीन्।**
**अतिमानुषानुभावं न्यगदत् त्वामप्रकाशयन् पित्रे॥ ६॥**

१. 'प्य' क. पाठः.

**अन्यानिति** । अन्यांश्च वासुदेवादीन् व्याकुर्वन्नन्वर्थतया कथयन् प्राक् कदाचिद् वसुदेवाज्जातोऽयं तव पुत्रः । तस्माद् वासुदेव इति चास्य नामास्तु । किञ्च मानुषानतिक्रम्य वर्तत इत्यतिमानुषानुभावं त्वां विष्णुमप्रकाशयन् जातकदृष्ट्या पित्रे नन्दाय न्यगददुक्तवान् ॥ ६ ॥

तदाह —

**स्निह्यति यस्तव पुत्रे मुह्यति स न मायिकैः पुनः शोकैः ।**
**द्रुह्यति यः स तु नश्येदित्यवदत् ते महत्त्वमृषिवर्यः ॥ ७ ॥**

**स्निह्यतीति** । यस्तव पुत्रे स्निह्यति यः कृष्णभक्तो भवति, स मायिकैः शोकैर्न मुह्यति न जननमरणादिदुःखमनुभवति । तव पुत्राय द्रुह्यति यो यः कृष्णाद् विमुखो भवति, स तु नश्येत् संसारी स्यादिति गूढार्थरूपं ते महत्त्वमृषिवर्योऽवदादित्यर्थः ॥ ७ ॥

**जेष्यति बहुतरदैत्यान् नेष्यति निजबन्धुलोकममलपदम् ।**
**श्रोष्यसि[1] सुविमलकीर्तीरस्येति[2] भवद्विभूतिमृषिरूचे ॥ ८ ॥**

**जेष्यतीति** । अमलपदं निष्कलब्रह्म नेष्यति प्रापयिष्यति । अस्य तव पुत्रस्य सुविमलाः पापहराः कीर्तीरयं लोकः श्रोष्यतीति भवतो विभूतिमैश्वर्यम् ॥ ८ ॥

**अमुनैव सर्वदुर्गं तरितास्थ कृतास्थमत्र तिष्ठध्वम् ।**
**हरिरेवेत्यनभिलपन्नित्यादि त्वामवर्णयत् स मुनिः ॥ ९ ॥**

**अमुनेति** । यूयममुना पुत्रेणैव सर्वदुर्गं सङ्कटजातं तरितास्थ तरिष्यथ । कृतास्थं कृतादरं यथा भवति तथात्रास्मिन् पुत्रे तिष्ठध्वं विश्वस्ता भवत । हरिरयमित्येवानभिलपन् त्वामुद्दिश्य इत्यादि श्रीकृष्णावतारकार्यमखिलं स गर्गमुनिरवर्णयत् ॥ ९ ॥

---

१. 'ति' क. ख. पाठः.  २. 'र्ति चास्ये' क. पाठः.

**गर्गेऽथ निर्गतेऽस्मिन् नन्दितनन्दादिनन्द्यमानस्त्वम् ।**
**मद्गदमुद्गतकरुणो निर्गमय श्रीमरुत्पुराधीश! ॥ १० ॥**

**गर्ग** इति । नन्दितैर्मुदितैर्नन्दादिभिर्नन्द्यमानो लाल्यमानो मम गदं रोगं निर्गमय निराकुरु ॥ १० ॥

इति कृष्णस्य जातकर्मनामकरणवर्णनं

**चतुश्चत्वारिंशं दशकम् ।**

---

**अयि सबल! मुरारे! पाणिजानुप्रचारैः**
**किमपि भवनभागान् भूषयन्तौ भवन्तौ ।**
**चलितचरणकञ्जे[1] मञ्जुमञ्जीरशिञ्जा-**
**श्रवणकुतुकभाजौ चेरतुश्चारु वेगात् ॥ १ ॥**

**अयीति** । पाणिजानुप्रचारैः पाणिद्वयेन जानुद्वयेन च कृतैश्चङ्क्रमणैर्भवनभागानलिन्दादिप्रदेशान्, एकत्र चिरमनवस्थानात् किमपि कञ्चित् कालं भूषयन्तौ चलिते चरणकञ्जे पादाम्बुजे मञ्जुमञ्जीरशिञ्जाश्रवणकुतुकभाजौ यतः, अतो वेगाच्चेरतुः ॥

**मृदु मृदु विहसन्तावुन्मिषद्दन्तवन्तौ**
**वदनपतितकेशौ दृश्यपादाब्जदेशौ ।**
**भुजगलितकरान्तव्यालगत्कङ्कणाङ्कौ**
**मतिमहरतमुच्चैः पश्यतां विश्वनृणाम् ॥ २ ॥**

**मृद्विति** । अन्तरान्तरा यत्किञ्चिदवलोक्य मृदु मृदु विहसन्तावत एवोन्मिषद्दन्तवन्तौ दृश्यमानकतिपयदन्तमुकुलौ । अङ्घ्रिद्वयाकर्षणे दृश्यौ ध्वजवज्राद्यङ्कितत्वेन दर्शनीयौ पादाब्जदेशौ ययोः । भुजगलितेति भुजोपरिदेशाद् गलितत्वान्मणिबन्धलम्बकङ्कणैः सञ्जातपरभागौ युवां विश्वेषां नृणां मतिमुच्चैरतिशयेनाहरतं जह्रथुः ॥ २ ॥

---

१. 'ञ्जौ' मूलपाठः.

अनुसरति जनौघे कौतुकव्याकुलाक्षे
　किमपि कृतनिनादं व्याहसन्तौ द्रवन्तौ ।
वलितवदनपद्मं पृष्ठतो दत्तदृष्टी
　किमिव न विदधाथे कौतुकं वासुदेव ! ॥ ३ ॥

अन्विति । जनौघेऽनुसरति सति द्रवन्तौ वेगेन चरन्तौ ततो दूरस्थे जनौघे वलितवदनपद्मं तिर्यक्कृतमुखपद्मं यथा तथा पृष्ठतो दत्तदृष्टी, किमिवेति अतिशयेन कौतुकं विदधाथे अजनयतमित्यर्थः ॥ ३ ॥

द्रुतगतिषु पतन्तावुत्थितौ लिप्तपङ्कौ
　दिवि मुनिभिरपङ्कैः सस्मितं वन्द्यमानौ ।
द्रुतमथ जननीभ्यां सानुकम्पं गृहीतौ
　मुहुरपि परिरब्धौ द्राग् युवां चुम्बितौ च ॥ ४ ॥

द्रुतेति । द्रुतगतिषु वेगेन सञ्चरणेषु व्रजकर्दमे पतन्तौ दिवि द्रष्टुमागतैर्मुनिभिरस्मानपङ्कीकर्तुं समर्थावेतौ स्वयं लिप्तपङ्कौ अधःपतनभयेन यावाश्रयामस्तौ स्वयं पतन्ताविति सस्मितम्, अहो भक्तपारतन्त्र्यमीश्वरयोरिति वन्द्यमानौ ॥ ४ ॥

स्नुतकुचभरमङ्के धारयन्ती भवन्तं
　तरलमति यशोदा स्तन्यदा धन्यधन्या ।
कपटपशुप ! मध्ये मुग्धहासाङ्कुरं ते
　दशनमुकुलहृद्यं वीक्ष्य वक्त्रं जहर्ष ॥ ५ ॥

स्नुतेति । स्नुतं प्रसृतस्तन्यं कुचयुगं यस्मिन्, तरला कृपाकुला मतिर्यस्मिन् इति च क्रियाविशेषणम् । तथा भवन्तमङ्के धारयन्ती या स्तन्यं ददाति, सा यशोदा धन्यधन्या । हे कपटपशुप ! स्तनपानमध्ये ते दशनमुकुलैर्हृद्यं मुग्धो हासाङ्कुरो मन्दस्मितं यस्मिन् तद् वक्त्रं वीक्ष्य जहर्ष सन्तुष्टाभूत् ॥ ५ ॥

तदनु चरणचारी दारकैः साकमारा-
　न्निलयततिषु खेलन् बालचापल्यशाली ।

भवनशुकबिडालान् वत्सकांश्चानुधावन्
कथमपि कृतहासैर्गोपकैर्वारितोऽभूः ॥ ६ ॥

तदन्विति । आरात् समीपस्थासु निलयततिषु भवनान्तरेषु खेलन् गच्छन् ॥ ६ ॥

गोपीनां भवदनुसरणैकचित्ततया गृहकृत्यादिष्वपि विस्मृतिर्जातेत्याह—

हलधरसहितस्त्वं यत्र यत्रोपयातो
विवशपतितनेत्रास्तत्र तत्रैव गोप्यः ।
विगलितगृहकृत्या विस्मृतापत्यभृत्या
मुरहर ! मुहुरत्यन्ताकुला नित्यमासन् ॥ ७ ॥

गोपीनां नवनीतादिपणेन त्वं तद्दर्शनार्थं नर्तनाद्यपि कृतवानसीत्याह—

प्रतिनवनवनीतं गोपिकादत्तमिच्छन्
कलपदमुपगायन् कोमलं क्वापि नृत्यन् ।
सदययुवतिलोकैरर्पितं सर्पिरश्नन्
क्वचन नवविपक्वं दुग्धमप्यापिबस्त्वम् ॥ ८ ॥

मम खलु बलिगेहे याचनं जातमास्ता-
मिह पुनरबलानामग्रतो नैव कुर्वे ।
इति विहितमतिः किं देव ! सन्त्यज्य याच्ञां
दधिघृतमहरस्त्वं चारुणा चोरणेन ॥ ९ ॥

ममेति । मम बलिगेहे प्राग् याचनं जातम् । तत्तु बलेर्बलित्वादेव नास्माकं दैन्यापादकमित्यास्तां खल्वेतत् । इह तद्विपरीतानामबलानामग्रतस्तन्न कुर्वे इति विहितमतिर्निश्चितचित्तश्चारुणा विचित्रोपायरचितेन चोरणेन स्तेयकर्मणा ॥ ९ ॥

तव दधिघृतमोषे घोषयोषाजनाना-
मभजत हृदि रोषो नावकाशं न शोकः ।
हृदयमपि मुषित्वा हर्षसिन्धौ न्यधास्त्वं
स मम शमय रोगान् वातगेहाधिनाथ ! ॥ १० ॥

तवेति । दधिघृतयोर्मोषे मोषणे घोषयोषाजनानां गोपस्त्रीणां मोषके त्वयि रोषो द्रव्यनाशे शोकश्चावकाशमास्पदं नाभजत । कस्मादित्यत्राह — हृदयमिति । मुषित्वापहृत्य । नन्वपहृतं हृदयं यत्र तत्र रोषशोकौ प्राप्नुयातामेव । तत्राह — हर्षसिन्धाविति । यथा जलस्थे काष्ठे ज्वलनप्रवेशोऽशक्यः, तद्वद्धर्षसिन्धुस्थे हृदये तद्विरुद्धयो रोषशोकयोरप्यनवकाश इति भावः ॥ १० ॥

*शाखाग्रेऽथ विधुं विलोक्य फलमित्यम्बां च तातं मुहुः
सम्प्रार्थ्याथ तदा तदीयवचसा प्रोत्क्षिप्तबाहौ त्वयि ।
चित्रं देव! शशी स ते करमगात्‌ किं ब्रूमहे सम्पत-
ज्ज्योतिर्मण्डलपूरिताखिलवपुः प्रागा विराड्रूपताम्‌ ॥ ११ ॥

*किं किं बतेदमिति संभ्रमभाजमेनं
ब्रह्मार्णवे क्षणममुं परिमज्ज्य तातम्‌ ।
मायां पुनस्तनयमोहमयीं वितन्व-
न्नानन्दचिन्मय! जगन्मय! पाहि रोगात्‌ ॥ १२ ॥

इति कृष्णस्य बालक्रीडावर्णनं पञ्चचत्वारिंशं दशकं सटिकम्‌ ।

---

अयि देव! पुरा किल त्वयि स्वयमुत्तानशये स्तनन्धये ।
परिजृम्भणतो व्यपावृते वदने विश्वमचष्ट वल्लवी ॥ १ ॥

अयीति । अयि देव! क्रीडापर! पुरातिशैशवे स्वयं साक्षादीश्वरे त्वयि उत्तानशय ऊर्ध्वमुखशायिनि । स्तनं धयति पिबतीति स्तनन्धयः । परिजृम्भणतो मुखविजृम्भणदशायां व्यपावृते विदारिते वदने आस्ये विश्वमचष्ट दृष्टवती । वल्लवी यशोदा ॥ १ ॥

पुनरप्यथ बालकैः समं त्वयि लीलानिरते जगत्पते! ।
फलसञ्चयवञ्चनक्रुधा तव मृद्भोजनमूचुरर्भकाः ॥ २ ॥

---

१. 'ति । न केवलं दधिघृतमोषणमेव कृतवान्‌, तासां हृदयमपि मुषित्वा तच्च हर्षसिन्धौ न्यधाः ॥' ग. पाठः.

* पद्यद्वयमिदं क. पुस्तके परं दृश्यते । तत्रापि न व्याख्या दृश्यते ।

पुनरिति। पुनरपि किञ्चिद्वयोतिक्रमणे सति त्वयि बालकैः समं सह ॥ २ ॥

अयि ते प्रलयावधौ विभो! क्षितितोयादिसमस्तभक्षिणः ।
मृदुपाशनतो रुजा भवेदिति भीता जननी चुकोप सा ॥ ३ ॥

अयीति। प्रलय एवावधिः प्रलयावधिः। प्रत्यहमिव प्रतिप्रलयं क्षित्यादिसमस्तं प्रपञ्चं भक्षयितुं शीलमस्येति तथा तस्य ते मृदुपाशनतः क्षितिलवमात्रभक्षणेन रुजा रोगो भवेत् ॥ ३ ॥

अयि दुर्विनयात्मक! त्वया किमु मृत्सा बत वत्स! भक्षिता ।
इति मातृगिरं चिरं विभो! वितथां त्वं प्रतिजज्ञिषे हसन् ॥ ४ ॥

अयीति। वितथामयथार्थां प्रतिजज्ञिषे प्रतिज्ञातवानसि ॥ ४ ॥

अयि ते सकलैर्विनिश्चिते विमतिश्चेद् वदनं विदार्यताम् ।
इति मातृविभर्त्सितो मुखं विकसत्पद्मनिभं व्यदारयः ॥ ५ ॥

अयीति। सकलैस्त्वत्सखिभिस्तवाग्रजेन च विनिश्चिते मृद्भोजने तवैकस्य विमतिर्विवादोऽस्ति चेत् सन्देहहानाय वदनमास्यं विदार्यतामिति मात्रा विभर्त्सितोऽधिक्षिप्तः विकसत्पद्मनिभं यथा भवति तथा व्यदारयः ॥ ५ ॥

अयि[1] मृल्लवदर्शनोत्सुकां जननीं तां बहु तर्पयन्निव ।
पृथिवीं निखिलां न केवलं भुवनान्यप्यखिलान्यदीदृशः ॥ ६ ॥

अयीति। बहु अतिशयेन तर्पयन् प्रीणयन् अदीदृशः प्रदर्शयामासिथ ॥

कुहचिद् वनमम्बुधिः क्वचित् क्वचिदभ्रं कुहचिद् रसातलम् ।
मनुजा दनुजाः क्वचित् सुरा ददृशे किं न तदा त्वदानने ॥ ७ ॥

कुहचिदिति। तवान्तर्भागे[2] कुहचित् कुत्रचित् ॥ ७ ॥

कलशाम्बुधिशायिनं पुनः परवैकुण्ठपदाधिवासिनम् ।
स्वपुरश्च निजार्भकात्मकं कतिधा त्वां न ददर्श सा मुखे ॥ ८ ॥

---

१. 'मि' क. ग. पाठः. २. 'द' ख. पाठः.

**कलशेति** । कलशाम्बुधिशायिनं क्षीराब्धौ शेषपर्यङ्कशायिनं, पुनस्ततः परवैकुण्ठपदाधिवासिनं, स्वस्य पुरः पुरतो निजार्भकात्मकं यशोदातनयरूपं त्वां सा कतिधा न ददर्श ॥ ८ ॥

ननु यशोदा स्वसुतस्यास्ये[1] स्वसुतं ददर्शेत्युक्तं, तस्याप्यास्ये किं भुवनानि विद्यन्ते न वेति शङ्कायामाह—

**विकसद्भुवने मुखोदरे ननु भूयोऽपि तथाविधाननः ।**
**अनया स्फुटमीक्षितो भवानानवस्थां जगतां बतातनोत् ॥ ९ ॥**

**विकसदिति** । विकसन्ति भुवनानि यस्मिंस्तद् विकसद्भुवनं प्रकाशितब्रह्माण्डं तस्मिन् मुखोदर आस्ये तथाविधं विकसद्भुवनमाननं यस्य स भवाननया स्फुटं स्पष्टमीक्षितः जगतां प्रपञ्चानामनवस्थामनवसानताम् । अयमर्थः—यशोदा स्वसुतस्यास्ये जगत् स्वसुतं च ददर्श । तस्यापि स्वसुतस्यास्ये जगत् स्वसुतं च ददर्श, पुनस्तस्याप्येवं, पुनश्च तस्यापि । एवं दर्पणस्थप्रतिबिम्बदर्पणानवस्थावद् भवान् जगतामनवस्थामातनोदिति ॥ ९ ॥

**धृततत्त्वधियं तदा क्षणं जननीं तां प्रणयेन मोहयन् ।**
**स्तनमम्ब! दिशेत्युपासजन्[2] भगवन्नद्भुतबाल! पाहि माम् ॥ १० ॥**

**धृतेति** । तस्यान्तर्भागेऽनेकब्रह्माण्डस्य तद्बहिष्ठवैकुण्ठलोकस्यापि दर्शनात् तद्बहिष्ठायाः प्रकृतेः परं सच्चिदानन्दाद्वयं ब्रह्मैवेदं योगैश्वर्येण मत्पुत्रभावेनात्मानं प्रदर्श्य मोहयतीति क्षणं धृता तत्त्वधीः सम्यग्ज्ञानं यया तामुपासजन्[3]नङ्कमारुरुक्षन् अनेकब्रह्माण्डदर्पणस्थानीयत्वादद्भुतबाल! ॥ १० ॥

**इति विश्वरूपप्रदर्शनवर्णनं षट्चत्वारिंशं दशकम् ।**

---

**एकदा दधिविमाथकारिणीं मातरं समुपसेदिवान् भवान् ।**
**स्तन्यलोलुपतया निवारयन्नङ्कमेत्य पपिवान् पयोधरौ ॥ १ ॥**

**एकदेति** । दध्नो विमाथो विमथनं तत् करोतीति तथा । समुपसेदिवान् समीपं प्राप्तवान् । अङ्कमेत्यारुह्य निवारयन् दधिविमथनमिति शेषः ॥ १ ॥

१. 'स्ये स्वात्मानं स्वसुतं च द' ग. पाठः. २. 'त्र' क. पाठः. ३. 'त्र' क. ख. पाठः.

**अर्धपीतकुचकुड्मले त्वयि स्निग्धहासमधुराननाम्बुजे ।**
**दुग्धमीश! दहने परिस्रुतं धर्तुमाशु जननी जगाम ते ॥ २ ॥**

अर्धेति । त्वय्यर्धपीतकुचकुड्मलेऽतृप्ते तदन्तरा मात्राङ्गुलीभ्यां कपोलतलचालनात् स्निग्धहासमधुराननाम्बुजे च सति ॥ २ ॥

**सामिपीतरसभङ्गसङ्गतक्रोधभारपरिभूतचेतसा ।**
**मन्थदण्डमुपगृह्य पाटितं हन्त देव! दधिभाजनं त्वया ॥ ३ ॥**

सामीति । सामिपीतस्यार्धपीतस्य रसस्य स्तन्यस्य भङ्गेन विच्छेदेन सङ्गतः प्राप्तो यः क्रोधभारस्तेन परिभूतमावेशितं चेतो यस्य स तथा ॥ ३ ॥

**उच्चलद् ध्वनितमुच्चकैस्तदा संनिशम्य जननी समाद्रुता ।**
**त्वद्यशोविसरवद् ददर्श सा सद्य एव दधि विस्तृतं क्षितौ ॥ ४ ॥**

उच्चलदिति । उच्चकैः पूर्णकुम्भपाटनेन सातिशयमुच्चलदुद्गतं ध्वनितं शब्दं निशम्य समाद्रुता वेगेनागता । यशसो विसरो व्याप्तिः । सद्यः समाद्रुता दध्येव ददर्शेत्यनेन तव नवनीतमोषणार्थमन्यतो गमनं व्यज्यते ॥ ४ ॥

**वेदमार्गपरिमार्गितं रुषा त्वामवीक्ष्य परिमार्गयन्त्यसौ ।**
**सन्ददर्श सुकृतिन्युलूखले दीयमाननवनीतमोतवे ॥ ५ ॥**

वेदेति । असौ यशोदा मुनिभिर्वेदमार्गैः काण्डत्रयात्मकैः परिमार्गितं न दृष्टं तं त्वां रुषा, न भक्त्या, परिमार्गयन्त्यन्वेषणं कुर्वन्ती सम्यक् चाक्षुषतया ददर्श । अतः सुकृतिनी नवनीतभाजनाधःस्थितोलूखलेऽग्रपादेन स्थित्वौतवे मार्जाराय दीयमानं नवनीतं येन तम् ॥ ५ ॥

**त्वां प्रगृह्य बत भीतिभावनाभासुराननसरोजमाशु सा ।**
**रोषरूषितमुखी सखीपुरो बन्धनाय रशनामुपाददे ॥ ६ ॥**

त्वामिति । नाट्यवद् भीतिभावनया भासुरमाननसरोजं यस्य तं त्वाम् । रोषेण रूषितं भ्रूभङ्गदशनच्छददंशननेत्ररक्तिमादिभिश्चिह्नैरङ्कितं मुखं यस्याः । सखीनां पुरः पुरोभागे रशनां पाशम् ॥ ६ ॥

**बन्धुमिच्छति यमेव सज्जनस्तं भवन्तमयि बन्धुमिच्छती ।**
**सा नियुज्य रशनागुणान् बहून् द्व्यङ्गुलोनमखिलं किलैक्षत ॥ ७ ॥**

**बन्धुमिति** । अयि भगवन्! यं सज्जनो मोक्षार्थी बन्धुं शरणमिच्छति, तं भवन्तं सा यशोदा पाशेन बन्धुमिच्छती रशनागुणान् बहून् नियुज्य त्वदङ्गे निक्षिप्य द्व्यङ्गुलोनतया पुनः पुनर्निक्षिप्याखिलमपि रशनागुणं द्व्यङ्गुलोनमैक्षत दृष्टवती किल ॥ ७ ॥

**विस्मितोत्स्मितसखीजनेक्षितां स्विन्नसन्नवपुषं निरीक्ष्य ताम् ।**
**नित्यमुक्तवपुरप्यहो हरे! बन्धमेव कृपयान्वमन्यथाः ॥ ८ ॥**

**विस्मितेति** । द्व्यङ्गुलोनतादर्शनेन विस्मितैरत एवोत्स्मितैः सखीजनैरीक्षितां स्विन्नं स्वेदार्द्रं सन्नं क्लान्तं च वपुर्यस्यास्ताम् । नित्यमुक्तं परब्रह्माख्यं वपुर्यस्य स त्वं रशनागुणैर्बन्धं बन्धनमेवान्वमन्यथा अनुज्ञातवान् ॥ ८ ॥

**स्थीयतां चिरमुलूखले खलेत्यागता भवनमेव सा यदा ।**
**प्रागुलूखलबिलान्तरे तदा सर्पिरर्पितमदन्नवास्थिथाः ॥ ९ ॥**

**स्थीयतामिति** । सा त्वां बद्ध्वा हे खल! त्वया चिरमुलूखले स्थीयतामित्युक्त्वा भवनमेवागता यदा, तदा प्रागुलूखलबिलान्तरेऽर्पितं सर्पिर्नवनीतमदन्नवास्थिथाः स्थितवानसि ॥ ९ ॥

**यद्यपाशसुगमो भवान् विभो! संयतः किमु सपाशयानया ।**
**एवमादि दिविजैरभिष्टुतो वातनाथ! परिपाहि मां गदात् ॥ १० ॥**

**यदीति** । अपाशानामपगतविषयश्रद्धानां सुगमः सुखेन प्राप्तुं शक्यः । एवं सति सपाशया पाशसहितयानया यशोदया किमु कथं संयतो बद्धः ॥ १० ॥

**इति कृष्णस्योलूखलबन्धनवर्णनं सप्तचत्वारिंशं दशकम् ।**

---

**मुदा सुरौघैस्त्वमुदारसम्मदैरुदीर्य दामोदर इत्यभिष्टुतः ।**
**मृदूदरः स्वैरमुलूखले लगन्नदूरतो द्वौ ककुभावुदैक्षथाः ॥ १ ॥**

मुदेति । प्रागेवोदारसम्मदैः प्रवृद्धसन्तोषैः सुरौघैर्दाम्नोदरे बद्धत्वाद्धेतोर्दामोदर इत्युदीर्य सम्बोध्य मुदाभिष्टुतः मृदु बन्धनायोग्यमुदरं यस्य स त्वं स्वैरं यथासुखं लगन् लग्नः सन् ककुभौ वृक्षावुदैक्षथाः दृष्टवानसि ॥ १ ॥

**कुबेरसूनुर्नलकूबराभिधः परो मणिग्रीव इति प्रथां गतः ।**
**महेशसेवाधिगतश्रियोन्मदौ चिरं किल त्वद्विमुखावखेलताम् ॥ २ ॥**

कुबेरेति । परोऽन्यः सुतो मणिग्रीव इति प्रथां प्रसिद्धिं गतः । महेशस्य शिवस्य सेवयाधिगतया प्राप्तया श्रियोन्मदौ प्रवृद्धमदौ त्वद्विमुखौ विष्णुविमुखावखेलतां चेरतुः किल ॥ २ ॥

**सुरापगायां किल तौ मदोत्कटौ सुरापगायद्बहुयौवतावृतौ ।**
**विवाससौ केलिपरौ स नारदो भवत्पदैकप्रवणो निरैक्षत ॥ ३ ॥**

सुरेति । सुरापगायां गङ्गायां सुरापेन गायता बहुना यौवतेन युवतिसमूहेनावृतौ परिवारितौ भवत्पद एकस्मिन् प्रवणो दत्तहृदयो निरैक्षत दृष्टवान् ॥ ३ ॥

**भिया प्रियालोकमुपात्तवाससं पुरो निरीक्ष्यापि मदान्धचेतसौ ।**
**इमौ भवद्भक्त्युपशान्तिसिद्धये मुनिर्जगौ शान्तिमृते कुतः सुखम् ॥ ४ ॥**

भियेति । भिया शापभयेनोपात्तवाससं धृतस्वस्ववसनं प्रियालोकं निजस्त्रीसमूहम् । भवद्भक्तिर्विष्णुभक्तिः, उपशान्तिरीदृशकर्मणो मनसो निग्रहणं, तयोः सिद्धये मुनिर्नारदः जगौ शप्तवान् । ननु शान्त्या किं फलं तत्राह— शान्तिमिति । ऋते विना सुखं मोक्षः ॥ ४ ॥

**युवामवाप्तौ ककुभात्मतां चिरं हरिं निरीक्ष्याथ पदं स्वमाप्नुतम् ।**
**इतीरितौ तौ भवदीक्षणस्पृहां गतौ व्रजान्ते ककुभौ बभूवतुः ॥ ५ ॥**

युवामिति । ककुभात्मतामर्जुनतरुयुग्मरूपताम् । अथ हरिं श्रीकृष्णं निरीक्ष्य स्वं पदं कुबेरान्तिकमाप्नुतं प्राप्नुतम् ॥ ५ ॥

**अतन्द्रमिन्द्रद्रुयुगं तथाविधं समेयुषा मन्थरगामिना त्वया ।**
**तिरायितोलूखलरोधनिर्धुतौ चिराय जीर्णौ परिपातितौ तरू ॥ ६ ॥**

अतन्द्रमिति । तथाविधं यमलमिन्द्रद्रुयुगमर्जुनतरुयुग्ममतन्द्रं सोत्साहं यथा भवति तथा उलूखलाकर्षणान्मन्थरगामिना मन्दगामिना समेयुषा प्राप्तवता तिरायितस्य तिर्यग्गतस्योलूखलस्य रोधेन निर्धुतौ निर्भिन्नमूलौ चिराय जीर्णौ पुराणौ परिपातितौ सर्वतः प्रसृतशाखोपशाखतया पातितौ ॥ ६ ॥

**अभाजि शाखिद्वितयं यदा त्वया तदैव तद्गर्भतलान्निरेयुषा ।**
**महात्विषा यक्षयुगेन तत्क्षणादभाजि गोविन्द! भवानपि स्तवैः ॥ ७ ॥**

**अभाजीति** । त्वया शाखिद्वितयं यदाभाजि भग्नं, तदा तद्गर्भतलाच्छाखिद्वितयान्तर्भागान्निरेयुषा निर्गतेन महती त्विड् यस्य तेन यक्षयुगेन स्तवैः स्तोत्रैर्भवानप्यभाजि सेवितः । अत्र भग्नं शाखिद्वितयं पुरुषरूपं गृहीत्वा प्रत्युपचकारेति प्रतीयते ॥ ७ ॥

**इहान्यभक्तोऽपि समेष्यति क्रमाद् भवन्तमेतौ खलु रुद्रसेवकौ ।**
**मुनिप्रसादाद् भवदङ्घ्रिमागतौ गतौ वृणानौ खलु भक्तिमुत्तमाम् ॥ ८ ॥**

इहेति । इह जगत्यन्येषां त्रिगुणद्विगुणमूर्तीनां ब्रह्मगिरिशादीनां भक्तः सेवकोऽपि क्रमादधिकारक्रमेण भवन्तं शुद्धसत्त्वमूर्तिं समेष्यति भजनाधिकारी भविष्यति खलु निश्चितम् । कुत इत्यत आह– एताविति । उत्तमां प्रेमलक्षणां भक्तिं वृणानौ प्रार्थयन्तौ ॥ ८ ॥

**ततस्तरूद्दारणदारुणारवप्रकम्पिसम्पातिनि गोपमण्डले ।**
**विलज्जितत्वज्जननीमुखेक्षिणा व्यमोक्षि नन्देन भवान् विमोक्षदः ॥ ९ ॥**

तत इति । तर्वोरुद्दारणं भञ्जनं तज्जनितेन दारुणेनारवेण प्रकम्पिसम्पातिनि क्वेदं किमिदमिति ससम्भ्रममागमनशीले सति बन्धनानुशयेन विलज्जितायास्त्वज्जनन्याः 'किं कृतं यशोदे! त्वया, अहो अविमृश्यकारिता भवत्या' इत्यभिप्रायगर्भं मुखेक्षिणा नन्देन भवान् व्यमोक्षि पाशबन्धनान्मोचितः ॥ ९ ॥

महीरुहोर्मध्यगतो बतार्भको हरेः प्रभावादपरिक्षतोऽधुना ।
इति ब्रुवाणैर्गमितो गृहं भवान् मरुत्पुराधीश्वर! पाहि मां गदात् ॥१०॥

महीति । महीरुहोर्वृक्षयोः । प्रभावः शक्तिः । अपरिक्षतोऽविकलाङ्गः । ब्रुवाणैर्नन्दादिभिरिति शेषः ॥ १० ॥

इति यमलार्जुनभञ्जनवर्णनम् अष्टचत्वारिंशं दशकम् ।

---

भवत्प्रभावाविदुरा हि गोपास्तरुप्रपातादिकमत्र गोष्ठे ।
अहेतुमुत्पातगणं विशङ्क्य प्रयातुमन्यत्र मनो वितेनुः ॥ १ ॥

भवदिति । भवत्प्रभावाविदुरा अविदितभवत्स्वरूपैश्वर्याः केवलं मर्त्यबुद्धयः तरुप्रपातादिकमहेतुत्वादुत्पातगणं दुर्निमित्तौघं विशङ्क्य ॥ १ ॥

तत्रोपनन्दाभिधगोपवर्यो जगौ भवत्प्रेरणयैव नूनम् ।
इतः प्रतीच्यां विपिनं मनोज्ञं वृन्दावनं नाम विराजतीति ॥ २ ॥

तत्रेति । तत्र तेषु गोपेषूपनन्दाभिधो गोपवर्य इति जगावुवाच । तत्तु भवत्प्रेरणयैव नूनं निश्चिनोमि ॥ २ ॥

बृहद्वनं तत् खलु नन्दमुख्या विधाय गौष्ठीनमथ क्षणेन ।
त्वदन्वितत्वज्जननीनिविष्टगरिष्ठयानानुगता विचेलुः ॥ ३ ॥

बृहदिति । नन्दमुख्या नन्दादयो गोपाः । यत्रस्थो भगवानेतावन्तं कालं क्रीडितवान्, तत् खलु बृहद्वनं नाम देशं गौष्ठीनं भूतपूर्वगोस्थानं विधाय कृत्वा बृहद्वनाख्यं पूर्वगोष्ठं विहायेत्यर्थः । त्वदन्वितेति । रामकृष्णान्वितयशोदारोहिणीनिविष्टमत एव गरिष्ठं महनीयं यानं शकटमनुगता गोपा विचेलुर्जग्मुः ॥ ३ ॥

अनोमनोज्ञध्वनिधेनुपालीखुरप्रणादान्तरतो वधूभिः ।
भवद्विनोदालपिताक्षराणि प्रपीय नाज्ञायत मार्गदैर्घ्यम् ॥ ४ ॥

अन इति । अनसः शकटस्य मनोज्ञो यो ध्वनिः, यश्च धेनुपाल्याः पशु-

समूहस्य खुरप्रणादः, तयोरन्तरतो मध्ये श्रूयमाणानि भवद्विनोदालपितेषु कलभाषणेष्वमृतमयानि अक्षराणि प्रपीय श्रोत्राञ्जलिभिरापीय मार्गदैर्घ्यं नाज्ञायत न विदितम् ॥ ४ ॥

**निरीक्ष्य बृन्दावनमीश! नन्दत्प्रसूनकुन्दप्रमुखद्रुमौघम् ।**
**अमोदथाः शाद्वलसान्द्रलक्ष्म्या हरिन्मणीकुट्टिमपुष्टशोभम् ॥ ५ ॥**

**निरीक्ष्येति** । नन्दन्ति समृद्धानि प्रसूनानि येषु तथाविधाः कुन्दप्रमुखा द्रुमौघा यस्मिन् । शाद्वलसान्द्रलक्ष्म्या हरिततृणनीरन्ध्रितस्थलशोभया हरिन्मणीकुट्टिमवदिन्द्रनीलमणिकुट्टिमवत् पुष्टशोभं संपूर्णशोभायुक्तम् । अमोदथाः सन्तुष्टोऽभूः ॥ ५ ॥

**नवाकनिर्व्यूढनिवासभेदेष्वशेषगोपेषु सुखासितेषु ।**
**वनश्रियं गोपकिशोरपालीविमिश्रितः †पर्यगलोकथास्त्वम् ॥ ६ ॥**

**नवाकेति** । नवाकनिर्व्यूढेषु नूतनतया रचितेषु निवासभेदेषु विशिष्टेषु भवनेषु । पर्यगलोकथाः परितो दृष्टवानसि ॥ ६ ॥

**अरालमार्गागतनिर्मलापां मरालकूजाकृतनर्मलापाम् ।**
**निरन्तरस्मेरसरोजवक्त्रां कलिन्दकन्यां समलोकयस्त्वम् ॥ ७ ॥**

**अरालेति** । मरालकूजाभिः कलहंसकूजितैः कृतनर्मलापामुच्चारितसरसवचनाम् । अरालेन कुटिलेन मार्गेणागता निर्मला आपो यस्याम् । निरन्तराणि नीरन्ध्रितानि स्मेराणि सरोजान्येव वक्त्रं यस्याः । कलिन्दकन्याम् अत एवोपभोगक्षमाम् ॥ ७ ॥

**मयूरकेकाशतलोभनीयं मयूखमालाशबलं मणीनाम् ।**
**विरिञ्चलोकस्पृशमुच्चशृङ्गैर्गिरिं च गोवर्धनमैक्षथास्त्वम् ॥ ८ ॥**

**मयूरेति** । मयूराणां केकाशतैः कलकलनिनादैर्लोभनीयं मनोहरं मणीनां

---

१. 'अर्धचन्द्राकारतया र' ग. पाठः. २. 'न्यां कालिन्दीमत' ख. पाठः.

---

† अन्वगादिवद् अञ्चूत्तरपदं पर्यगिति । परित इति तदर्थः ।

रत्नानां मयूखमालाभिः प्रभापटलैः शबलं विचित्रवर्णमुच्चैरुन्नतैः शृङ्गैः विरिञ्चलोकं सत्यलोकं स्पृशतीति तथा ॥ ८ ॥

**समं ततो गोपकुमारकैस्त्वं समन्ततो यत्र वनान्तमागाः ।**
**ततस्ततस्तां कुटिलामपश्यः कलिन्दजां रागवतीमिवैकाम् ॥ ९ ॥**

**सममिति** । ततो गोपकुमारकैः समं सह वनान्तं समन्ततः सर्वत्र यत्र यत्रागाः गतवानसि ततस्ततः तत्र तत्र कलिन्दजामेकामपश्यः । तत् कथं, कुटिलां वक्रमार्गेण तत्र तत्रागतामतस्त्वदनुसरणात् त्वयि रागवतीमिव ॥ ९ ॥

**तथाविधेऽस्मिन् विपिने पशव्ये समुत्सुको वत्सगणप्रचारे ।**
**चरन् सरामोऽथ कुमारकैस्त्वं समीरगेहाधिप! पाहि रोगात् ॥१०॥**

**तथेति** । पशव्ये पशुभ्यो हिते ॥ १० ॥

इति बृन्दावनगमनवर्णनम् ऊनपञ्चाशं दशकम् ।

---

**तरलमधुकृद्वृन्दे बृन्दावनेऽथ मनोहरे**
**पशुपशिशुभिः साकं वत्सानुपालनलोलुपः ।**
**हलधरसखो देव! श्रीमन्! विचेरिथ धारयन्**
**गवलमुरलीवेत्रं नेत्राभिरामतनुद्युतिः ॥ १ ॥**

**तरलेति** । तरलमधुकृद्वृन्दे चलितभृङ्गसमूहे । गवलं शृङ्गं मुरलीं वेणुं वेत्रं यष्टिं च धारयन् विचेरिथ सञ्चरणं कृतवान् ॥ १ ॥

**विहितजगतीरक्षं लक्ष्मीकराम्बुजलालितं**
**ददति चरणद्वन्द्वं बृन्दावने त्वयि पावने ।**
**किमिव न बभौ सम्पत्सम्पूरितं तरुवल्लरी-**
**सलिलधरणीगोत्रक्षेत्रादिकं कमलापते! ॥ २ ॥**

**विहितेति** । विहिता जगत्या भूम्या रक्षा येन । लक्ष्म्याः कराम्बुजाभ्यां

ललितं संवाहितम् । तर्वादिकं किमिव सम्पत्सम्पूरितं न बभौ शुशुभे तरवः पुष्पादिभिः सम्पद्भिः, वल्लर्यश्च, सलिलं पद्मादिभिः, धरणी सस्यादिभिः, गोत्रः पर्वतो रत्नादिभिः, क्षेत्रमाकरो हेमादिभिश्च सम्पूर्णं शुशुभ इत्यर्थः ॥ २ ॥

**विलसदुलपे कान्तारान्ते समीरणशीतले**
**विपुलयमुनातीरे गोवर्धनाचलमूर्धसु ।**
**ललितमुरलीनादः सञ्चारयन् खलु वात्सकं**
**क्वचन दिवसे दैत्यं वत्साकृतिं त्वमुदैक्षथाः ॥ ३ ॥**

**विलसदि**ति । विलसदुलपे शोभमानतृणविशेषयुक्ते कान्तारान्ते वनप्रदेशे, यमुनातरङ्गसङ्गिना समीरणेन शीतले विपुले पुलिनमयतया विस्तृते यमुनातीरे च वात्सकं वत्ससमूहम् । उदैक्षथा दृष्टवान् ॥ ३ ॥

**रभसविलसत्पुच्छं विच्छायतोऽस्य विलोकयन्**
**किमपि वलितस्कन्धं रन्ध्रप्रतीक्षमुदीक्षितम् ।**
**तमथ चरणे बिभ्रद् विभ्रामयन् मुहुरुच्चकैः**
**कुहचन महावृक्षे चिक्षेपिथ क्षतजीवितम् ॥ ४ ॥**

**रभसे**ति । रभसविलसत्पुच्छं वेगादितस्ततः सञ्चारितपुच्छं यथा भवति तथा विच्छायतो गच्छतोऽस्य वत्सासुरस्य किमपि वलितस्कन्धमीषत्तिर्यक्कृतग्रीवं, रन्ध्रप्रतीक्षमवसरप्रतिपालनरूपं च यदुदीक्षितमवलोकनं तद् विलोकयन् अथ मां हन्तुकामोऽयमिति निश्चित्य तं चरणे बिभ्रद् गृहीत्वोच्चकैर्वेगान्मुहुर्विभ्रामयन् विभ्रमणेनैव क्षतजीवितं कुहचन कस्मिंश्चिच्चिक्षेपिथ प्रक्षिप्तवान् ॥ ४ ॥

**निपतति महादैत्ये जात्या दुरात्मनि तत्क्षणं**
**निपतनजवक्षुण्णक्षोणीरुहक्षतकानने ।**
**दिवि परिमिलद्वृन्दा बृन्दारकाः कुसुमोत्करैः**
**शिरसि भवतो हर्षाद् वर्षन्ति नाम तदा हरे ! ॥ ५ ॥**

**निपततीति** । जात्या जन्मतः प्रभृत्यासुरभावेन दुरात्मनि दुष्टे निपतन-

जवेन क्षुण्णैश्चूर्णीकृतैः क्षोणीरुहवृक्षैः क्षतं नष्टं काननं येन । परिमिलन्ति समूहीभूतानि बृन्दानि गणा येषु ते बृन्दारका देवाः कुसुमोत्करैः सुरतरु-कुसुमनिकरैः ॥ ५ ॥

**सुरभिलतमा मूर्धन्यूर्ध्वं कुतः कुसुमावली**
**निपतति तवेत्युक्तो बालैः सहेलमुदैरयः ।**
**झटिति दनुजक्षेपेणोर्ध्वं गतस्तरुमण्डलात्**
**कुसुमनिकरः सोऽयं नूनं समेति शनैरिति ॥ ६ ॥**

**सुरभिले**ति । सुरभिलतमातिशयेन सुरभिला सौरभ्ययुक्ता कुसुमावली कुतस्तव मूर्धनि निपतति ऊर्ध्वमुपरिभागे वृक्षाभावात् कुत एतदिति बालैरुक्तः पृष्टस्त्वं सहेलं सलीलमुदैरय उक्तवान्, दनुजक्षेपेण वत्सासुरशवशरीरप्रक्षेपेण तद्वेगोत्थः कुसुमनिकरस्तरुमण्डलाद् वृक्षनिकरादूर्ध्वं गतः सोऽयं शनैः समेति मूर्ध्नि पतति नूनं तर्कयामि ॥ ६ ॥

**क्वचन दिवसे भूयो भूयस्तरे परुषातपे**
**तपनतनयापाथः पातुं गता भवदादयः ।**
**चलितगरुतं प्रेक्षामासुर्बकं खलु विस्मृतं**
**क्षितिधरगरुच्छेदे कैलासशैलमिवापरम् ॥ ७ ॥**

**क्वचने**ति । भूयः पुनः क्वचन दिवसे भूयस्तरे भूयिष्ठे परुषातपे ग्रीष्मकाले तपनतनयायां यमुनायां पाथो जलं पातुं भवदादयो गोपबालका बकं बकासुरं प्रेक्षामासुः दृष्टवन्तः । चलितगरुतं चलितपक्षम् । इन्द्रकर्तृके क्षितिधरगरुच्छेदे विस्मृतमच्छिन्नपक्षमपरं द्वितीयम् ॥ ७ ॥

**पिबति सलिलं गोपव्राते भवन्तमभिद्रुतः**
**स किल निगिलन्नग्निप्रख्यं पुनर्द्रुतमुद्वमन्[1] ।**
**दलयितुमगात्[2] त्रोट्याः कोट्या तदा तु भवान् विभो !**
**खलजनभिदाचुञ्चुश्चञ्चू प्रगृह्य ददार तम् ॥ ८ ॥**

१. 'द्रु' ग. पाठः. २. 'क्षणात्' ख. घ. पाठः.

**पिबतीति**। गोपानां व्राते समूहे । अभिद्रुतोऽभिधावन् भवन्तं निगिलन् ग्रसन् अग्निप्रख्यमग्निसदृशमत एव द्रुतमुद्वमन् पुनर्वमनानन्तरं त्रोट्याः चञ्च्वोः कोट्याग्रेण दलयितुं विदारयितुमगात् । खलजनभिदाचुञ्चुर्दुष्टनिग्रहेण प्रसिद्धो भवान् अधरोत्तरे चञ्चू प्रगृह्य तं ददार निगृहीतवान् ॥ ८ ॥

**सपदि सहजां सन्द्रष्टुं वा मृतां खलु पूतना-**
**मनुजमघमप्यग्रे गत्वा प्रतीक्षितुमेव वा ।**
**शमननिलयं याते तस्मिन् बके सुमनोगणे**
**किरति सुमनोबृन्दं बृन्दावनाद् गृहमैयथाः ॥ ९ ॥**

**सपदीति** । अग्रे पूर्वं गत्वाघमघासुरं प्रतीक्षितुं प्रतिपालयितुम् । तस्मिन्नघपूतनाज्येष्ठे बकासुरे शमननिलयं यमसदनं याते सति सुमनसां देवानां गणे सुमनसां पुष्पाणां बृन्दं समूहं किरति वर्षति सत्यैयथा अगच्छः ॥ ९ ॥

**ललितमुरलीनादं दूरान्निशम्य वधूजनै-**
**स्त्वरितमुपगम्यारादारूढमोदमुदीक्षितः ।**
**जनितजननीनन्दानन्दः समीरणमन्दिर-**
**मथितवसते! शौरे! दूरीकुरुष्व ममामयान् ॥ १० ॥**

**ललितेति** । ललितमतिसुन्दरं मुरलीनादं वेणुनादं निशम्य दूरादुदीक्षित उन्नमितवदनं वीक्षितः पुनस्त्वरितमुपगम्य प्रस्थाय तत्समीपं गत्वारात् समीपेऽङ्गप्रत्यङ्गदर्शनादारूढमोदमुदीक्षितः जनित उत्पादितो जननीनन्दयोरानन्दो येन ॥ १० ॥

इति वत्सासुरवधवर्णनं बकासुरवधवर्णनं च

पञ्चाशं दशकम् ।

---

**कदाचन व्रजशिशुभिः समं भवान्**
**वनाशने विहितमतिः प्रगेतराम् ।**
**समावृतो बहुतरवत्समण्डलैः**
**सतेमनैर्निरगमदीश! जेमनैः ॥ १ ॥**

**कदाचनेति** । प्रगेतरामुषस्यासन्ने सतेमनैः सव्यञ्जनैर्जेमनैरोदनैः ॥ १ ॥

**विनिर्यतस्तव चरणाम्बुजद्वया-**
**दुदञ्चितं त्रिभुवनपावनं रजः ।**
**महर्षयः पुलकधरैः कलेबरै-**
**रुदूहिरे धृतभवदीक्षणोत्सवाः ॥ २ ॥**

**विनिर्यत** इति । विनिर्यतो विनिर्गच्छतः । उदञ्चितं पतितं त्रिभुवनपावनं जगतां पापशोधकम् । पुलकधरैरिति भक्त्यनुभावः । उदूहिरे धृतवन्तः ॥२॥

**प्रचारयत्यविरलशाद्वले तले**
**पशून् विभो! भवति समं कुमारकैः ।**
**अघासुरो न्यरुणदघाय वर्तनीं**
**भयानकः सपदि शयानकाकृतिः ॥ ३ ॥**

**प्रचारयतीति** । अविरलशाद्वले तृणभूयिष्ठे तले प्रदेशे । अघाय भवतो भवन्नाथानां च ग्रसनरूपमघमपराधं कर्तुं, परमार्थतस्तु भवभयप्रदमघं दुरितं त्यक्तुं वर्तनीं मार्गं न्यरुणद् रुरोध । शयानकाकृतिरजगररूपः ॥ ३ ॥

**महाचलप्रतिमतनोर्गुहानिभ-**
**प्रसारितप्रथितमुखस्य कानने ।**
**मुखोदरं विहरणकौतुकाद् गताः**
**कुमारकाः किमपि विदूरगे त्वयि ॥ ४ ॥**

**महाचलेति** । कुमारका विवेकरहितास्त्वयि किमपि किञ्चिद् विदूरगे दूरस्थे सति कानने विहरणकौतुकात् तस्य मुखोदरमास्यं गताः प्रविष्टाः । कथमेतद्, महाचलप्रतिमतनोः पर्वतगुहानिभं प्रसारितमास्तृतं प्राथितं विस्तृतं मुखमास्यं यस्य, अतः अजगरतनोर्महाचलभ्रान्त्या तन्मुखस्याचलगुहाभ्रान्त्या चेत्यर्थः ॥ ४ ॥

---

१. 'नां गोपगोपीनां च' ख. ग. पाठः.

**प्रमादतः प्रविशति पन्नगोदरं**
**क्वथत्तनौ पशुपकुले सवात्सके ।**
**विदन्निदं त्वमपि विवेशिथ प्रभो!**
**सुहृज्जनं विशरणमाशु रक्षितुम् ॥ ५ ॥**

**प्रमादत** इति । क्वथत्तनौ दह्यमानशरीरे सवात्सके वत्ससमूहसहिते । त्वमपीदमघासुरचेष्टितं विदन् जानन् ॥ ५ ॥

**गलोदरे विपुलितवर्ष्मणा त्वया**
**महोरगे लुठति निरुद्धमारुते ।**
**द्रुतं भवान् विदलितकण्ठमण्डलो**
**विमोचयन् पशुपपशून् विनिर्ययौ ॥ ६ ॥**

**गलोदर** इति । विपुलितवर्ष्मणा वर्धितशरीरेण त्वया निरुद्धो मारुतः प्राणवायुर्यस्य । अत एव प्राणनिरोधाल्लुठति इतस्ततो वेष्टमाने सति विदलितं विदारितं कण्ठमण्डलं येन स भवांस्तेन प्राणनिर्गममार्गेण पशुपान् पशूंश्च विमोचयन् बहिर्निर्गमयन् स्वयमपि विनिर्ययौ ॥ ६ ॥

**क्षणं दिवि त्वदुपगमार्थमास्थितं**
**महासुरप्रभवमहो महो महत् ।**
**विनिर्गते त्वयि तु निलीनमञ्जसा**
**नभःस्थले ननृतुरथो जगुः सुराः ॥ ७ ॥**

**क्षणमिति** । त्वदुपगमार्थं त्वन्निर्गमनार्थं त्वयि प्रवेष्टुं वा क्षणं दिव्याकाश आस्थितं महासुरप्रभवमघासुरशरीरान्निर्गतं महद् विपुलं महः सूक्ष्मशरीरस्यापि त्यागेन परिच्छेदकाभावादत्युज्ज्वलं तेजःपुञ्जं त्वयि ज्योतिषि ज्योतिरिव निलीनम् । अहो द्विषन्नप्यघासुरो भवन्तमन्तःकृत्वा मृतोऽतस्तत्क्षणं तत्फलं सायुज्याख्यं मोक्षं सर्वलोकसमक्षं प्राप्तवान् । अहो भक्तवात्सल्यं भवत इति भावः ॥ ७ ॥

सविस्मयैः कमलभवादिभिः सुरै-
रनुद्रुतस्तदनु गतः कुमारकैः ।
दिने पुनस्तरुणदशामुपेयुषि
स्वकैर्भवानतनुत भोजनोत्सवम् ॥ ८ ॥

**सविस्मयैरि**ति । अनुद्रुतो व्योममार्गेणानुगतः दिने तरुणदशामुपेयुषि मध्याह्ने प्राप्ते सति भोजनोत्सवं वनाशनकौतुकम् ॥ ८ ॥

विषाणिकामपि मुरलीं नितम्बके
निवेशयन् कबलधरः कराम्बुजे ।
प्रहासयन् कलवचनैः कुमारकान्
बुभोजिथ त्रिदशगणैर्मुदा नुतः ॥ ९ ॥

**विषाणिकामि**ति । विषाणिकां शृङ्गं, मुरलीं वेणुं, नितम्बके कटिप्रदेशे पीतपटान्तरे ॥ ९ ॥

सुखाशनं त्विह तव गोपमण्डले
मखाशनात् प्रियमिव देवमण्डले ।
इति स्तुतस्त्रिदशवरैर्जगत्प्रभो!
मरुत्पुरीनिलय! गदात् प्रपाहि माम् ॥ १० ॥

**सुखाशनमि**ति । गोपमण्डले सुखाशनं देवमण्डले मखाशनाद् यज्ञभागभोजनात् प्रियमिव त्रिदशवरैर्ब्रह्मादिभिरिति स्तुतः ॥ १० ॥

इत्यघासुरवधवर्णनम् एकपञ्चाशं दशकम् ।

---

अन्यावतारनिकरेष्वनिरीक्षितं ते
भूमातिरेकमभिवीक्ष्य तदाघमोक्षे ।
ब्रह्मा परीक्षितुमनाः स परोक्षभावं
निन्येऽथ वत्सकगणान् प्रवितत्य मायाम् ॥ १ ॥

अन्येति । अन्यावतारनिकरेषु नृसिंहादिष्वप्यनिरीक्षितमदृष्टं भूमातिरेकमैश्वर्यातिशयम् । परीक्षितुमना इतोऽप्यैश्वर्यातिशयं द्रष्टुकामः प्रवितत्य प्रयुज्य । परोक्षभावमन्तर्धानम् ॥ १ ॥

**वत्सानवीक्ष्य विवशे पशुपोत्करे ता-**
**नानेतुकाम इव धातृमतानुवर्ती ।**
**त्वं सामिभुक्तकबलो गतवांस्तदानीं**
**भुक्तांस्तिरोधित सरोजभवः कुमारान् ॥ २ ॥**

**वत्सानिति** । धातुर्मतं भूमातिरेकदर्शनं तदनुवर्ती तद्दर्शनार्थीत्यर्थः । सामिभुक्तकबलोऽर्धभुक्तपाणिकबलः अहमेव वत्सानानेष्यामीति भुञ्जानान् बालकानाख्याय तानानेतुकाम इव, नानेतुकामः, किन्तु धातृमतानुवर्तनार्थं गतवांस्त्वम् । तदानीं श्रीकृष्णे दूरस्थे सति सरोजभवो ब्रह्मा भुक्तान् भुञ्जानान् तिरोधित तिरस्कृतवान् ॥ २ ॥

एवं वत्सकवत्सपेषु ब्रह्मणा तिरस्कृतेष्वेकाकी भगवान् सायमेतैर्विना मम व्रजप्रवेशे सति गोगोपीनां स्वात्मजादर्शनजनितः खेदः स्याद्, एतान् ब्रह्मणोऽपहृत्य गमने ब्रह्मणोऽपि खेद इति विचिन्त्य तदुभयाभावाय स्वमायया स्वेनैव सर्वं सम्पादितवानित्याह —

**वत्सायितस्तदनु गोपगणायितस्त्वं**
**शिक्यादिभाण्डमुरलीगवलादिरूपः ।**
**प्राग्वद् विहृत्य विपिनेषु चिराय सायं**
**त्वं माययाथ बहुधा व्रजमाययाथ ॥ ३ ॥**

**वत्सायित** इति । तदनु ब्रह्मणा वत्सवत्सपसमूहे तिरस्कृते सति त्वं मायया बहुधा सर्वस्वरूपो भूतः वत्सायितो वत्सा इवाचरन् गोपगणायितः शिक्यादिरूपश्च चिराय चिरं विपिनेषु प्राग्वद् विहृत्याथ सायं सन्ध्यायां व्रजमाययाथागतवान् ॥ ३ ॥

त्वामेव शिक्यगवलादिमयं दधानो
भूयस्त्वमेव पशुवत्सकबालरूपः ।
गोरूपिणीभिरपि गोपवधूमयीभि-
रासादितोऽसि जननीभिरतिप्रहर्षात् ॥ ४ ॥

त्वामिति । भूयः पुनः पशुवत्सकबालरूपस्त्वं शिक्यगवलादिमयं त्वामेव दधानः । गोरूपिणीभिरिति । गोरूपिणीभिर्जननीभिः पशुवत्सरूपस्त्वमतिप्रहर्षातिशयेन वात्सल्यादासादितः स्वं स्वं वत्सं मत्वा गावस्त्वां सहुङ्कारमौधसं पयोऽपाययन् । तथा गोपवधूमयीभिर्जननीभिर्गोपबालकरूपस्त्वमासादितोऽसि ता अपि स्वं स्वं सुतं मत्वा त्वामङ्कारोपणाश्लेषस्तनदानादि चक्रुरित्यर्थः ॥ ४ ॥

ननु गोगोपीनां वत्सवत्सपबालेष्वेवमतिप्रहर्षे को हेतुरित्याशङ्क्य सर्वोऽप्यात्मनि स्निह्यति । अन्ये हि तदर्थं प्रियाः । आत्मा च विष्णुः कृष्णः । अतस्तद्रूपेषु पुत्रेषु प्रेमाधिरभूदिति परिहरन्नाह—

जीवं हि कञ्चिदभिमानवशात् स्वकीयं
मत्वा तनूज इति रागभरं वहन्त्यः ।
आत्मानमेव तु भवन्तमवाप्य सूनुं
प्रीतिं ययुर्न कियतीं वनिताश्च गावः ॥ ५ ॥

जीवमिति । कञ्चित् स्वप्रारब्धकर्मफलभोगायोद्यतं जीवमात्मत्वेनाभिमतं स्थूलं सूक्ष्मं वा शरीरमभिमानवशान्ममत्वारोपवशेन तनूजो मम पुत्र इति स्वकीयं मत्वा रागभरं वहन्त्यो भवन्ति तन्मातरः । हि यस्मादित्थंभावेऽप्येतादृशो रागः,[3] विशेषे सति किमुच्यत इत्याह—आत्मानमिति । आत्मानमहम्प्रत्यये नेदमंशरूपं भवन्तं श्रीकृष्णमेव सूनुमवाप्य वनिता गोप्यो गावश्च न कियतीं प्रीतिं ययुः अतिमहतीं प्रीतिमवाप्ता एवेत्यर्थः ॥ ५ ॥

---

१. 'ह्या' ख. ग. पाठः. २. 'कृष्णस्तु सर्वेषामात्मा । अ' क पाठः. ३. 'देव तस्मादात्मानमहम्प्रत्यये' क. ख. पाठः.

**एवं प्रतिक्षणविजृम्भितहर्षभार-**
**निश्शेषगोपगणलालितभूरिमूर्तिम् ।**
**त्वामग्रजोऽपि बुबुधे किल वत्सरान्ते**
**ब्रह्मात्मनोरपि महान् युवयोर्विशेषः ॥ ६ ॥**

**एवमिति** । प्रतिक्षणं विजृम्भितो वर्धितो हर्षभारः सन्तोषातिशयो येषां तेषां निश्शेषाणां गोपानां गणेन लालितभूरिमूर्तिं तत्तद्गोप[1]बालकरूपं त्वामग्रजः श्रीबलभद्रोऽपि (त्वद्भूरिमूर्तित्वं?) वत्सरान्ते संवत्सरावसाने बुबुधे । ब्रह्मात्मनोर्ब्रह्मस्वरूपयोरपि युवयोस्त्वं निष्कलं ब्रह्म अग्रजः सकलमिति महान् विशेषः ॥ ६ ॥

**वर्षावधौ नवपुरातनवत्सपालान्**
**दृष्ट्वा विवेकमसृणे द्रुहिणे विमूढे ।**
**प्रादीदृशः प्रतिनवान् मकुटाङ्गदादि-**
**भूषांश्चतुर्भुजयुजः सजलाम्बुदाभान् ॥ ७ ॥**

**वर्षावधाविति** । वर्षावधौ संवत्सरावसाने नवान् श्रीकृष्णमयान् पुरातनान् स्वेन तिरस्कृतान् वत्सान् वत्सपालांश्च दृष्ट्वा द्रुहिणे ब्रह्मणि विमूढे एते सत्या अन्ये मायामया इति सम्यग्ज्ञानरहिते विवेकमसृणे विचारयितुमप्यसमर्थे सति प्रतिनवान् मायामयान् मकुटाङ्गदादिविशिष्टान् प्रादीदृशः प्रदर्शयामासिथ ॥ ७ ॥

**प्रत्येकमेव कमलापरिलालिताङ्गान्**
**भोगीन्द्रभोगशयनान् नयनाभिरामान् ।**
**लीलानिमीलितदृशः सनकादियोगि-**
**व्यासेवितान् कमलभूर्भवतो ददर्श ॥ ८ ॥**

**प्रत्येकमिति** । लीलानिमीलितदृशोऽङ्गीकृतयोगनिद्रान् भवतो विष्णून् ददर्श ॥ ८ ॥

---

१. 'द्गोपगो' ख. ग. पाठः.

नारायणाकृतिमसङ्ख्यतमां निरीक्ष्य
सर्वत्र सेवकमपि स्वमवेक्ष्य धाता।
मायानिमग्नहृदयो विमुमोह याव-
देको बभूविथ तदा कबलार्धपाणिः ॥ ९ ॥

नारायणेति। सेवकं स्वमात्मानम्। मायायां निमग्नं मूढं हृदयं यस्य। यावद् विमुमोहाचेतनप्रायोऽभूत्, तदा त्वं बहुरूपं संहृत्यैकः कबलार्धपाणिः श्रीकृष्णरूपेण वत्सान्वेषणपरो बभूविथ ॥ ९ ॥

नश्यन्मदे तदनु विश्वपतिं मुहुस्त्वां
नत्वा च नूतवति धातरि धाम याते।
पोतैः समं प्रमुदितैः प्रविशन्निकेतं
वातालयाधिप! विभो! परिपाहि रोगात् ॥ १० ॥

नश्यदिति। ¶नूतवति स्तुतवति सति धाम सत्यलोकं याते गते च सति पोतैर्वत्सपालैः समं सह निकेतं गृहं प्रविशन् ॥ १० ॥

इति ब्रह्मकृतवत्सापहारवर्णनं भगवन्मायया ब्रह्मणो मोहवर्णनं च

द्विपञ्चाशं दशकम्।

---

अतीत्य बाल्यं जगतां पते! त्वमुपेत्य पौगण्डवयो मनोज्ञम्।
उपेक्ष्य वत्सावनमुत्सवेन प्रावर्तथा गोगणपालनायाम् ॥ १ ॥

अतीत्येति। बाल्यं पञ्च वर्षाणि। पौगण्डवयो द्वितीयपञ्चकं मनोज्ञं बाल्यादतिमोहनं तदुपेत्य प्राप्य वत्सानामवनं रक्षणमुपेक्ष्योत्सवेन कौतुकेन गोगणपालनायां प्रावर्तथाः प्रवृत्तोऽभूः ॥ १ ॥

---

¶ 'णू स्तवने' तुदादिः।

**उपक्रमस्यानुगुणैव सेयं मरुत्पुराधीश! तव प्रवृत्तिः ।**
**गोत्रापरित्राणकृतेऽवतीर्णस्तदेव देवारभथास्तदा यत् ॥ २ ॥**

**उपक्रमस्येति** । उपक्रमस्यारम्भस्यानुगुणा योग्या । गोत्रापरित्राणकृते भूमेः रक्षणार्थम् । तदेव $गोत्रापरित्राणं गोरक्षणम् ॥ २ ॥

**कदापि रामेण समं वनान्ते वनश्रियं वीक्ष्य चरन् सुखेन ।**
**श्रीदामनाम्नः स्वसखस्य वाचा मोदादगा धेनुककाननं त्वम् ॥ ३ ॥**

**कदेति** । धेनुककाननं धेनुकासुरनिवासस्थानं तालवनम् ॥ ३ ॥

**उत्तालतालीनिवहे त्वदुक्त्या बलेन धूतेऽथ बलेन दोर्भ्याम् ।**
**मृदुः खरश्चाभ्यपतत् पुरस्तात् फलोत्करो धेनुकदानवोऽपि ॥ ४ ॥**

**उत्तालेति** । उत्तालेऽतिमहति तालीनिवहे तालवृक्षसमूहे बलेन शक्त्या दोर्भ्यां धूते चालिते पुरस्तात् प्रथमं मृदुरपरिणतः खरः परिणतः फलोत्करः फलसमूहोऽभ्यपतत् सम्भूयापतत् । अनन्तरं धेनुकदानवोऽपि तालफलपतनरवज-नितक्रोधेन खररूप्यभ्यपतदभ्यधावत् ॥ ४ ॥

**समुद्यतो धैनुकपालनेऽहं वधं कथं धैनुकमद्य कुर्वे ।**
**इतीव मत्वा ध्रुवमग्रजेन सुरौघरोद्धारमजीघतस्त्वम् ॥ ५ ॥**

**समुद्यत** इति । धैनुकस्य धेनुसमूहस्य पालने समुद्यत उत्साही धैनुकं वधं धेनुकासुरवधमिति प्रकृतोऽर्थः । कथं कुर्वे न करोमि ध्रुवं निश्चितमिति मत्वा निश्चित्येवाग्रजेन तमजीघतो घातितवानसि ॥ ५ ॥

**तदीयभृत्यानपि जम्बुकत्वेनोपागतानग्रजसंयुतस्त्वम् ।**
**जम्बूफलानीव तदा निरास्थस्तालेषु खेलन् भगवन्! निरास्थः ॥ ६ ॥**

**तदीयेति** । जम्बुकत्वेनोपागतान् जम्बुकाः क्रोष्टारो भूत्वागतान् । निरास्थ आस्थारहितः सन् निरास्थो निरसनं कृतवान् निगृहीतवान् ॥ ६ ॥

---

$ 'इनित्रकट्यचश्च' (४-२-५१) इति त्रप्रत्ययः ।

**विनिघ्नति त्वय्यथ जम्बुकौघं सनामकत्वाद्वरुणस्तदानीम् ।**
**भयाकुलो जम्बुकनामधेयं श्रुतिप्रसिद्धं व्यधितेति मन्ये ॥ ७ ॥**

विनिघ्नतीति । सनामकत्वात् स्वस्यापि जम्बुकनामकत्वात् ॥ ७ ॥

**तवावतारस्य फलं मुरारे! सञ्जातमद्येति सुरैर्नुतस्त्वम् ।**
**सत्यं फलं जातमिहेति हासी बालैः समं तालफलान्यभुङ्क्थाः ॥ ८ ॥**

तवेति । अवतारस्य फलं धेनुकनिग्रहः । तदद्य सञ्जातमिति सुरैर्नुतस्त्वं तव स्तुतिश्रवणात् सत्यं यथार्थवादिनो देवा इह फलं तालफलजातं जातम् ॥ ८ ॥

**मधुद्रवस्रुन्ति बृहन्ति तानि फलानि मेदोभरभृन्ति भुक्त्वा ।**
**तृप्तैश्च दृप्तैर्भवनं फलौघं वहद्भिरागाः खलु बालकैस्त्वम् ॥ ९ ॥**

मधुद्रवेति । मधुद्रवः स्रवत्येभ्य इति तथा मेदोभरभृन्ति अन्तःसारवन्ति तालफलानि भुक्त्वा तृप्तैरत एव दृप्तैरहङ्कृतैर्बन्धुभ्यो दातुं फलौघं स्कन्धोपनेयं भवनं वहद्भिः प्रापयद्भिः ॥ ९ ॥

**हतो हतो धेनुक इत्युपेत्य फलान्यदद्भिर्मधुराणि लोकैः ।**
**जयेति जीवेति नुतो विभो! त्वं मरुत्पुराधीश्वर! पाहि रोगात् ॥ १० ॥**

हत इति । हर्षातिशयेन हतो हत इति द्विरुक्तिः ॥ १० ॥

**इति धेनुकासुरवधवर्णनं त्रिपञ्चाशं दशकम् ।**

---

अथ दशकत्रयेण कालियमर्दनरूपं भगवच्चरितं कथयन् स्तौति—

**त्वत्सेवोत्कः सौभरिर्नाम पूर्वं कालिन्द्यन्तर्द्वादशाब्दं तपस्यन् ।**
**मीनव्राते स्नेहवान् भोगलोले तार्क्ष्यं साक्षादैक्षताग्रे कदाचित् ॥ १ ॥**

त्वदिति । त्वत्सेवायामुत्कः उत्सुकः सौभरिर्नाम मुनिर्भोगलोले इतरेतरस्नेहसुखपरे । साक्षात् प्रत्यक्षत ऐक्षत दृष्टवान् ॥ १ ॥

**त्वद्वाहं तं सक्षुधं तृक्षसूनुं मीनं कञ्चिज्जक्षतं लक्षयन् सः ।**
**तप्तश्चित्ते शप्तवानत्र चेत् त्वं जन्तून् भोक्ता जीवितं चापि मोक्ता ॥ २ ॥**

त्वदिति । त्वद्वाहं तव वाहनभूतं तृक्षसूनुं तार्क्ष्यं जक्षतं भक्षयन्तं लक्षयन् पश्यन् चित्ते तप्तः सन्तापवान् अत्र कालिन्दीह्रदे त्वं जन्तून् मत्स्यादीन् भोक्ता भक्षयिष्यसि चेद् जीवितं मोक्ता मरिष्यसि ॥ २ ॥

**तस्मिन् काले कालियः क्ष्वेलदर्पात् सर्पारातेः कल्पितं भागमश्नन् ।**
**तेन क्रोधात् त्वत्पदाम्भोजभाजा पक्षाक्षिप्तस्तद्दुरापं पयोऽगात् ॥ ३ ॥**

तस्मिन्निति । क्ष्वेलदर्पाद् विषवीर्यमदात् सर्पैरात्मरक्षणार्थं कल्पितं भागं मासिकं बलिमश्नन् त्वत्पदाम्भोजं भजतीति तथा । अतः पक्षेण सव्येन क्षिप्तो विवशीकृतः तद्दुरापं सर्पारातिदुरापं पयः कालिन्दीह्रदमगात् ॥ ३ ॥

**घोरे तस्मिन् सूरजानीरवासे तीरे वृक्षा विक्षताः क्ष्वेलवेगात् ।**
**पक्षिव्राताः पेतुरभ्रे पतन्तः कारुण्यार्द्रं त्वन्मनस्तेन जातम् ॥ ४ ॥**

घोर इति । घोरे क्रूरकर्मणि तस्मिन् कालिये सूरजानीरवासे कालिन्दीह्रदनिवासिनि सति विक्षता विषाग्निज्वालावलीढतया नष्टाः । अभ्रे उपरिभागे । तेन, यतो न केवलं तज्जलोपभोगाभावः प्रत्युत सर्वलोकविनाशश्च, तेनेत्यर्थः ॥ ४ ॥

**काले तस्मिन्नेकदा सीरपाणिं मुक्त्वा याते यामुनं काननान्तम् ।**
**त्वय्युद्दामग्रीष्मभीष्मोष्मतप्ता गोगोपाला व्यापिबन् क्ष्वेलतोयम् ॥५॥**

काल इति । सीरपाणिं मुक्त्वा रामं विना यामुनं यमुनासम्बन्धिनं काननान्तं वनप्रदेशं याते त्वयि । उद्दामेति । प्रवृद्धग्रीष्मकालोत्थेन भीष्मेणोष्मणा तप्ताः क्ष्वेलतोयं विषजलं व्यापिबन् यथासुखं पपुः ॥ ५ ॥

**नश्यज्जीवान् विच्युतान् क्ष्मातले तान् विश्वान् पश्यन्नच्युत! त्वं दयार्द्रः ।**
**प्राप्योपान्तं जीवयामासिथ द्राक् पीयूषाम्भोवर्षिभिः श्रीकटाक्षैः ॥ ६ ॥**

**नश्यदिति** । नश्यज्जीवान् म्रियमाणान् विच्युतान् पतितान् विश्वान् सर्वान् ॥ ६ ॥

**किं किं जातो हर्षवर्षातिरेकः सर्वाङ्गेष्वित्युत्थिता गोपसङ्घाः ।**
**दृष्ट्वाग्रे त्वां त्वत्कृतं तद् विदन्तस्त्वामालिङ्गन् दृष्टनानाप्रभावाः ॥ ७ ॥**

**किमिति** । गोपसङ्घास्ततः किं किमिदमहो सर्वाङ्गेषु हर्षवर्षातिरेकः परमानन्दपीयूषाप्लवो जात इति स्वप्नादिवोत्थिताः प्रागप्यघपूतनामोक्षादिषु दृष्टनानाप्रभावतया इदं विषजलाद् रक्षणं त्वत्कृतं विदन्तस्त्वामालिङ्गन् आश्लेषं कृतवन्तः ॥ ७ ॥

**गावश्चैवं लब्धजीवाः क्षणेन स्फीतानन्दास्त्वां च दृष्ट्वा पुरस्तात् ।**
**द्रागावव्रुः सर्वतो हर्षबाष्पं व्यामुञ्चन्त्यो मन्दमुद्यन्निनादाः ॥ ८ ॥**

**गाव** इति । गावश्चैवमुत्थिता द्राग् झटित्यावव्रुः परिवार्य स्थिताः ॥ ८ ॥

**रोमाञ्चोऽयं सर्वतो नः शरीरे भूयस्यन्तः काचिदानन्दमूर्छा ।**
**आश्चर्योऽयं क्ष्वेलवेगो मुकुन्देत्युक्तो गोपैर्नन्दितो वन्दितोऽभूः ॥ ९ ॥**

**रोमाञ्च** इति । हे मुकुन्द! अयं क्ष्वेलवेगो विषवेग आश्चर्यः सर्पदष्टानामदृष्टपूर्वः । नोऽस्माकमन्तर्हृदि काचिदपरिच्छेद्यानन्दस्य निरतिशयसुखस्य मूर्छा वृद्धिः भूयस्यतिनिबिडा । कथं ज्ञायते, शरीरे सर्वतः सर्वत्र रोमाञ्चोऽयं, पश्यतु भवानिति भावः ॥ ९ ॥

**एवं भक्तान् मुक्तजीवानपि त्वं मुग्धापाङ्गैरस्तरोगांस्तनोषि ।**
**तादृग्भूतस्फीतकारुण्यभूमा रोगात् पाया वायुगेहाधिवास! ॥ १० ॥**

**एवमिति** । मुक्तजीवान् मृतानप्यस्तरोगान् लब्धजीवांस्त्यक्तशोकांश्च तनोषि ॥ १० ॥

इति कालियमर्दने विषजलेन मृतानां गोगोपानामुज्जीवनवर्णनं

**चतुष्पञ्चाशं दशकम् ।**

---

**अथ वारिणि घोरतरं फणिनं प्रतिवारयितुं कृतधीर्भगवन्! ।**
**द्रुतमारिथ तीरगनीपतरुं विषमारुतशोषितपर्णचयम् ॥ १ ॥**

अथेति । प्रतिवारयितुं कृतधीर्निश्चितबुद्धिर्नीपतरुं कदम्बवृक्षमारिथ प्राप्तवान् ॥ १ ॥

**अधिरुह्य पदाम्बुरुहेण च तं नवपल्लवतुल्यमनोज्ञरुचा ।**
**ह्रदवारिणि दूरतरं न्यपतः परिघूर्णितघोरतरङ्गगणे ॥ २ ॥**

अधिरुह्येति । नवपल्लवतुल्यमनोज्ञरुचेत्यनेन नीपतरुर्भगवत्स्पर्शात् त्यक्तविषदोषः सञ्जातनवपल्लवश्च जात इत्यधःस्थितानां प्रतीतिर्द्योत्यते[1] ॥ २ ॥

**भुवनत्रयभारभृतो भवतो गुरुभारविकम्पिविजृम्भिजला ।**
**परिमज्जयति स्म धनुःशतकं तटिनी झटिति स्फुटघोषवती ॥ ३ ॥**

भुवनेति । भुवनत्रयमेव भारस्तमुदरे बिभर्तीति तथा, तादृशस्य भवतो गुरुभारेण विकम्पि कम्पनशीलं विजृम्भि वर्धनशीलं च जलं यस्यां तथाभूता तटिनी नदी झटिति धनुःशतप्रमाणं परिमज्जयति स्म प्लावयामास ॥ ३ ॥

**अथ दिक्षु विदिक्षु परिक्षुभितभ्रमितोदरवारिनिनादभरैः ।**
**उदकादुदगादुरगाधिपतिस्त्वदुपान्तमशान्तरुषान्धमनाः ॥ ४ ॥**

अथेति । दिक्ष्वष्टसु विदिक्ष्ववान्तरेषु (?) च परिक्षुभितं परिचलितं भ्रमितं सञ्जातावर्तमुदरमन्तर्भागो यस्य तादृशं यद् वारि तस्य निनादभरैर्हेतुभूतैरशान्तरुषान्धं मनो यस्य तादृशः सन् त्वदुपान्तं त्वत्समीपमुदगाद् उन्मज्ज्य प्राप्तवान् ॥ ४ ॥

**फणशृङ्गसहस्रविनिःसृमरज्वलदग्निकणोग्रविषाम्बुधरम् ।**
**पुरतः फणिनं समलोकयथा बहुशृङ्गिणमञ्जनशैलमिव ॥ ५ ॥**

फणेति । फणशृङ्गसहस्राद् विनिःसृमरं क्षरणशीलं ज्वलदग्निकणमत एवोग्रं क्रूरं विषाम्बु विषद्रवं धरत इति तथा ॥ ५ ॥

---

१. 'प्रसिद्धिर्द्यो' ख. पाठः.

**ज्वलदक्षिपरिक्षरदुग्रविषश्वसनोष्मभरः स महाभुजगः ।**
**परिदश्य भवन्तमनन्तबलं समवेष्टयदस्फुटचेष्टमहो ॥ ६ ॥**

ज्वलदिति । ज्वलदक्षि यथा भवति तथा परिक्षरन्नुग्रविषश्वसनस्योष्मभरो यस्य सः परिदश्य मर्मसु दष्ट्वा समवेष्टयत् तदास्फुटचेष्टमदृश्यव्यापारम् ॥

**अविलोक्य भवन्तमथाकुलिते तटगामिनि बालकधेनुगणे ।**
**व्रजगेहतलेऽप्यनिमित्तशतं समुदीक्ष्य गता यमुनां पशुपाः ॥ ७ ॥**

अविलोक्येति । अनिमित्तशतं दुर्निमित्तौघम् । पशुपा नन्दादयः ॥ ७ ॥

**अखिलेषु विभो! भवदीयदशामवलोक्य जिहासुषु जीवभरम् ।**
**फणिबन्धनमाशु विमुच्य जवादुदगम्यत हासजुषा भवता ॥ ८ ॥**

अखिलेष्विति । जीवभरं भवद्विरहे वोढुमशक्यान् प्राणान् जिहासुषु विहातुमिच्छत्सु तेभ्य आत्मकुशलज्ञापनार्थं हासजुषा भवतोदगम्यतोत्थितम् ॥८॥

**अधिरुह्य ततः फणिराजफणान् ननृते भवता मृदुपादरुचा ।**
**कलशिञ्जितनूपुरमञ्जुमिलत्करकङ्कणसंकुलसंक्वणितम् ॥ ९ ॥**

अधिरुह्येति । ततः फणिराजस्य कालियस्य फणानधिरुह्य भवता ननृते नृत्तमकारि । मृद्वी फणामणिरञ्जिततया स्निग्धा पादरुग् यस्य । कलशिञ्जितौ नूपुरौ यस्मिन् तत् कलशिञ्जितनूपुरं मञ्जु मनोज्ञं च तालव्यापृततया मिलतोः करयोः कङ्कणसंकुलस्य संक्वणितं यस्मिन्निति नर्तनक्रियाविशेषणम् ॥ ९ ॥

**जहृषुः पशुपास्तुतुषुर्मुनयो ववृषुः कुसुमानि सुरेन्द्रगणाः ।**
**त्वयि नृत्यति मारुतगेहपते! परिपाहि स मां त्वमदान्तगदात् ॥ १० ॥**

जहृषुरिति । जहृषुर्हृष्टाः । तुतुषुस्तुष्टाः । अदान्तादविरतं वर्धमानाद् गदाद् व्याधेः परिपाहि ॥ १० ॥

इति कालियमर्दने कालियशिरसि भगवन्नर्तनवर्णनं

पञ्चपञ्चाशं दशकम् ।

---

**रुचिरकम्पितकुण्डलमण्डलः सुचिरमीश! ननर्तिथ पन्नगे ।**
**अमरताडितदुन्दुभिसुन्दरं वियति गायति दैवतयौवते ॥ १ ॥**

**रुचिरेति ।** दैवतयौवते देवस्त्रीसमूहेऽमरताडितदुन्दुभिसुन्दरं यथा तथा वियति दिवि विमानेषु गायति सति पन्नगे तत्फणासु सुचिरं ननर्तिथ ॥ १ ॥

**नमति यद्यदमुष्य शिरो हरे! परिविहाय तदुन्नतमुन्नतम् ।**
**परिमथन् पदपङ्करुहा चिरं व्यहरथाः करतालमनोहरम् ॥ २ ॥**

**नमतीति ।** अमुष्य फणिनो यद्यच्छिरो भगवत्पदपरिमथिततया नमति, तत्तत् परिविहायोन्नतमुन्नतं तच्छिरः पदपङ्करुहा परिमथन् व्यहरथाः क्रीडितवान् ॥ २ ॥

**त्वदवभग्नविभुग्नफणागणे गलितशोणितशोणितपाथसि ।**
**फणिपताववसीदति सन्नतास्तदबलास्तव माधव! पादयोः ॥ ३ ॥**

**त्वदिति ।** त्वयावभग्नो मर्दितो विभुग्नः कुटिलोऽवाङ्मुखः फणागणो यस्य । गलितेन वान्तेन शोणितेन रक्तेन शोणितमरुणीकृतं पाथो जलं येन । अवसीदति भग्नगात्रे सति तदबला नागपत्न्यः ॥ ३ ॥

**अयि पुरैव चिराय परिश्रुतत्वदनुभावविलीनहृदो हि ताः ।**
**मुनिभिरप्यनवाप्यपथैः स्तवैर्नुनुवुरीश! भवन्तमयन्त्रितम् ॥ ४ ॥**

**अयीति ।** पुरा पूर्वमेव चिराय चिरं परिश्रुतेन तवानुभावेन माहात्म्येन विलीनहृदः श्लथद्धृदयाः अत एव मुनिभिरप्यनवाप्यः पन्थाः सकलनिष्कलरूपार्थयोजनरूपो मार्गो येषु तादृशैः स्तवैरयन्त्रितमनर्गलं नुनुवुस्तुष्टुवुः ॥ ४ ॥

**फणिवधूगणभक्तिविलोकनप्रविकसत्करुणाकुलचेतसा ।**
**फणिपतिर्भवताच्युत! जीवितस्त्वयि समर्पितमूर्तिरवानमत् ॥ ५ ॥**

---

१. 'श्रद्द' क. पाठः.

**फणी**ति[1] । जीवितो मरणान्निवर्तितस्त्वयि समर्पितमूर्तिः साष्टाङ्गपातमवानमद् नमश्चकार ॥ ५ ॥

**रमणकं व्रज वारिधिमध्यगं फणिरिपुर्न करोति विरोधिताम् ।**
**इति भवद्वचनान्यतिमानयन् फणिपतिर्निरगादुरगैः समम् ॥ ६ ॥**

**रमणक**मिति । रमणकं रमणकाख्यं नागानां निवासभूतं द्वीपम् । फणिरिपुर्गरुडः सापराधेऽपि त्वयि विरोधितां न करोति ॥ ६ ॥

**फणिवधूजनदत्तमणिव्रजज्वलितहारदुकूलविभूषितः ।**
**तटगतैः प्रमदाश्रुविमिश्रितैः समगथाः स्वजनैर्दिवसावधौ ॥ ७ ॥**

**फणी**ति । प्रमदाश्रुविमिश्रितैः प्रमदाभिरश्रुभिश्च,[2] प्रमदाश्रुभिर्हर्षाश्रुभिर्वा विमिश्रितैः स्वजनैः समगथाः सङ्गतोऽभूः ॥ ७ ॥

**निशि पुनस्तमसा व्रजमन्दिरं व्रजितुमक्षम एव जनोत्करे ।**
**स्वपति तत्र भवच्चरणाश्रये दवकृशानुररुन्ध समन्ततः ॥ ८ ॥**

**निशी**ति । पुनरनन्तरं निशि रात्रौ तमसा व्रजमन्दिरमेव व्रजितुं गन्तुमक्षमे तत्र कालिन्दीतट एव स्वपति सत्यरुन्धावृणोत् ॥ ८ ॥

**प्रबुधितानथ पालय पालयेत्युदयदार्तरवान् पशुपालकान् ।**
**अवितुमाशु पपाथ महानलं किमिह चित्रमयं खलु ते मुखम् ॥ ९ ॥**

**प्रबुधिता**निति । अथ प्रबुधितान् कृशानूष्मणा प्रबुद्धानवितुं त्रातुं पपाथ पीतवान् । इह महानलपाने किं चित्रं, यतोऽयं कृशानुस्ते मुखम् ॥ ९ ॥

**शिखिनि वर्णत एव हि पीतता परिलसत्यधुना क्रिययाप्यसौ ।**
**इति नुतः पशुपैर्मुदितैर्विभो! हर हरे! दुरितैः सह मे गदान् ॥१०॥**

**शिखिनी**ति । शिखिन्यग्नौ वर्णतो रूपभेदेनैव पीतता । अधुना क्रियया

1. 'ति । च्युतजी' क, ख, पाठः. 2. 'भिः प्र' क, ख, पाठः.

पानक्रियाकर्मतयाप्यसौ पीतता । हे हरे! दुरितैर्गदकारणभूतैर्दुष्कर्मफलैः सह गदान् कार्यभूतान् हर नाशय ॥ १० ॥

इति कालियमर्दने कालियस्य भगवदनुग्रहवर्णनं भगवतो दवानलपानवर्णनं च

षट्पञ्चाशं दशकम् ।

---

*रामसखः क्वापि दिने कामद! भगवन्! गतो भवान् विपिनम् ।
सूनुभिरपि गोपानां धेनुभिरभिसंवृतो लसद्वेषः ॥ १ ॥

रामेति । रामः सखा यस्य स भवान् लसद्वेषः शोभमानालङ्कृतिविशेषः ॥ १ ॥

सन्दर्शयन् बलाय स्वैरं बृन्दावनश्रियं विमलाम् ।
काण्डीरैः सह बालैर्भाण्डीरकमागमो वटं क्रीडन् ॥ २ ॥

सन्दर्शयन्निति । काण्डीरैर्याष्टीकैरुद्धृतयष्टिभिरित्यर्थः । भाण्डीरकं नाम बटमागतः ॥ २ ॥

तावत् तावकनिधनस्पृहयालुर्गोपमूर्तिरदयालुः ।
दैत्यः प्रलम्बनामा प्रलम्बबाहुं भवन्तमापेदे ॥ ३ ॥

तावदिति । तावकनिधनस्पृहयालुस्त्वन्निग्रहेच्छावान् गोपमूर्तिर्गोपवेषः अदयालुः निष्कृपः प्रलम्बनामा दैत्यः प्रलम्बबाहुं तादृशबाहुद्वययुक्तमापेदे प्राप ॥

जानन्नप्यविजानन्निव तेन समं निबद्धसौहार्दः ।
वटनिकटे पटुपशुपव्याबद्धं द्वन्द्वयुद्धमारब्धाः ॥ ४ ॥

जानन्निति । जानन्नपि वैरोत्पादनाय निबद्धं सौहार्दं सुहृद्भावो येन । वटस्य निकटे समीपे पटुभिर्द्वन्द्वयुद्धक्रीडाकोविदैः पशुपैः श्रीदामादिभिर्व्याबद्धमितरेतरसम्बद्धं द्वन्द्वयुद्धमारब्धाः प्रारब्धवान् ॥ ४ ॥

---

* रामस्य सखा । व्याख्यानरीत्या तु रामसखेति पाठः स्यात् ।

**गोपान् विभज्य तन्वन् सङ्घं *बलभद्रकं भवत्कमपि ।**
**त्वद्बलभीरुं दैत्यं त्वद्बलगतमन्वमन्यथा भगवन्! ॥ ५ ॥**

**गोपानिति** । गोपान् योगिप्रतियोगिभेदेन विभज्य बलभद्रकं सङ्घं भवत्कं सङ्घं च तन्वन् । त्वद्बलभीरुमिति । प्रलम्बाश्चिन्तितवान् अस्मिन् द्वन्द्वयुद्धे पराजिता जेतारं वहेयुरिति न्यायः । दिष्ट्या मिथ्यापराजितोऽहमनयोरन्यतरं वहन् नेष्यामि । तत्र रामसङ्घस्थः कृष्णं वहन् कदाचित् तृणावर्त इव विपन्नः स्यामिति त्वद्बलाद् भीरुं त्वद्बलगतं त्वत्सङ्घस्थं त्वमन्वमन्यथा अनुज्ञातवान् ॥ ५ ॥

**कल्पितविजेतृवहने समरे परयूथगं स्वदयिततरम् ।**
**श्रीदामानमधत्थाः पराजितो भक्तदासतां प्रथयन् ॥ ६ ॥**

**कल्पितेति** । कल्पितं विजेतॄणां वहनं यस्मिन् । भक्तानां मच्छिर आक्रम्य स्थातुमपि शक्यमिति भक्तदासतां प्रथयन् प्रकाशयन् श्रीदामानमधत्था ऊढवान् ॥ ६ ॥

**एवं बहुषु विभूमन्! बालेषु वहत्सु वाह्यमानेषु ।**
**रामविजितः प्रलम्बो जहार तं दूरतो भवद्भीत्या ॥ ७ ॥**

**एवमिति** । भवद्भीत्या रामम् । दूरत इति । वहन्नवरोहणस्थानावधि शनैर्गत्वा ततो जहार क्षिप्रं नीतवान् ॥ ७ ॥

**त्वद् दूरं गमयन्तं तं दृष्ट्वा हलिनि विहितगरिमभरे ।**
**दैत्यः स्वरूपमागाद् यद्रूपात् स हि बलोऽपि चकितोऽभूत् ॥ ८ ॥**

**त्वादिति**[1] । त्वत् त्वत्सकाशाद् दूरं दूरदेशं गमयन्तं नयन्तं तं दैत्यं सशङ्कं दृष्ट्वा हलिनि रामे विहितगरिमभर उत्पादितात्मगौरवे सति वहनाक्षमतया दैत्यः स्वरूपमतिभीषणमागात् । यस्माद्रूपाद् रूपं दृष्ट्वा स हि बलोऽपि शेषमूर्तिरपि मानुषभावेन चकित ईषत् त्रस्तोऽभूत् ॥ ८ ॥

---

१. 'ति । त्वत्स' ख. ग. पाठः.

---

* बलभद्रनेतृकमित्यर्थः । एवं भवत्कम् । उभयत्र 'स एषां ग्रामणीः' (५-२-७८)इति कन् ।

उच्चतया दैत्यतनोस्त्वन्मुखमालोक्य दूरतो रामः ।
विगतभयो दृढमुष्ट्या भृशदुष्टं सपदि पिष्टवानेनम् ॥ ९ ॥

उच्चतयेति । उच्चतयोन्नततया तत्स्कन्धस्थो रामो दूरतोऽपि त्वन्मुखमालोक्य भृशमतिशयेन दुष्टं दृढया स्थिरया मुष्ट्या सपदि झटिति पिष्टवान् निगृहीतवान् ॥ ९ ॥

हत्वा दानववीरं प्राप्तं बलमालिलिङ्गिथ प्रेम्णा ।
तावन्मिलतोर्युवयोः शिरसि कृता पुष्पवृष्टिरमरगणैः ॥ १० ॥

हत्वेति । मिलतोः प्रकृतिलये सकलनिष्कलैक्यवदेकीभूतयोः ॥ १० ॥

आलम्बो भुवनानां प्रालम्बं निधनमेवमारचयन् ।
कालं विहाय सद्यो लोलम्बरुचे! हरे! हरेः क्लेशान् ॥ ११ ॥

आलम्ब इति । भुवनानामालम्ब आश्रयः प्रालम्बं प्रलम्बस्येदं निधनं निग्रहमेवमुक्तप्रकारेणारचयन् कुर्वन् कालं कालविलम्बं विहाय त्यक्त्वा हरेर्नाशय ॥

इति प्रलम्बासुरवधवर्णनं सप्तपञ्चाशं दशकं सैकम् ।

---

त्वयि विहरणलोले बालजालैः प्रलम्ब-
प्रमथनसविलम्बे धेनवः स्वैरचाराः ।
तृणकुतुकनिविष्टा दूरदूरं चरन्त्यः
किमपि विपिनमैषीकाख्यमीषांबभूवुः ॥ १ ॥

त्वयीति । त्वयि प्रलम्बमथनेन सविलम्बे सति इषीकतृणभूयिष्ठत्वादैषीकाख्यं वनमीषांबभूवुर्जग्मुः ॥ १ ॥

अनधिगतनिदावक्रौर्यबृन्दावनान्ताद्
बहिरिदमुपयाताः काननं धेनवस्ताः ।

---

१. 'लक्ष्पवदे' क. पाठः.

**तव विरहविषण्णा ऊष्मलग्रीष्मताप-**
**प्रसरविसरदम्भस्याकुलाः स्तम्भमापुः ॥ २ ॥**

अनधिगतेति । अनधिगतमप्राप्तं निदाघक्रौर्यं ग्रीष्मकालभव ऊष्मा यस्मिंस्तस्माद् बृन्दावनान्ताद् बहिर्देशमिदमैषीकाख्यं काननमुपयाताः तव विरहेण विषण्णाश्च ऊष्मलो यो ग्रीष्मस्तत्तापप्रसरैर्विसरदम्भसि नष्टजल इति बहिर्देशविशेषणम् । अथवोष्मलग्रीष्मतापप्रसरेण विसरन्त्या व्याप्तयाम्भस्यया पिपासयाकुलाः स्तम्भं निश्चेष्टतामापुः प्रापुः ॥ २ ॥

**तदनु सह सहायैर्दूरमन्विष्य शौरे!**
**गलितसरणिमुञ्जारण्यसञ्जातखेदम् ।**
**पशुकुलमभिवीक्ष्य क्षिप्रमानेतुमारात्**
**त्वयि गतवति ही ही सर्वतोऽग्निर्जजृम्भे ॥ ३ ॥**

तदन्विति । गलितसरणौ भ्रष्टमार्गे मुञ्जाख्यतृणप्रधानेऽरण्ये । त्वय्यारात् समीपं गतवति ही ही कष्टं कष्टं दवाग्निः सर्वतो गोपगवां परितो जजृम्भे प्रज्वलितोऽभूत् ॥ ३ ॥

**सकलहरिति दीप्ते घोरभाङ्कारभीमे**
**शिखिनि विहतमार्गा अर्धदग्धा इवार्ताः ।**
**अहह भुवनबन्धो! पाहि पाहीति सर्वे**
**शरणमुपगतास्त्वां तापहर्तारमेकम् ॥ ४ ॥**

सकलेति । सकलहरित्यष्टसु दिक्षु । विहतमार्गा बहिर्गन्तुमपारयन्तस्त्वां शरणमुपगताः ॥ ४ ॥

**अलमलमतिभीत्या सर्वतो मीलयध्वं**
**दृशमिति तव वाचा मीलिताक्षेषु तेषु ।**
**क्व नु दवदहनोऽसौ कुत्र मुञ्जाटवी सा**
**सपदि ववृतिरे ते हन्त भाण्डीरदेशे ॥ ५ ॥**

अलमिति । सर्वतः सर्वे । सपदि पुनर्नयनोन्मीलनानन्तरमेव भाण्डीरदेशे

1. 'पगोपीः प' ख. ग. पाठः.

वद्वृतिरे स्थिता आसन् । भगवता योगैश्वर्येण पूर्वस्थानं नीतास्त इति ज्ञातव्यम् ॥ ५ ॥

जय जय तव माया केयमीशेति तेषां
नुतिभिरुदितहासो बद्धनानाविलासः ।
पुनरपि विपिनान्ते प्राचरः पाटलादि-
प्रसवनिकरमात्रग्राह्यघर्मानुभावे ॥ ६ ॥

जयेति । हे ईश! जय जय लोकोत्तरो भूयाः । केयं तव माया, यत ऐषीकस्था वयं मीलिताक्षाः सन्तो भाण्डीरवटमूलस्थाः स्मः । पाटलेति । पाटलशिरीषादितरुकुसुममात्रेण ग्राह्यो घर्मानुभाव ऊष्मा यस्मिंस्तस्मिन् प्राचरः सञ्चरणं चकृषे ॥ ६ ॥

त्वयि विमुखमिवोच्चैस्तापभारं वहन्तं
तव भजनवदन्तः पङ्कमुच्छोषयन्तम् ।
तव भुजवदुदश्वद्भूरितेजःप्रवाहं
तपसमयमनैषीर्यामुनेषु स्थलेषु ॥ ७ ॥

त्वयीति । त्वं यामुनेषु स्थलेषु यमुनातीरेषु क्रीडन् तपसमयं ग्रीष्मकालमनैषीः । तपसमयं विशिनष्टि — त्वयीति । त्वयीश्वरे विमुखं सेवारहितमिव तापभारं वहन्तं प्रापयन्तम् । असेवकपक्षे तापभारं चित्तसन्तापं वहन्तं दधतम् । तव भजनवदन्तर्नद्यादेः मनसि वा पङ्कं कर्दमं दुरितं वा । तपसमयपक्षे तेज आतपः अन्यत्र पराक्रमः ॥ ७ ॥

तदनु जलदजालैस्त्वद्वपुस्तुल्यभाभि-
र्विकसदमलविद्युत्पीतवासोविलासैः ।
सकलभुवनभाजां हर्षदां वर्षवेलां
क्षितिधरकुहरेषु स्वैरवासी व्यनैषीः ॥ ८ ॥

तदन्विति । त्वद्वपुस्तुल्या भाः श्यामला दीप्तिर्येषाम् । विकसन्त्यः शोभमाना अमला विद्युत एव पीतं वासस्तद्विलासाः शोभा येषाम् । त्वद्वपुरपि पीतवासो-

विलासयुक्तम्। सन्तापशान्त्या सस्यसम्पत्त्या वा हर्षदाम्। क्षितिधरकुहरेषु गोवर्धनगुहासु स्वैरवासी क्रीडन् व्यनैषीः ॥ ८ ॥

कुहरतलनिविष्टं त्वां गरिष्ठं गिरीन्द्रः
शिखिकुलनवकेकाकाकुभिः स्तोत्रकारी ।
स्फुटकुटजकदम्बस्तोमपुष्पाञ्जलिं च
प्रविदधदनुभेजे देव! गोवर्धनोऽसौ ॥ ९ ॥

कुहरेति। कुहरतलनिविष्टमात्मगुहाश्रितं गरिष्ठं महानुभावं त्वामीश्वरं गिरीन्द्रो गोवर्धनः शिखिकुलानां नवा वर्षारम्भोद्गताः केकास्तद्रवा एव काकवो भक्त्यतिशयजनितोक्तिविशेषास्ताभिः स्तोत्रकारी स्फुटानां विकसितानां कुटजानां गिरिमल्लिकाकुसुमानां कदम्बकुसुमानां (च) स्तोमेन समूहेन पुष्पाञ्जलिं प्रविदधत् कुर्वन्ननुभेजे उपासाञ्चक्रे ॥ ९ ॥

अथ शरदमुपेतां तां भवद्भक्तचेतो-
विमलसलिलपूरां मानयन् काननेषु ।
तृणममलवनान्ते चारु सञ्चारयन् गाः
पवनपुरपते! त्वं देहि मे देहसौख्यम् ॥ १० ॥

अथेति। भवद्भक्तचेतोवद् विमलः सलिलपूरो यस्यां तामभिसरन्तीं नायिकामिवोपेतां शरदं मानयन्। तृणं सञ्चारयन् भक्षयन्। मे देहसौख्यमारोग्यम्, अथवा देहसौख्यं विदेहकैवल्यम् ॥ १० ॥

इति गोगोपानां दावाग्निमोक्षवर्णनम् ऋतुवर्णनं च

अष्टपञ्चाशं दशकम्।

---

त्वद्वपुर्नवकलायकोमलं प्रेमदोहनमशेषमोहनम् ।
ब्रह्म तत्त्वपरचिन्मुदात्मकं वीक्ष्य सम्मुमुहुरन्वहं स्त्रियः ॥ १ ॥

त्वदिति। त्वद्वपुर्ब्रह्म, तच्च तत्त्वपरचिन्मुदात्मकं सच्चिदानन्दात्मकम्। अतः प्रेमदोहनं रागवर्धनम्। स्त्रियो गोप्यः सम्मुमुहुः ॥ १ ॥

**मन्मथोन्मथितमानसाः क्रमात् त्वद्विलोकनरतास्ततस्ततः ।**
**गोपिकास्तव न सेहिरे हरे! काननोपगतिमप्यहर्मुखे ॥ २ ॥**

**मन्मथेति ।** गोपिकास्ततस्ततः पुनः पुनः क्रमाद् दिनं प्रति सक्रमोत्कर्षम् । अहर्मुखेऽपि न सर्वदा, काननोपगतिमपि न विदूरगमनं, न सेहिरे न मर्षितवत्यः ॥ २ ॥

**निर्गते भवति दत्तदृष्टयस्त्वद्गतेन मनसा मृगेक्षणाः ।**
**वेणुनादमुपकर्ण्य दूरतस्त्वद्विलासकथयाभिरेमिरे ॥ ३ ॥**

**निर्गत** इति । निर्गते प्रस्थिते भवति त्वयि दत्ता निक्षिप्ता दृष्टयो यासाम् अत एव त्वद्गतेन मनसा त्यक्तगृहकृत्या दूरतोऽपि वेणुनादमुपकर्ण्य श्रुत्वा त्वद्विलासस्य कथयान्योन्यकथनेनाभिरेमिरे कालं निन्युः ॥ ३ ॥

**काननान्तमितवान् भवानपि स्निग्धपादपतले मनोरमे ।**
**व्यत्ययाकलितपादमास्थितः प्रत्यपूरयत वेणुनालिकाम् ॥ ४ ॥**

**काननान्तमिति ।** व्यत्ययेन व्यत्यासेनाकलितौ धृतौ पादौ यस्मिंस्तथा आस्थितो वेणुनालिकां प्रत्यपूरयत ॥ ४ ॥

**मारबाणधुतखेचरीकुलं निर्विकारपशुपक्षिमण्डलम् ।**
**द्रावणं च दृषदामपि प्रभो! तावकं व्यजनि वेणुकूजितम् ॥ ५ ॥**

**मारेति ।** धुतं जनितकम्पस्वेदादिकं खेचरीकुलं येन । दृषदामुपलानामपि द्रावणं द्रवणसाधनं व्यजनि जातम् ॥ ५ ॥

**वेणुरन्ध्रतरलाङ्गुलीदलं तालसञ्चलितपादपल्लवम् ।**
**तत् स्थितं तव परोक्षमप्यहो संविचिन्त्य मुमुहुर्व्रजाङ्गनाः ॥ ६ ॥**

**वेण्विति ।** व्रजाङ्गना गोप्यस्तद् व्यत्यस्तपादं तव स्थितमवस्थानं परोक्षमप्रत्यक्षमपि संविचिन्त्य मुमुहुः ॥ ६ ॥

**निर्विशङ्कभवदङ्गदर्शिनीः खेचरीः खगमृगान् पशूनपि ।**
**त्वत्पदप्रणयि काननं च ता धन्यधन्यमिति नन्वमानयन् ॥ ७ ॥**

**निर्विशङ्केति** । निर्विशङ्कभवदङ्गदर्शिनीस्तिरस्कृतशरीरतया सन्निहिततया निमेषरहिततया च नित्यं भवदङ्गप्रत्यङ्गदर्शनशीलाः । त्वत्पदप्रणायि भवत्पदाम्बुजसंसार्गि काननमपि धन्यधन्यम् अतिशयेन भाग्यवदिति ता व्रजस्थाः पशुपाङ्गना अमानयन् ॥ ७ ॥

**आपिबेयमधरामृतं कदा वेणुभुक्तरसशेषमेकदा ।**
**दूरतो बत कृतं दुराशयेत्याकुला मुहुरिमाः समामुहन् ॥ ८ ॥**

**आपिबेयमिति** । वेणुना भुक्तो रसाविशेषो यस्मिन् तदधरामृतम् । तद् दूरतोऽस्माकं न सम्भवति । तत्र दुराशया कृतमलम् । समामुहन् सम्मुमुहुः ॥ ८ ॥

**प्रत्यहं च पुनरित्थमङ्गनाश्चित्तयोनिजनितादनुग्रहात् ।**
**बद्धरागविवशास्त्वयि प्रभो ! नित्यमापुरिह कृत्यमूढताम् ॥ ९ ॥**

**प्रत्यहमिति** । अनुग्रहाद्[2] न तूपद्रवात् । कुतः, यतस्त्वयि बद्धरागविवशाः शृङ्गाराख्यप्रेमलक्षणभक्तिविवशा इह कृत्यमूढताम् इदं मयैव कर्तव्यमित्यवधारणविधुरतामापुः ॥ ९ ॥

**रागस्तावज्जायते हि स्वभावान्मोक्षोपायो यत्नतः स्यान्न वा स्यात् ।**
**तासां त्वेकं तद् द्वयं लब्धमासीद् भाग्यं भाग्यं पाहि मां मारुतेश ! ॥१०॥**

**राग** इति । रागस्तावत् स्त्रीणां पुंसां वा मिथः स्वभावादेव जायते । मोक्षोपायस्त्वीश्वरे प्रेम केषाञ्चिदेव प्रयत्नतः स्याद्वा न वा । तासां व्रजाङ्गनानां तद्द्वयं कामसुखदं कान्तप्रेम मोक्षसुखदमीश्वरप्रेम चैकं लब्धमासीद् , एकस्य कृष्णस्यैव कान्तत्वादीश्वरत्वाच्च । अहो भाग्यं भाग्यम् ॥ १० ॥

**इति वेणुगानवर्णनम् एकोनषष्टितमं दशकम् ।**

---

१. 'मुहुरि' क. पाठः. २. 'त्निरुप' ख. ग. पाठः.

**मदनातुरचेतसोऽन्वहं भवदङ्घ्रिद्वयदास्यकाम्यया ।**
**यमुनातटसीम्नि सैकतीं तरलाक्ष्यो गिरिजां समार्चिचन् ॥ १ ॥**

**मदनेति** । सैकतीं सिकतामयीं प्रतिमां समार्चिचन् पूजयामासुः ॥ १ ॥

**तव नामकथारताः समं सुदृशः प्रातरुपागता नदीम् ।**
**उपहारशतैरपूजयन् दयितो नन्दसुतो भवेदिति ॥ २ ॥**

**तवेति** । तव नाम्नि कथायां च रता नाम कीर्तयन्त्यः कथाः कथयन्त्यश्च समं सम्भूयोपहारशतैर्जलगन्धपुष्पधूपादिभिर्नन्दसुतो दयितो भवेदिति प्रार्थयन्त्य इति शेषः ॥ २ ॥

**इति मासमुपाहितव्रतास्तरलाक्षीरभिवीक्ष्य ता भवान् ।**
**करुणामृदुलो नदीतटं समयासीत् तदनुग्रहेच्छया ॥ ३ ॥**

**इतीति** । उपाहितव्रता धृतव्रताः ॥ ३ ॥

**नियमावसितौ निजाम्बरं तटसीमन्यवमुच्य तास्तदा ।**
**यमुनाजलखेलनाकुलाः पुरतस्त्वामवलोक्य लज्जिताः ॥ ४ ॥**

**नियमेति** । नियमावसितौ व्रतावसाने निजाम्बरमवमुच्य नग्ना यमुनायां जलखेलन उदकबाधादावाकुलाश्चालिताः ॥ ४ ॥

**त्रपया नमिताननास्वथो वनितास्वम्बरजालमन्तिके ।**
**निहितं परिगृह्य भूरुहो विटपं तं तरसाधिरूढवान् ॥ ५ ॥**

**त्रपयेति** । त्रपया दयितसन्निधौ विवस्त्रताजनितलज्जया । भूरुहो वृक्षस्य ॥ ५ ॥

**इह तावदुपेत्य नीयतां वसनं वः सुदृशो! यथायथम् ।**
**इति नर्ममृदुस्मिते त्वयि ब्रुवति व्यामुमुहे वधूजनैः ॥ ६ ॥**

**इहेति** । हे सुदृशः! इहोपेत्य वो वसनं यथायथं स्वं स्वं नीयताम् । नर्मणा

मृदु स्मितं यस्मिंस्तस्मिंस्त्वयि ब्रुवति सति वधूजनैर्व्रीडामुमुहे तत् कर्तुं मा मैवमिति वदितुमप्यसमर्था बभूवुरित्यर्थः ॥ ६ ॥

**अयि जीव चिरं किशोर! नस्तव दासीरवशीकरोषि किम्।**
**प्रदिशाम्बरमम्बुजेक्षणेत्युदितस्त्वं स्मितमेव दत्तवान् ॥ ७ ॥**

अयीति। अयि किशोर! कुमारक! त्वं चिरं जीव, तव दासीः प्रोक्तकारिणीर्नः किं किमर्थमवशीकरोषि परवशाः करोषि, अम्बरं प्रदिश देहीत्युदितो याचितः त्वं स्मितमेव दत्तवान् नाम्बरमपि। अयि किशोर! अप्राप्तविवाह! तव दासीः प्रेमार्हाः किमवशीकरोषि वशीकुरु परिगृहाण, अम्बरं प्रदिश, नः पतिस्त्वं, हे अम्बुजेक्षण! त्वत्कटाक्षविरहे वयं पराधीनजीविता इति साभिप्रायमिवोदितत्वात् त्वं तदनुमोदनरूपं मन्दस्मितं दत्तवान् ॥ ७ ॥

**अधिरुह्य तटं कृताञ्जलीः परिशुद्धाः स्वगतीर्निरीक्ष्य ताः।**
**वसनान्यखिलान्यनुग्रहं पुनरेवं गिरमप्यदा मुदा ॥ ८ ॥**

अधिरुह्येति। परिशुद्धाः त्वन्नमनरूपप्रायश्चित्ताद् विवस्त्राप्लवनरूपव्रतभङ्गदोषान्निवृत्ताः स्वगतीरात्मशरणाः। अनुग्रहरूपामेवं वक्ष्यमाणरूपां गिरमप्यदाः दत्तवान् ॥ ८ ॥

**विदितं ननु वो मनीषितं वदितारस्त्विह योग्यमुत्तरम्।**
**यमुनापुलिने सचन्द्रिकाः क्षणदा इत्यबलास्त्वमूचिवान् ॥ ९ ॥**

विदितमिति। मनीषितं सङ्कल्पः। इह वो मनीषिते योग्यमुत्तरं तथास्त्विति इदानीं नाहं वदामि। किन्तु यमुनापुलिने सचन्द्रिकाः क्षणदा भवतीभ्यो योग्यमुत्तरं केवलं क्रिययैव वदितारो वदिष्यन्तीति ॥ ९ ॥

**उपकर्ण्य भवन्मुखच्युतं मधुनिष्यन्दि वचो मृगीदृशः।**
**प्रणयादपि वीक्ष्य वीक्ष्य ते वदनाब्जं शनकैर्गृहं गताः ॥ १० ॥**

उपकर्ण्येति। उपकर्ण्य श्रोत्राञ्जलिभिः पीत्वा ॥ १० ॥

**इति नन्वनुगृह्य वल्लवीर्विपिनान्तेषु पुरेव सञ्चरन् ।**
**करुणाशिशिरो हरे! हर त्वरया मे सकलामयावलिम् ॥ ११ ॥**

इतीति । करुणया भक्तवात्सल्येन शिशिर आर्द्रहृदयः ॥ ११ ॥

इति गोपीवस्त्रापहारवर्णनं षष्टितमं दशकं सैकम् ।

---

**ततश्च बृन्दावनतोऽतिदूरतो वनं गतस्त्वं खलु गोपगोकुलैः ।**
**हृदन्तरे भक्ततरद्विजाङ्गनाकदम्बकानुग्रहणाग्रहं वहन् ॥ १ ॥**

तत इति । बृन्दावनतो बृन्दावनादतिदूरतोऽतिदूरे ॥ १ ॥

**ततो निरीक्ष्याशरणे वनान्तरे किशोरलोकं क्षुधितं तृषाकुलम् ।**
**अदूरतो यज्ञपरान् द्विजान् प्रति व्यसर्जयो दीदिवियाचनाय तान् ॥**

तत इति । अशरणे गृहरहिते किशोरलोकं बालजनं तृषा पिपासया क्षुधा चाकुलम् । अदूरतस्तत्प्रदेशात् समीपे यज्ञपरान् कर्मप्रधानतया भक्तिज्ञानविमुखान् दीदिवियाचनायान्नयाचनाय तान् गोपान् व्यसर्जयः प्रेषयामासिथ ॥ २ ॥

**गतेष्वथो तेष्वभिधाय तेऽभिधां कुमारकेष्वोदनयाचिषु प्रभो! ।**
**श्रुतिस्थिरा अप्यभिनिन्युरश्रुतिं न किञ्चिदूचुश्च महीसुरोत्तमाः ॥ ३ ॥**

गतेष्विति । तेऽभिधां कृष्णो व ओदनं याचत इति तव नामाभिधाय । श्रुतौ स्थिरा निश्चितबुद्धयोऽप्यश्रुतिं श्रवणाभावमभिनिन्युरभिनीतवन्तः । महीसुरोत्तमा ब्राह्मणश्रेष्ठम्मन्याः किञ्चिद् दास्यामि नेति वा नोचुरपि ॥ ३ ॥

**अनादरात् खिन्नधियो हि बालकाः समाययुर्युक्तमिदं हि यज्वसु ।**
**चिराद्भक्ताः खलु ते महीसुराः कथं हि भक्तं त्वयि तैः समर्प्यते ॥४॥**

अनादरादिति । यज्वसु यायजूकेष्विदमर्थिनिराकरणं युक्तम् । भक्तमन्नम् ॥ ४ ॥

**निवेदयध्वं गृहिणीजनाय मां दिशेयुरन्नं करुणाकुला इमाः ।**
**इति स्मितार्द्रं भवतेरिता गतास्ते दारका दारजनं ययाचिरे ॥ ५ ॥**

निवेदयध्वमिति । इमा यज्वपत्न्यः अन्नं दिशेयुर्दद्युरितीरिता उक्तास्ते दारकाः कुमारा दारजनं गृहिणीजनं ययाचिरे याचितवन्तः ॥ ५ ॥

**गृहीतनाम्नि त्वयि सम्भ्रमाकुलाश्चतुर्विधं भोज्यरसं प्रगृह्य ताः ।**
**चिरं धृतत्वत्प्रविलोकनाग्रहाः स्वकैर्निरुद्धा अपि तूर्णमाययुः ॥ ६ ॥**

गृहीतेति । गृहीतनाम्नि कृष्णोऽस्मन्मुखेन भवतीरोदनं याचत इति त्वन्नामश्रवणमात्र एव ता दारजनाश्चतुर्विधं भोज्यखाद्यपेयलेह्यरूपं भोज्यरसं रसवद् भोज्यम् । स्वकैर्भर्त्रादिभिर्निरुद्धा अपि तूर्णमाययुः ॥ ६ ॥

**विलोलपिञ्छं चिकुरे कपोलयोः समुल्लसत्कुण्डलमार्द्रमीक्षिते ।**
**निधाय बाहुं सुहृदंससीमनि स्थितं भवन्तं समलोकयन्त ताः ॥७॥**

विलोलेति । ईक्षिते कटाक्षे आर्द्रं वात्सल्यातिशयजनितानन्दजलार्द्रम् ॥ ७ ॥

**तदा च काचित् त्वदुपागमोद्यता गृहीतहस्ता दयितेन यज्वना ।**
**तदैव सञ्चिन्त्य भवन्तमञ्जसा विवेश कैवल्यमहो कृतिन्यसौ ॥८॥**

तदेति । तदा इतरासु प्रस्थितासु काचिद् यज्वपत्नी त्वदुपागमे उद्यता यज्वना गृहीतहस्ता पापे! किमिदं प्रतिकूलाचरणमिति प्रतिरुद्धा भवन्तं सञ्चिन्त्य निरतिशयभवत्सङ्कल्पसुखानुभवेन भवद्विरहजनितसन्तापदुःखानुभवेन च क्षीणसुकृतदुष्कृता अञ्जसानायासेन कैवल्यं मोक्षं विवेश । कृतिनी भाग्यवती ॥ ८ ॥

**आदाय भोज्यान्यनुगृह्य ताः पुनस्त्वदङ्गसङ्गस्पृहयोज्झतीर्गृहम् ।**
**विलोक्य यज्ञाय विसर्जयन्निमाश्चकर्थ भर्तॄनपि तास्वगर्हणान् ॥ ९ ॥**

आदायेति । त्वदङ्गसङ्गस्पृहया त्वया सह रिरंसया गृहं सानुबन्धमुज्झतीस्त्यजतीः विलोक्यानुगृह्य तास्वगर्हणान् बहुमानयुक्तांश्चकर्थ ॥ ९ ॥

**निरूप्य दोषं निजमङ्गनाजने विलोक्य भक्तिं च पुनर्विचारिभिः ।
प्रबुद्धतत्त्वैस्त्वमभिष्टुतो द्विजैर्मरुत्पुराधीश! निरुन्धि मे गदान् ॥ १० ॥**

**निरूप्येति** । निजं दोषमङ्गनाजने भक्तिं च निरूप्य प्रबुद्धं तत्त्वं यैस्तैर्द्विजैरभिष्टुतः ॥ १० ॥

इति यज्वपत्न्युद्धरणवर्णनमेकषष्टितमं दशकम् ।

---

**कदाचिद् गोपालान् विहितमखसम्भारविभवान्
निरीक्ष्य त्वं शौरे! मघवमदमुद्ध्वंसितुमनाः ।
विजानन्नप्येतान् विनयमृदु नन्दादिपशुपा-
नपृच्छः को वायं जनक! भवतामुद्यम इति ॥ १ ॥**

**कदाचिदिति** । विहिता उपार्जिता मखसम्भारविभवा इन्द्रयागसाधनरूपपदार्था यैस्तानेतान् नन्दादिपशुपान् विनयेन मृदु अनुद्धतं यथा भवति तथा अपृच्छः ॥ १ ॥

**बभाषे नन्दस्त्वां सुत! ननु विधेयो मघवतो
मखो वर्षे वर्षे सुखयति स वर्षेण पृथिवीम् ।
नृणां वर्षायत्तं निखिलमुपजीव्यं महितले
विशेषादस्माकं तृणसलिलजीवा हि पशवः ॥ २ ॥**

**बभाष इति** । उपजीव्यं सस्यादि । अस्माकं पशुवृत्तीनां विशेषाद्, यतस्तृणसलिलजीवनाः पशवः ॥ २ ॥

**इति श्रुत्वा वाचं पितुरयि भवानाह सरसं
धिगेतन्नो सत्यं मघवजनिता वृष्टिरिति यत् ।
अदृष्टं जीवानां सृजति खलु वृष्टिं समुचितां
महारण्ये वृक्षाः किमिव बलिमिन्द्राय ददते ॥ ३ ॥**

इतीति । धिग् अहो अन्धपरम्परा महतां मनोऽपि स्पृशति, यतो मघवजनिता वृष्टिरित्येतन्नो सत्यम् । यद् यस्माज्जीवानामदृष्टं कर्मफलं खलु वृष्टिं सृजति, न मघवा । सोऽप्यदृष्टेनैवैन्द्रं पदमाप्तः । अत्र हेतुमाह—महारण्य इति । अकृतेन्द्रयागानां वृक्षाणामपि वृष्टिकृतयोगक्षेमदर्शनादित्यर्थः ॥ ३ ॥

**इदं तावत् सत्यं यदिह पशवो नः कुलधनं**
**तदाजीव्यायासौ बलिरचलभर्त्रे समुचितः ।**
**सुरेभ्योऽप्युत्कृष्टा ननु धरणिदेवाः क्षितितले**
**ततस्तेऽप्याराध्या इति जगदिथ त्वं निजजनान् ॥ ४ ॥**

इदमिति । यदिहोक्तं पशवो नः कुलधनमिति, तदिदं तावत् सत्यम् । अतस्तदाजीव्याय तृणसलिलसम्पत्तयेऽसौ प्रारब्धो बलिरचलभर्त्रे गोवर्धनाय, यतोऽचलो नस्तृणं जलं च ददाति, अतः समुचितः । किञ्च धरणिदेवा ब्राह्मणाः, अतस्तेऽप्याराध्याः पूजनीया इति जगदिथ ॥ ४ ॥

**भवद्वाचं श्रुत्वा बहुमतियुतास्तेऽपि पशुपा**
**द्विजेन्द्रानर्चन्तो बलिमददुरुच्चैः क्षितिभृते ।**
**व्यधुः प्रादक्षिण्यं सुभृशमनमन्नादरयुता-**
**स्त्वमादः शैलात्मा बलिमखिलमाभीरपुरतः ॥ ५ ॥**

भवदिति । उच्चैः पूर्वस्माद् विशिष्टबहुसाधनोपबृंहितं बलिं पूजां अददुः । व्यधुर्विदधिरे । त्वं शैलात्मा शैलवदतिमहद् वपुर्गृहीत्वा आभीराणां गोपानां पुरतः शैलोऽस्मि प्रसन्नोऽस्मीति ब्रुवन् बलिमादः अभुङ्क्थाः ॥ ५ ॥

**अवोचश्चैवं तान् किमिह वितथं मे निगदितं**
**गिरीन्द्रो नन्वेष स्वबलिमुपभुङ्क्ते स्ववपुषा ।**
**अयं गोत्रो गोत्रद्विषि च कुपिते रक्षितुमलं**
**समस्तानित्युक्ता जहृषुरखिला गोकुलजुषः ॥ ६ ॥**

अवोच इति । रूपान्तरेण गोपसमूहस्थश्च त्वं तान् गोपानेवं वक्ष्यमाणप्र-

कारमवोचः । इह मे निगदितं किं वितथमसत्यम् । अयं मूर्तिमत्त्वेन दृश्यमानो गोत्रो गोवर्धनाख्यो गोत्रद्विषि इन्द्रे चापि कुपिते रक्षितुमलं शक्तः ॥ ६ ॥

**परिभीता याताः खलु भवदुपेता व्रजजुषो**
**व्रजं यावत् तावन्निजमखविभङ्गं निशमयन् ।**
**भवन्तं जानन्नप्यधिकरजसाक्रान्तहृदयो**
**न सेहे देवेन्द्रस्त्वदुपरचितात्मोन्नतिरपि ॥ ७ ॥**

**परिभीता** इति । निजमखविभङ्गं निशमयन् शृण्वन् भवन्तं श्रीकृष्णं विष्णुं जानन्नपि अधिकरजसा तत्कार्यरागादिभिराक्रान्तं हृदयं यस्य सः निजमखविभङ्गं न सेहे । त्वदुपरचिता त्वत्कृता आत्मोन्नतिरैन्द्रं पदं यस्य ॥ ७ ॥

**मनुष्यत्वं यातो मधुभिदपि देवेष्वविनयं**
**विधत्ते चेन्नष्टस्त्रिदशसदसां कोऽपि महिमा ।**
**ततश्च ध्वंसिष्ये पशुपहतकस्य श्रियमिति**
**प्रवृत्तस्त्वां जेतुं स किल मघवा दुर्मदनिधिः ॥ ८ ॥**

**मनुष्यत्वमिति** । मधुभिद् विष्णुरपि मनुष्यत्वं यातो निकृष्टो जातः । अयं मधुभिच्चेद् देवेष्वविनयं न विधत्ते, यदि चेद् विधत्ते तर्हि न मधुभिदयमिति भावः । एवं चेत् त्रिदशसदसां देवसभानां कोऽप्यनिर्देश्यो महिमा नष्ट एव । पशुपहतकस्य गोपालाधमस्य कृष्णस्य ॥ ८ ॥

**त्वदावासं हन्तुं प्रलयजलदानम्बरभुवि**
**प्रहिण्वन् बिभ्राणः कुलिशमयमभ्रेभगमनः ।**
**प्रतस्थेऽन्यैरन्तर्दहनमरुदाद्यैर्विहसितो**
**भवन्माया नैव त्रिभुवनपते! मोहयति कम् ॥ ९ ॥**

**त्वदिति** । प्रहिण्वन् मुञ्चन् अभ्रेभगमन ऐरावतमारूढः अन्यैर्दहनमरुदाद्यैरग्निवाय्वादिभिरन्तर्हृदि विहसितः परिहसितः । भवन्माया कं नैव[1] मोहयति ॥ ९ ॥

---

१. 'न मो' ग. पाठः.

सुरेन्द्रः क्रुद्धश्चेद् द्विजकरुणया शैलकृपया-
 प्यनातङ्कोऽस्माकं नियत इति विश्वास्य पशुपान् ।
अहो किं नायातो गिरिभिदिति सञ्चिन्त्य निवसन्
 मरुद्गेहाधीश! प्रणुद मुरवैरिन्! मम गदान् ॥ १० ॥

सुरेन्द्र इति । आतङ्कात् सङ्कटादन्योऽनातङ्कः सुखं नियतो निश्चितः । गिरिभिदिन्द्रः कुपितः किं नायात इति सञ्चिन्त्य निवसन् । प्रणुद त्यज ॥ १० ॥

इति इन्द्रयागविघातवर्णनं द्विषष्टितमं दशकम् ।

---

ददृशिरे किल तत्क्षणमक्षतस्तनितजृम्भितकम्पितदिक्तटाः ।
सुषमया भवदङ्गतुलां गता व्रजपदोपरि वारिधरास्त्वया ॥ १ ॥

ददृशिर इति । अक्षतेनाविच्छिन्नेन स्तनितेन जृम्भितेन मेघव्याप्त्या च कम्पिता दिक्तटाः तत्स्थाश्चराचरा यैः । सुषमया शोभया भवदङ्गस्य तुलामुपमां गता वारिधरास्त्वया व्रजपदस्य त्वद्गृहस्योपरि ददृशिरे अदृश्यन्त ॥ १ ॥

विपुलकरकमिश्रैस्तोयधारानिपातै-
 र्दिशि दिशि पशुपानां मण्डले दण्ड्यमाने ।
कुपितहरिकृतान्नः पाहि पाहीति तेषां
 वचनमजित! शृण्वन् मा बिभीतेत्यभाणीः ॥ २ ॥

विपुलेति । विपुलकरकमिश्रैः स्थूलजलशर्करामिश्रैः । कुपितेन हरिणेन्द्रेण कृताद् वर्षादिति शेषः । मा बिभीत भयं मा कुरुतेत्यभाणीरवादीः ॥ २ ॥

कुल इह खलु गोत्रो दैवतं गोत्रशत्रो-
 र्विहतिमिह स रुन्ध्यात् को नु वः संशयोऽस्मिन् ।
इति सहसितवादी देव! गोवर्धनाद्रिं
 त्वरितमुदमूमूलो मूलतो बाल! दोर्भ्याम् ॥ ३ ॥

कुल इति । इह कुले गोत्रः पर्वतो दैवतम् । स गोवर्धनो गोत्रशत्रोरिन्द्राज्जातां विहतिं नाशं रुन्ध्यात् । अस्मिन् मदुक्ते वः कः संशयः, यतो गोत्राणाद् गोत्रो गोवर्धन इति चास्य संज्ञा । उदमुमूल उन्मूलितवानसि ॥ ३ ॥

तदनु गिरिवरस्य प्रोद्धृतस्यास्य तावत्
　सिकतिलमृदुदेशे दूरतो वारितापे ।
परिकरपरिमिश्रान् धेनुगोपानधस्ता-
　दुपनिदधदधत्था हस्तपद्मेन शैलम् ॥ ४ ॥

तदन्विति । सिकतिले वालुकाप्राये मृदुनि स्निग्धे देशे वारिता बहिष्कृता आपो यस्मात् तत्र गिरिवरस्याधस्तात् परिकरैः शिक्यभाण्डादिभिः परिमिश्रान् उपनिदधत् प्रवेशयन् अधत्था धृतवान् ॥ ४ ॥

भवति विधृतशैले बालिकाभिर्वयस्यै-
　रपि विहितविलासं केलिलापादिलोले ।
सविधमिलितधेनूरेकहस्तेन कण्डू-
　यति सति पशुपालास्तोषमैषन्त सर्वे ॥ ५ ॥

भवतीति । केलिलापादौ क्रीडासल्लापादौ लोले सकुतुके तोषं सन्तोषमैषन्त । बालिकाबालनर्मालापैकहस्तधेनुकण्डूयनादिभिरपगताचलपतनभयाः सन्तोषं प्राप्ता इत्यर्थः ॥ ५ ॥

अतिमहान् गिरिरेष तु वामके करसरोरुहि तं धरते चिरम् ।
किमिदमद्भुतमद्रिबलं न्विति त्वदवलोकिभिराकथि गोपकैः ॥ ६ ॥

अतीति । करसरोरुहि कराब्जे धरते दधाति, किमिदमद्रेर्बलं पक्षरहितस्याप्युड्डयनशक्तिर्नु इत्याकथि कथ्यते स्म ॥ ६ ॥

---

१. 'वा(च्य?स्य) सं' ख. पाठः.

**अहह धार्ष्ट्यममुष्य वटोर्गिरिं व्यथितबाहुरसाववरोपयेत् ।**
**इति हरिस्त्वयि बद्धविगर्हणो दिवससप्तकमुग्रमवर्षयत् ॥ ७ ॥**

**अहहेति** । व्यथितः प्राप्तसादो बाहुर्यस्य । अवरोपयेद् अधः स्थापयेत् । बद्धविगर्हणः सञ्जातनिन्दः हरिः इन्द्रः दिवससप्तकमुग्रमवर्षयत् ॥ ७ ॥

**अचलति त्वयि देव! पदात् पदं गलितसर्वजले च घनोत्करे ।**
**अपहृते मरुता मरुतां पतिस्त्वदभिशङ्कितधीः समुपाद्रवत् ॥ ८ ॥**

**अचलतीति** । त्वयि पदात् स्वस्थानात् पदप्रमाणं देशमपि अचलति अगच्छति सति गलितसर्वजले निस्सारे अत एव मरुता वायुना अपहृते त्वत्सकाशाद्[1] अभिशङ्कितधीर्भीतः । अथवा त्वदभिशङ्किता विष्णुः स्वयमयमिति सशङ्का धीर्यस्य । समुपाद्रवत् सम्प्राप्तवान् ॥ ८ ॥

**शममुपेयुषि वर्षभरे तदा पशुपधेनुकुले च विनिर्गते ।**
**भुवि विभो! समुपाहितभूधरः प्रमुदितैः पशुपैः परिरेभिषे ॥ ९ ॥**

**शममिति** । उपेयुषि प्राप्तवति । भुवि समुपाहितभूधरः यथास्थानं निक्षिप्तगोवर्धनः त्वं परिरेभिषे आश्लिष्टोऽभूः ॥ ९ ॥

**धरणिमेव पुरा धृतवानसि क्षितिधरोद्धरणे तव कः श्रमः ।**
**इति नुतस्त्रिदशैः कमलापते! गुरुपुरालय! पालय मां गदात् ॥ १० ॥**

**धरणिमिति** । पुरा वराहावतारे ॥ १० ॥

**इति गोवर्धनोद्धरणवर्णनं त्रिषष्टितमं दशकम् ।**

---

१. 'त् त्वद् अ' ख. पाठः.

**आलोक्य शैलोद्धरणादिरूपं प्रभावमुच्चैस्तव गोपलोकाः ।**
**विश्वेश्वरं त्वामभिमत्य[1] विश्वे नन्दं भवज्जातकमन्वपृच्छन् ॥ १ ॥**

**आलोक्येति** । विश्वे सर्वे गोपालकास्तवोच्चैः उत्कृष्टं प्रभावमालोक्य त्वां विश्वेश्वरमवबुध्य नन्दं प्रति भवतो जातकमन्वपृच्छन् ॥ १ ॥

**गर्गोदितो निर्गदितो निजाय वर्गाय तातेन तव प्रभावः ।**
**पूर्वाधिकस्त्वय्यनुराग एषामैधिष्ट तावद् बहुमानभारः ॥ २ ॥**

**गर्गोदित** इति । तातेन नन्देन गर्गोदितः 'जेष्यति बहुतरदैत्यान्' (द. ४४. श्लो. ८) इत्येवंरूपः तव प्रभावो निजाय वर्गाय गोपसमूहाय निर्गदित उपदिष्टः ॥

**ततोऽवमानोदिततत्त्वबोधः सुराधिराजः सह दिव्यगव्या ।**
**उपेत्य तुष्टाव स नष्टगर्वः स्पृष्ट्वा पदाब्जं मणिमौलिना ते ॥ ३ ॥**

**तत** इति । ततः अवमानेन पराजयेन उदिततत्त्वबोधः मदर्थमवतीर्णो मत्स्वाम्ययमिति । दिव्यगवी सुरभिः, तया सह ॥ ३ ॥

**स्नेहस्नुतैस्त्वां सुरभिः पयोभिर्गोविन्दनामाङ्कितमभ्यषिञ्चत् ।**
**ऐरावतोपाहृतदिव्यगङ्गापाथोभिरिन्द्रोऽपि च जातहर्षः ॥ ४ ॥**

**स्नेहेति** । स्नेहेन स्नुतैः क्षरितैः सुरभिरभ्यषिञ्चद्, अत एव गोविन्दनामाङ्कितम् इन्द्रोऽपि दिव्यगङ्गायाः पाथोभिः जलैः ॥ ४ ॥

**जगत्त्रयेशे त्वयि गोकुलेशतया[2]ऽभिषिक्ते सति गोपवाटः ।**
**नाकेऽपि वैकुण्ठपदेऽप्यलभ्यां श्रियं प्रपेदे भवतः प्रभावात् ॥ ५ ॥**

**जगदिति** । त्वयि गोकुलेशतयाऽभिषिक्ते सति गोपवाटो व्रजः नाके स्वर्गे ॥

---

१. 'त्वामभिमत्योद्दिश्य न' ख. ग. पाठः.　　२. 'शे तथाभि' ग. घ. ङ. च. पाठः.

**कदाचिदन्तर्यमुनं प्रभाते स्नायन् पिता वारुणपूरुषेण ।**
**नीतस्तमानेतुमगाः पुरीं त्वं तां वारुणीं कारणमर्त्यरूपः ॥ ६ ॥**

**कदाचिदिति** । अन्तर्यमुनं यमुनायाम् । वारुणपूरुषेण वरुणदूतेन । कारणमर्त्यरूपः भूभारहरणार्थोपात्तमनुष्यदेहो वारुणीं पुरीमगाः ॥ ६ ॥

**ससम्भ्रमं तेन जलाधिपेन प्रपूजितस्त्वं प्रतिगृह्य तातम् ।**
**उपागतस्तत्क्षणमात्मगेहं पितावदत् तच्चरितं निजेभ्यः ॥ ७ ॥**

**ससम्भ्रममिति** । जलाधिपेन वरुणेन ससम्भ्रमं त्वद्दर्शनजातसम्भ्रमं प्रपूजितः । तातं नन्दम् । तच्चरितं नन्दहरणरूपम् ॥ ७ ॥

**हरिं विनिश्चित्य भवन्तमेतान् भवत्पदालोकनबद्धतृष्णान् ।**
**निरीक्ष्य विष्णो[1]! परमं पदं तद् दुरापमन्यैस्त्वमदीदृशस्तान् ॥ ८ ॥**

**हरिमिति** । एवमादिप्रभावैर्भवन्तं हरिं विनिश्चित्य भवतः पदं परं ब्रह्म, तदालोकने बद्धतृष्णान् परमं पदं ब्रह्म अदीदृशः प्रदर्शयामासिथ ॥ ८ ॥

**स्फुरत्परानन्दरसप्रवाहप्रपूर्णकैवल्यमहापयोधौ ।**
**चिरं निमग्नाः खलु गोपसङ्घास्त्वयैव भूमन्! पुनरुद्धृतास्ते ॥ ९ ॥**

**स्फुरदिति** । परमानन्दामृतप्रवाहपूर्णे कैवल्याख्ये महार्णवे ॥ ९ ॥

त्वं श्रीकृष्णः साक्षात् परमात्मैव, भक्तेभ्यः करामलकवत् स्वस्वरूपब्रह्मप्रदर्शकत्वादित्याह—

**करबदरवदेवं देव! कुत्रावतारे**
**निजपदमनवाप्यं दर्शितं भक्तिभाजाम् ।**

---

१. 'ष्णोः' क. पाठः.

तदिह पशुपरूपी त्वं हि साक्षात् परात्मन्!
　　पवनपुरनिवासिन्! पाहि मामामयेभ्यः ॥ १० ॥

इति गोविन्दपट्टाभिषेकवर्णनं वरुणलोकाद् नन्दानयनवर्णनं च

चतुष्षष्टितमं दशकम् ।

---

गोपीजनाय कथितं नियमावसाने
　　मारोत्सवं त्वमथ साधयितुं प्रवृत्तः ।
सान्द्रेण चान्द्रमहसा शिशिरीकृताशे
　　प्रापूरयो मुरलिकां यमुनावनान्ते ॥ १ ॥

**गोपी**ति । नियमावसाने गिरिजार्चनव्रतसमाप्तौ कथितं प्रतिज्ञातं मारोत्सवं रासक्रीडादि । यमुनावनान्ते स्थित्वा मुरलिकां वेणुं प्रापूरयः उदैरयः ॥

सम्मूर्छनाभिरुदितस्वरमण्डलाभिः
　　सम्मूर्छयन्तमखिलं भुवनान्तरालम् ।
त्वद्वेणुनादमुपकर्ण्य विभो! तरुण्य-
　　स्तत्तादृशं कमपि चित्तविमोहमापुः ॥ २ ॥

**सम्मूर्छनाभि**रिति । उदितानि स्वरमण्डलानि प्रयोगभेदाः यासु ताभिः सम्मूर्छनाभिः आरोहावरोहणरूपैः सप्तभिः स्वरैः 'क्रमयुक्ताः स्वराः सप्त मूर्छनाः परिकीर्तिताः' इत्युक्तेः । सम्मूर्छयन्तं मोहयन्तम् । तत्तादृशम् अनुपमम् ॥ २ ॥

ता गेहकृत्यनिरतास्तनयप्रसक्ताः
　　कान्तोपसेवनपराश्च सरोरुहाक्ष्यः ।
सर्वं विसृज्य मुरलीरवमोहितास्ते
　　कान्तारदेशमयि कान्ततनो! समेताः ॥ ३ ॥

---

१. 'त्मा' ग. घ. ङ. च. पाठः.

ता इति। कान्तोपसेवनपराः भर्तृशुश्रूषापराः ॥ ३ ॥

काश्चिन्निजाङ्गपरिभूषणमादधाना
वेणुप्रणादमुपकर्ण्य कृतार्धभूषाः।
त्वामागता ननु तथैव विभूषिताभ्य-
स्ता एव संरुरुचिरे तव लोचनाय ॥ ४ ॥

काश्चिदिति। निजाङ्गपरिभूषणं सर्वावयवभूषणम् आदधानाः कुर्वत्यः वेणुप्रणादमुपकर्ण्य त्वामागताः प्राप्ताः काश्चित्। कृतार्धभूषाः वेणुप्रणादमुपकर्ण्य तथैव कृतार्धभूषा एवागताः। तत्र विभूषिताभ्यः सर्वावयवभूषणसविलम्बाभ्यः ताः कृतार्धभूषा एव एता मत्प्रेमातिशयेन विस्मृतभूषणवैकल्या अहो इति ननु तव लोचनाय संरुरुचिरे तव नयनरुचिविषया बभूवुरित्यर्थः ॥ ४ ॥

हारं नितम्बभुवि काचन धारयन्ती
काञ्चीं च कण्ठभुवि देव! समागता त्वाम्।
हारित्वमात्मजघनस्य मुकुन्द! तुभ्यं
व्यक्तं बभाष इव मुग्धमुखी विशेषात् ॥ ५ ॥

हारमिति। हारोऽस्त्यस्मिन्निति हारी, तत्त्वं हारित्वं मनोहरत्वं च आत्मनः स्वस्य जघनस्य विशेषान्मनोहरत्वं मुग्धमुखी तुभ्यं भवते बभाष इव ॥ ५ ॥

काचित् कुचे पुनरसज्जितकञ्चुलीका
व्यामोहतः परवधूभिरलक्ष्यमाणा।
त्वामाययौ निरुपमप्रणयातिभार-
राज्याभिषेकविधये कलशीधरेव ॥ ६ ॥

काचिदिति। असज्जितकञ्चुलीका असंयोजितमात्रिका। तस्याः परवधूनां च व्यामोहतः। निरुपमेति। प्रणयातिशयरूपे राज्येऽवस्थाप्याभिषेकाय कुचभररूपकलशीधरेव ॥ ६ ॥

**काश्चिद् गृहात् किल निरेतुमपारयन्त्य-**
**स्त्वामेव देव! हृदये सुदृढं विभाव्य ।**
**देहं विधूय परचित्सुखरूपमेकं**
**त्वामाविशन् परमिमा ननु धन्यधन्याः ॥ ७ ॥**

**काश्चिदि**ति । काश्चिद् बन्धुभिर्निषिध्यमानतया गृहाद् निरेतुं निर्गन्तुम् अपारयन्त्यः अशक्ताः त्वां सुदृढं विभाव्य समाधाय देहं स्थूलं सूक्ष्मं च विधूय त्यक्त्वा । परचिदिति । सच्चिदानन्दाद्वयं परं ब्रह्माविशन् । धन्यधन्याः अतिशयेन भाग्यवत्यः ॥ ७ ॥

**जारात्मना न परमात्मतया स्मरन्त्यो**
**नार्यो गताः परमहंसगतिं क्षणेन ।**
**तत् त्वां प्रकाशपरमात्मतनुं कथञ्चि-**
**च्चित्ते वहन्नमृतमश्रममश्नुवीय ॥ ८ ॥**

**जारात्मने**ति । जारात्मना जारबुद्ध्या न परमात्मतया किन्तु केवलमनुप्यबुद्ध्या त्वां स्मरन्त्यो नार्यो गोप्यः परमहंसानाम् आत्मानात्मविवेकिनां गतिं मोक्षं गताः प्राप्ता इति यत्, तत् तस्मात् प्रकाशपरमात्मतनुं प्रकटीकृतब्रह्मस्वरूपं त्वां कथञ्चित् कामाद् द्वेषाद् भयाद्वा चित्ते वहन् चिन्तयन् अमृतं मोक्षम् अश्नुवीय प्राप्नुयाम् ॥ ८ ॥

**अभ्यागताभिरभितो व्रजसुन्दरीभि-**
**र्मुग्धस्मितार्द्रवदनः करुणावलोकी ।**
**निस्सीमकान्तिजलधिस्त्वमवेक्ष्यमाणो**
**विश्वैकहृद्य! हर मे परमेश! रोगान् ॥ ९ ॥**

**अभ्यागताभिरि**ति । हे विश्वैकहृद्य! अभितोऽभ्यागताभिः परिवार्य स्थिताभिः अवेक्ष्यमाणः कटाक्षपात्रीभूतः ॥ ९ ॥

इति रासक्रीडायां गोपीनां भगवत्समीपगमनवर्णनं

**पञ्चषष्टितमं दशकमेकोनम् ।**

---

**उपयातानां सुदृशां कुसुमायुधबाणपातविवशानाम् ।**
**अभिवाञ्छितं विधातुं कृतमतिरपि ता जगाथ वाममिव ॥ १ ॥**

**उपयातानामिति** । उपयातानां समीपं प्राप्तानां सुदृशां सुन्दरीणाम् अभिवाञ्छितं मारोत्सवं विधातुं कर्तुं कृतमतिर्निश्चितबुद्धिरपि प्रथमं ताः गोपीः वामं प्रतिकूलमिव जगाथ उक्तवान् ॥ १ ॥

**गगनगतं मुनिनिवहं श्रावयितुं जगिथ कुलवधूधर्मम् ।**
**धर्म्यं खलु ते वचनं कर्म तु नो निर्मलस्य विश्वास्यम् ॥ २ ॥**

**गगनेति** । जगिथ उक्तवान् । नन्वनुपनीतस्य कुलवधूभिः कामोत्सवोऽधर्मस्तत्कर्त्रा प्रोक्ते कुलवधूधर्मे कथं मुनीनां विश्वास इत्याशङ्कायामाह — धर्म्यं खल्विति । ते ईश्वरस्य वचनं धर्म्यं धर्मादनपेतम् । कर्म तु नो विश्वास्यम् । क्वचिदधर्मरूपमपि भवति । तेन तव न दोषः, यतो निर्मलः, निर्गुणत्वात् कर्मानधिकारी त्वम् ॥ २ ॥

**आकर्ण्य ते प्रतीपां वाणीमेणीदृशः परं दीनाः ।**
**मा मा करुणासिन्धो! परित्यजेत्यतिचिरं विलेपुस्ताः ॥ ३ ॥**

**आकर्ण्येति** । ते तव प्रतीपां 'भवतीनां निशि भर्तॄन् विरहय्येह मत्समीपागमनम् अनुचितम् । अतस्त्वरितमात्मगृहं याते'त्यादिरूपतया प्रतिकूलाम् । दीनाः क्षीणमानसा मा मास्मान् परित्यजेति विलेपुः रोदनपूर्वकमुक्तवत्यः ॥ ३ ॥

**तासां रुदितैर्लपितैः करुणाकुलमानसो मुरारे! त्वम् ।**
**ताभिः समं प्रवृत्तो यमुनापुलिनेषु काममभिरन्तुम् ॥ ४ ॥**

**तासामिति** । लपितैर्वचनैश्च । ताभिः समं सह कामं यथेच्छम् अभिरन्तुं क्रीडितुं प्रवृत्तः आरब्धः ॥ ४ ॥

**चन्द्रकरस्यन्दलसत्सुन्दरयमुनातटान्तवीथीषु ।**
**गोपीजनोत्तरीयैरापादितसंस्तरो न्यषीदस्त्वम् ॥ ५ ॥**

**चन्द्रेति** । चन्द्रकरस्यामृतमयस्य स्यन्दो द्रवः तेन लसन्तीषु सुन्दरीषु यमुनातीरस्थलीषु गोपीजनानामुत्तरीयैरापादित उत्पादितः संस्तरो विष्टरो यस्य स त्वं न्यषीद उपविष्टोऽभूः ॥ ५ ॥

**सुमधुरनर्मालपनैः करसंग्रहणैश्च चुम्बनोल्लासैः ।**
**गाढालिङ्गनसङ्गैस्त्वमङ्गनालोकमाकुलीचकृषे ॥ ६ ॥**

**सुमधुरेति** । सुमधुरैः श्रोत्रानन्दैः नर्मालपनैः क्रीडावचनैः । गाढालिङ्गनैः क्षीरनीरवदङ्गप्रत्यङ्गसंश्लेषणैः आकुलीचकृषे द्रावयामासिथ ॥ ६ ॥

**वासोहरणदिने यद् वासोहरणं प्रतिश्रुतं तासाम् ।**
**तदपि विभो! रसविवशस्वान्तानां कान्तसुभ्रुवामदधाः ॥ ७ ॥**

**वास** इति । वासोहरणदिने गिरिजार्चनसमाप्तिदिने प्रतिश्रुतं प्रतिज्ञातं वासोहरणं तासां नितम्बप्रदेशाद् वसनाक्षेपम् अदधाः कृतवान् ॥ ७ ॥

**कन्दलितघर्मलेशं कुन्दमृदुस्मेरवक्त्रपाथोजम् ।**
**नन्दसुत! त्वां त्रिजगत्सुन्दरमुपगृह्य नन्दिता बालाः ॥ ८ ॥**

**कन्दलितेति** । कन्दलिता अङ्कुरिताः घर्मलेशाः स्वेदबिन्दवो यस्मिन् । कुन्दकुसुमवद् मृदुस्मेरम् अल्पस्मितं वक्त्रपाथोजं वदनपद्मं यस्य । नन्दिता हृष्टाः ॥ ८ ॥

**विरहेष्वङ्गारमयः शृङ्गारमयश्च सङ्गमेऽपि त्वम् ।**
**नितरामङ्गारमयस्तत्र पुनः सङ्गमेऽपि चित्रमिदम् ॥ ९ ॥**

**विरहेष्विति** । शृङ्गारमयः शृङ्गाररसोचितभाषावेषव्यापारस्त्वं विरहेषु स्त्रीणामङ्गारमयो दहनरूपश्च सन्तापकरत्वात् । सङ्गमेऽपि त्वं नितरामङ्गारमय इतीदं चित्रम् । हे अङ्ग! त्वं नितरामरमय इत्येवार्थः ॥ ९ ॥

तासु राधायां भगवतः प्रेमातिशयात् सविशेषं तामभिरमयन्तं भगवन्तं प्रार्थ-यते —

राधातुङ्गपयोधरसाधुपरीरम्भलोलुपात्मानम् ।
आराधये भवन्तं पवनपुराधीश ! शमय सकलगदान् ॥ १० ॥

इति रासक्रीडायां गोपीनां भगवत्कृतधर्मोपदेशवर्णनं यमुनापुलिने
भगवता सह विहारवर्णनं च

षट्षष्टितमं दशकम् ।

---

स्फुरत्परानन्दरसात्मकेन त्वया समासादितभोगलीलाः ।
असीममानन्दभरं प्रपन्ना महान्तमापुर्मदमम्बुजाक्ष्यः ॥ १ ॥

स्फुरदिति । स्फुरत्परानन्दरस आत्मा मूर्तिर्यस्य तेन त्वया समासादिता प्राप्ता भोगलीला रतिक्रीडा याभिः । असीमम् अनवधिम् आनन्दरसं रतिसुखापरपर्यायं ब्रह्मानन्दं प्रपन्ना महान्तं मदमापुः ॥ १ ॥

तत्प्रकारमाह —

निलीयतेऽसौ मयि मय्यमायं रमापतिर्विश्वमनोभिरामः ।
इतिस्म सर्वाः कलिताभिमाना निरीक्ष्य गोविन्द ! तिरोहितोऽभूः ॥ २ ॥

निलीयत इति । असौ कृष्णो मय्यमायं निर्व्याजं निलीयते सक्तो भवति । अन्यासु सौजन्याद्यर्थं मायया प्रणयवानिव । अन्या मयि निलीयते । इति कलितो धृतोऽभिमानो यासां ता निरीक्ष्य तिरोहितोऽन्तर्हितोऽभूः ॥ २ ॥

राधाभिधां तावदजातगर्वामतिप्रियां गोपवधूं मुरारे ! ।
भवानुपादाय गतो विदूरं तया सह स्वैरविहारकारी ॥ ३ ॥

राधेति । अजातगर्वतयातिप्रियाम् ॥ ३ ॥

तिरोहितेऽथ त्वयि जाततापाः समं समेताः कमलायताक्ष्यः ।
वने वने त्वां परिमार्गयन्त्यो विषादमापुर्भगवन्नपारम् ॥ ४ ॥

**तिरोहित** इति । समं जाततापास्तुल्यसन्तापाः समेताः सहिताः परिमार्गयन्त्योऽन्वेषमाणाः भवन्तं नापुः किन्तु विषादमापुः ॥ ४ ॥

ता विषण्णतयाचेतनानपि भवन्तं पप्रच्छुरित्याह —

**हा चूत! हा चम्पक! कर्णिकार! हा मल्लिके! मालति! बालवल्ल्यः! ।**
**किं वीक्षितो नो हृदयैकचोर इत्यादि तास्त्वत्प्रवणा विलेपुः ॥ ५ ॥**

**हा चूतेति** । हे बालवल्ल्यः! युष्माभिर्नोऽस्माकं हृदयैकचोरः किं वीक्षितः। त्वत्प्रवणाः त्वदेकचित्ताः ॥ ५ ॥

**निरीक्षितोऽयं सखि! पङ्कजाक्षः पुरो ममेत्याकुलमालपन्ती ।**
**त्वां भावनाचक्षुषि वीक्ष्य काचित् तापं सखीनां द्विगुणीचकार ॥ ६ ॥**

**निरीक्षित** इति । हे सखि! अयं पङ्कजाक्षः कृष्णः मम पुरो निरीक्षितः प्रत्यक्षीकृतः । भावनाचक्षुषि सङ्कल्पात्मके चक्षुषि प्रत्यक्षमिव त्वां वीक्ष्य सखीनां तापम् आशाजननेन द्विगुणीचकार ॥ ६ ॥

**त्वदात्मिकास्ता यमुनातटान्ते तवानुचक्रुः किल चेष्टितानि ।**
**विचित्य भूयोऽपि तथैव मानात् त्वया वियुक्तां[1] ददृशुश्च राधाम् ॥ ७ ॥**

**त्वदिति** । त्वदात्मिकाः भावनाबलेन[2] त्वन्मयतां गताः तव चेष्टितानि पूतनावधार्जुनभञ्जनादीनि अनुचक्रुः अनुकृतवत्यः । भूयोऽपि त्वां विचित्य अन्विष्य यथान्यासां तथैव मानाद् अहमस्यातिप्रियेत्यभिमानात् त्वया वियुक्तां राधां ददृशुः ॥ ७ ॥

**ततः समं ता विपिने समन्तात् तमोवतारावधि मार्गयन्त्यः ।**
**पुनर्विमिश्रा यमुनातटान्ते भृशं विलेपुश्च जगुर्गुणांस्ते ॥ ८ ॥**

**तत** इति । ततः समं तया सह ता गोप्यः वने समन्तात् पर्यन्ततः तमोवतारावधि चन्द्रास्तमयपर्यन्तं[3] मार्गयन्त्यः अन्वेषमाणाः विमिश्राः सहिताः विलेपुः सप्रार्थनं सुस्वरं रुरुदुः ॥ ८ ॥

---

१. 'मु' क. घ. पाठः. २. 'प्रकर्षेण त्व' क. ग. पाठः. ३. 'न्तं परिमा' ख. पाठः.

**तथाव्यथासंकुलमानसानां व्रजाङ्गनानां करुणैकसिन्धो! ।**
**जगत्त्रयीमोहनमोहनात्मा त्वं प्रादुरासीरयि मन्दहासी ॥ ९ ॥**

तथेति । तथाभूतया अनिर्देश्यया व्यथया पीडया संकुलम् आकुलं मानसं यासाम् । जगत्त्रयीमोहनः कामः तस्यापि मोहन आत्मा मूर्तिर्यस्य स त्वं मन्दहासी सन् प्रादुरासीः ॥ ९ ॥

**सन्दिग्धसन्दर्शनमात्मकान्तं त्वां वीक्ष्य तन्व्यः सहसा तदानीम् ।**
**किं किं न चक्रुः प्रमदातिभारात् स त्वं गदात् पालय मारुतेश! ॥१०॥**

सन्दिग्धेति । इतः परमपि नाम तं द्रक्ष्यामि[1] न वेति सन्दिग्धं सन्दर्शनं यस्य । प्रमदातिभाराद् हर्षावेशेन ॥ १० ॥

इति रासक्रीडायां गोपीनां मदापनोदाय भगवतस्तिरोधानवर्णनं
भगवदन्वेषणवर्णनं भगवदाविर्भाववर्णनं च
**सप्तषष्टितमं दशकम् ।**

---

**तव विलोकनाद् गोपिकाजनाः प्रमदसंकुलाः पङ्कजेक्षण! ।**
**अमृतधारया संप्लुता इव स्तिमिततां दधुस्त्वत्पुरोगताः ॥ १ ॥**

तवेति । प्रमदसंकुलाः प्रमोदाकुलाः संप्लुताः अभिषिक्ताः स्तिमिततां निश्चलतां दधुः ॥ १ ॥

**तदनु काचन त्वत्कराम्बुजं सपदि गृह्णती निर्विशङ्कितम् ।**
**घनपयोधरे सन्निधाय सा पुलकसंवृता तस्थुषी चिरम् ॥ २ ॥**

तदन्विति । सपदि दर्शनसमनन्तरमेव इतरासु स्थितासु निर्विशङ्कितं घने निबिडे पयोधरे त्वत्कराम्बुजस्पर्शजनितानन्दातिशयानुभावेन पुलकेन संवृता चिरं तस्थुषी स्थितवती ॥ २ ॥

---

१. 'मीति' क. ख. पाठः.

**तव विभो! परा कोमलं भुजं निजगलान्तरे पर्यवेष्टयत् ।**
**गलसमुद्गतं प्राणमारुतं प्रतिनिरुन्धतीवातिहर्षुला ॥ ३ ॥**

**तवेति** । अपरा तव भुजं गृहीत्वा निजगलान्तरे पर्यवेष्टयद् बबन्ध त्वद्विरहव्यथया निर्गमिष्यन्तं प्राणमारुतं प्रतिनिरुन्धतीव ॥ ३ ॥

**अपगतत्रपा कापि कामिनी तव मुखाम्बुजात् पूगचर्वितम् ।**
**प्रतिगृह्य तद् वक्त्रपङ्कजे निदधती गता पूर्णकामताम् ॥ ४ ॥**

**अपगतेति**[1] । प्रतिगृह्य गृहीत्वा तत् पूगचर्वितं स्ववक्त्रपङ्कजे निदधती आस्वादयन्ती पूर्णकामतां सञ्जातजीवनफलतां गता प्राप्ता ॥ ४ ॥

**विकरुणो वने संविहाय मामपगतोऽसि का त्वामिह स्पृशेत् ।**
**इति सरोषया तावदेकया सजललोचनं वीक्षितो भवान् ॥ ५ ॥**

**विकरुण इति** । वने मां संविहाय अपगतो दूरं गतोऽसि । अतो विकरुणो निष्कृपस्त्वमिदानीं किमर्थमागतोऽसि । इह अस्मासु का त्वां स्पृशेदिति सजललोचनं यथा भवति तथा वीक्षितः ॥ ५ ॥

**इति मुदाकुलैर्वल्लवीजनैः सममुपागतो यामुने तटे ।**
**मृदुकुचाम्बरैः कल्पितासने घुसृणभासुरे पर्यशोभथाः ॥ ६ ॥**

**इतीति** । मृदुभिः कुचाम्बरैः उत्तरीयैः कल्पिते आसने घुसृणभासुरे कुङ्कुमशोभिते ॥ ६ ॥

ततश्च सहोपविष्टास्ता भवन्तमाहुरित्याह—

**कतिविधा कृपा केऽपि सर्वतो धृतदयोदयाः केचिदाश्रिते ।**
**कतिचिदीदृशा मादृशेष्वपीत्यभिहितो भवान् वल्लवीजनैः ॥ ७ ॥**

**कतिविधेति** । इह जगति कतिविधा कृपा । केऽपि सर्वतः सर्वजनेषु धृतदयोदयाः कृपावन्तः । केचिदाश्रिते जन एव धृतदयोदयाः । कतिचित् केचिद् मादृशेष्वाश्रितेष्वपि ईदृशाः भवानिव निष्करुणाः । तत्र तत्त्वं ब्रूहीति शेषः ॥ ७ ॥

१. 'ति । त' क. ख. पाठः.

भवानुत्तरमाह—

अयि कुमारिका! नैव शङ्क्यतां कठिनता मयि प्रेमकातरे ।
मयि तु चेतसो वोऽनुवृत्तये कृतमिदं मयेत्यूचिवान् भवान् ॥ ८ ॥

अयीति । हे कुमारिकाः! अबलाः! प्रेमकातरे प्रणयापायभीरौ मयि कठिनता निष्करुणता नैव शङ्क्यताम् । वो युष्माकं मयि चेतसोऽनुवृत्तये मनस्समाधानाय मयेदं तिरोधानं कृतम् ॥ ८ ॥

अयि निशम्यतां जीववल्लभाः! प्रियतमो जनो नेदृशो मम ।
तदिह रम्यतां रम्ययामिनीष्वनुपरोधमित्यालपो विभो! ॥ ९ ॥

अयीति । अयि जीववल्लभाः! प्राणनाथाः! निशम्यतां तत्त्वम् । ममेदृशः प्रियतमो नास्ति यथा भवत्यः । तत् तस्माद् इह यमुनातीरेषु सचन्द्रतया रम्यासु यामिनीषु अनुपरोधं निश्शङ्कं मया सह रम्यतामित्यालपः ऊचिषे ॥ ९ ॥

इति गिराधिकं मोदमेदुरैर्व्रजवधूजनैः साकमारमन् ।
कलितकौतुको रासखेलने गुरुपुरीपते! पाहि मां गदात् ॥ १० ॥

इतीति । मोदेन मेदुरैः व्याप्तैः । आरमन् क्रीडन् । रासखेलने रासक्रीडायां कलितकौतुकः धृताग्रहः ॥ १० ॥

इति रासक्रीडायां गोपीनां भगवत्समागमादानन्दपारवश्यवर्णनं
प्रणयकोपवर्णनं भगवत्कृतसान्त्वनवर्णनं च

अष्टषष्टितमं दशकम् ।

---

अथ रासक्रीडां वर्णयति—

केशपाशधृतपिञ्छिकावितति सञ्चलन्मकरकुण्डलं
हारजालवनमालिकाललितमङ्गरागघनसौरभम् ।
पीतचेलधृतकाञ्चिकाञ्चितमुदञ्चदंशुमणिनूपुरं
रासकेलिपरिभूषितं तव हि रूपमीश! कलयामहे ॥ १ ॥

**केशेति** । केशपाशधृतपिञ्छिकावितति मयूरपिञ्छविरचितः परितः परिदृश्यमानचन्द्रकः शिरोलङ्कारविशेषो यस्य । गण्डमण्डले सञ्चलद् मकरकुण्डलं यस्य । हारजालैर्वनमालिकया च ललितं सुन्दरम् । समनुलिप्तैरङ्गरागैः कुङ्कुमादिभिः घनं निबिडं सौरभं सौरभ्यं यस्य । पीतचेलोपरि धृतया काञ्चिकया मणिमेखलया अञ्चितं शोभितम् । उदञ्चदंशु उद्गतमयूखं मणिमयं नूपुरं यस्य । एवं रासकेल्यै परिभूषितं विरचितनैपथ्यं तव रूपं कलयामहे उपास्महे ॥ १ ॥

**तावदेव कृतमण्डने कलितकञ्चुलीककुचमण्डले**
**गण्डलोलमणिकुण्डले युवतिमण्डलेऽथ परिमण्डले ।**
**अन्तरा सकलसुन्दरीयुगलमिन्दिरारमण! सञ्चरन्**
**मञ्जुलां तदनु रासकेलिमयि कञ्जनाभ! समुपादधाः ॥ २ ॥**

**तावदिति** । यावद् धृतरासक्रीडोचितवेषो भगवान्, तावदेव कृतं मण्डनं येन । कलिता धृता कञ्चुली गात्रिका यत्र तत् कलितकञ्चुलीकं, तत् कुचमण्डलं यस्य । अथ भूषणानन्तरं परिमण्डले निखातशङ्कुनि‡ समतलदेशे मण्डलाकारेण स्थिते सकलसुन्दरीयुगलमन्तरा द्वयोर्द्वयोर्मध्ये सञ्चरन् तत्कुचकण्ठकपोलादावभिनये च व्यग्रभुजयुगलतया सम्यक् चरन् । मञ्जुलां मनोहराम् ॥ २ ॥

**वासुदेव! तव भासमानमिह रासकेलिरससौरभं**
**दूरतोऽपि खलु नारदागदितमाकलय्य कुतुकाकुला ।**
**वेषभूषणविलासपेशलविलासिनीशतसमावृता**
**नाकतो युगपदागता वियति वेगतोऽथ सुरमण्डली ॥ ३ ॥**

**वासुदेवेति** । रासकेलिरेव रसः सकलेन्द्रियाह्लादकत्वात्, तस्य सौरभं मानोज्ञकं श्रीनारदेनागदितं निवेदितम् आकलय्य श्रुत्वा । वेषभूषणविलासेषु पेशलैः विदग्धैः विलासिनीशतैः स्वस्त्रीसहस्रैः । नाकतः स्वर्गाद् वेगतो युगपद् विमानैर्वियत्यागता सुरमण्डली देवसमूहः ॥ ३ ॥

**वेणुनादकृततानदानकलगानरागगतियोजना-**
**लोभनीयमृदुपादपातकृततालमेलनमनोहरम् ।**

---

१. 'नादक' घ. ङ. च. पाठः.

---

‡ इदं परिमण्डलविशेषणं स्यात् ।

पाणिसंक्वणितकङ्कणं च मुहुरंसलम्बितकराम्बुजं
श्रोणिबिम्बचलदम्बरं भजत रासकेलिरसडम्बरम् ॥ ४ ॥

वेण्विति। वेणुनादेन कृतेन तानदानेन गाननिदानभूतस्वरप्रदर्शनेन कलेन कण्ठोत्थिततयातिमधुरेण गानेन रागगतियोजनया रागविशेषमार्गसंयोजनेन च लोभनीयो यः पादपातः, तत्कृतेन तालमेलनेन मनोहरं रासकेलिरसस्य डम्बरं परिपोषम् ॥ ४ ॥

श्रद्धया विरचितानुगानकृततारतारमधुरस्वरे
नर्तनेऽथ ललिताङ्गहारलुलिताङ्गहारमणिभूषणे ।
सम्मदेन कृतपुष्पवर्षमलमुन्मिषद् दिविषदां कुलं
चिन्मये त्वयि निलीयमानमिव संमुमोह सवधूकुलम् ॥ ५ ॥

श्रद्धयेति । श्रद्धया कौतुकेन विरचितेनानुगानेन परोन्नीतोन्नयनेन कृतस्तारतारः क्रमादत्युच्चो मधुरस्वरो यस्मिन्, ललितैरङ्गहारैः अङ्गविक्षेपैः लुलितानि स्वस्थानात् च्युतानि अङ्गस्थहारमणिभूषणानि यस्मिन्, तस्मिन् नर्तने सति सम्मदेन स्वातिशायिप्रयोगातिशयदर्शनजनितहर्षविशेषेण कृतः पुष्पवर्षो येन । अलम् अतिशयेन उन्मिषद् दर्शनोत्सुकं सवधूकुलं सस्त्रीसमूहं दिविषदां कुलं देवसमूहः संमुमोह । निलीयमानमिव अदृष्टद्रष्टृदृश्यदर्शनभेदमित्यर्थः ॥ ५ ॥

स्विन्नसन्नतनुवल्लरी तदनु कापि नाम पशुपाङ्गना
कान्तमंसमवलम्बते स्म तव तान्तिभारमुकुलेक्षणा ।
काचिदाचलितकुन्तला नवपटीरसारघनसौरभं
वञ्चनेन तव सञ्चुचुम्ब भुजमञ्चितोरुपुलकाङ्कुरम् ॥ ६ ॥

स्विन्नेति । स्विन्ना स्वेदार्द्रा सन्ना प्राप्तसादा तनुवल्लरी यस्याः सा तथा तान्तिभारेण क्लमातिशयेन मुकुलितनयना तव कान्तं सुन्दरम् अंसं भुजमूलम् अवलम्बते स्म आश्रितवती । काचिद् अपरा आचलितकुन्तला विश्लथत्कबरीभरा नवपटीरसारेण माल्येन नवम् अननुभूतचरं सौरभं यस्मिन् । यद्वा नवप-

१. 'घनसौ' क. ग. पाठः. २. 'रा' घ. ङ. च. पाठः.

टीरसारवन्नवसौरभं तव भुजं वञ्चनेन अन्यापदेशेन सञ्चुचुम्ब । तज्जनितम् उरुपुलकाङ्कुरं यस्मिन् ॥ ६ ॥

कापि गण्डभुवि सन्निधाय निजगण्डमाकुलितकुण्डलं
पुण्यपूरनिधिरन्ववाप तव पूगचर्वितरसामृतम् ।
इन्दिराविहृतिमन्दिरं भुवनसुन्दरं हि नटनान्तरे
त्वामवाप्य दधुरङ्गनाः किमु न सम्मदोन्मददशान्तरम् ॥ ७ ॥

कापीति । तव गण्डभुवि निजगण्डम् आचलितकुण्डलं यथा भवति तथा सन्निधाय पूगचर्वितरसामृतम् अमृतमयं वीटिकारसमन्ववाप । सम्मदेन प्रमोदातिशयेन उन्मददशान्तरं पूर्वापरानुसन्धानवैधुर्यलक्षणमवस्थान्तरम् ॥ ७ ॥

गानमीश! विरतं क्रमेण किल वाद्यमेलनमुपारतं
ब्रह्मसम्मदरसाकुलाः सदसि केवलं ननृतुरङ्गनाः ।
नाविदन्नपि च नीविकां किमपि कुन्तलीमपि च कञ्चुलीं
ज्योतिषामपि कदम्बकं दिवि विलम्बितं किमपरं ब्रुवे ॥ ८ ॥

गानमिति । अङ्गनाः ब्रह्मसम्मदरसेन ब्रह्मानन्दानुभवरसेन आकुलाः परवशाः केवलं सदसि ननृतुः । नर्तनस्य कैवल्यमेवाह — गानमिति । ज्योतिषां ग्रहनक्षत्रादीनां कदम्बकमपि दिवि विलम्बितमित्यनेन सूर्योदयविलम्बात् त्रियामायामो द्योत्यते । किमपरं ब्रुवे गानवाद्यादौ प्रमादः नीवीकुन्तलगात्रिकाविश्लथनानवगतिरित्यादि भुविस्थानां पारवश्यं किमर्थमुच्यत इत्यर्थः ॥ ८ ॥

मोदसीम्नि भुवनं विलाप्य विकृतिं समाप्य च ततो विभो!
केलिसम्मृदितनिर्मलाङ्गनवघर्मलेशसुभगात्मनाम् ।
मन्मथासहनचेतसां पशुपयोषितां सुकृतचोदित-
स्तावदाकलितमूर्तिरादधिथ मारवीरपरमोत्सवान् ॥ ९ ॥

मोदेति । मोदसीम्नि ब्रह्मानन्दे भुवनं द्रष्टृलोकं विलाप्य मज्जयित्वा

---

१. 'वेन' ग. पाठः. २. 'नाविदन्निति' ग. पाठः. ३. 'धी' क. पाठः.

केलिसम्मृदिततया निर्मलानि ललितान्यङ्गानि यासां नवघर्मलेशैः सुभग आत्मा शरीरं यासां, मन्मथेनासहनं सुरतलीलाकालक्षेपासहिष्णु चेतो यासां, तासां सुकृतेन चोदितः प्रेरितः यावत्यो गोप्यस्तावत्य आकलिता धृता मूर्तयो येन ॥ ९ ॥

**केलिभेदपरिलोलिताभिरतिलालिताभिरबलालिभिः**
**स्वैरमीश! ननु सूरजापयसि चारु नाम विहृतिं व्यधाः ।**
**काननेऽपि च विसारिशीतलकिशोरमारुतमनोहरे**
**सूनसौरभमये विलेसिथ विलासिनीशतविमोहनम् ॥ १० ॥**

**केलीति** । केलिभेदैः आलिङ्गनचुम्बनप्रहरणदन्तव्रणनखक्षतचूषणसीत्कार-हिक्काश्वासादिप्रयोगरूपैः परिलोलिताभिः आकुलीक्रियमाणाभिः । सूरजापयसि यमुनाजले विहृतिं जलक्रीडां काननेऽपि च विहृतिं व्यधाः कृतवान् । विसारिणा वीजनशीलेन शीतलेन किशोरमारुतेन मन्दवायुना मनोहरे सूनानां पुष्पाणां सौरभमये । विलासिनीशतविमोहनं यथा तथा विलेसिथ अशोभथाः ॥ १० ॥

**कामिनीरिति हि यामिनीषु खलु कामनीयकनिधे! भवान्**
**पूर्णसम्मदरसार्णवं कमपि योगिगम्यमनुभावयन् ।**
**ब्रह्मशङ्करमुखानपीह पशुपाङ्गनासु बहुमानयन्**
**भक्तलोकगमनीयरूप! कमनीय! कृष्ण! परिपाहि माम् ॥११॥**

**कामिनीरिति** । हे कामनीयकनिधे! सौभाग्यार्णव! भवान् यामिनीषु कामिनीः योगिभिर्गम्यं प्राप्यं पूर्णसम्मदरसार्णवं ब्रह्मानन्दम् अनुभावयन् आस्वादयन् ब्रह्मादीनपि पशुपाङ्गनासु बहुमानयन् बहुमानयुक्तान् कुर्वन् भक्तलोकैर्गमनीयं प्राप्यं रूपं यस्य । कमनीय! कान्त! हे कृष्ण! परिपाहि ॥ ११ ॥

इति रासक्रीडायां कमनीयरूपधारिणा भगवता सह गोपीनां नृत्तगीतादिविलासवर्णनं

**एकोनसप्ततितमं दशकं सैकम् ।**

---

१. 'हृणनद' क. पाठः.

इति त्वयि रसाकुलं रमितवल्लभे वल्लवाः
कदापि पुनरम्बिकाकमितुरम्बिकाकानने ।
समेत्य भवता समं निशि निषेव्य दिव्योत्सवं
सुखं सुषुपुरग्रसीद्* व्रजपमुग्रनागस्तदा ॥ १ ॥

इतीति । इति उक्तप्रकारेण रसेन कौतुकेन आकुलं यथा भवति तथा रमिता वल्लभा येन तस्मिंस्त्वयि सति पुनः कदाचिद् वल्लवा गोपाः अम्बिकाकमितुः अम्बिकावनाख्ये शिवक्षेत्रे भवता समं समेत्य निशि दिव्योत्सवं निषेव्य सुखं सुषुपुः । तदा उग्रः क्रूरो नागोऽजगरो व्रजपं नन्दम् अग्रसीत् ॥ १ ॥

समुन्मुखमथोल्मुकैरभिहतेऽपि तस्मिन् बला-
दमुञ्चति भवत्पदे न्यपति पाहि पाहीति तैः ।
तदा खलु पदा भवान् समुपगम्य पस्पर्श तं
बभौ स च निजां तनुं समुपसाद्य वैद्याधरीम् ॥ २ ॥

समुन्मुखमिति । समुन्मुखं ग्रसनव्यग्रम् । उल्मुकैः अलातैः । तैः गोपैः भवत्पदे न्यपाति । वैद्याधरीं विद्याधरसम्बन्धिनीम् । समुपसाद्य प्राप्य बभौ शुशुभे ॥ २ ॥

सुदर्शनधर! प्रभो! ननु सुदर्शनाख्योऽस्म्यहं
मुनीन् क्वचिदपाहसं त इह मां व्यधुर्वाहसम् ।
भवत्पदसमर्पणादमलतां गतोऽस्मीत्यसौ
स्तुवन् निजपदं ययौ व्रजपदं च गोपा मुदा ॥ ३ ॥

सुदर्शनेति । क्वचित् कदाचिद् मुनीन् अङ्गिरसः अपाहसम् अपहसितवानस्मि । ते मुनयः इह अस्मिन् प्रदेशे मां वाहसम् अजगरं व्यधुः यत आत्मनः सुरूपतया दृप्तोऽस्मान् विरूपतयापहसितवान्, अतस्त्वमजगरो भवितेति शप्तवन्तः । इदानीममलतां गतः शापान्मुक्त इत्युक्त्वा स्तुवन् निजपदं विद्याधरलोकम् ॥ ३ ॥

---

१. 'रमम्बि' क. ग. घ. ङ. पाठः.

---

* परस्मैपदमात्मनेपदानित्यत्वात् ।

कदापि खलु सीरिणा विहरति त्वयि स्त्रीजनं-
जहार धनदानुगः स किल शङ्खचूडोऽबलाः ।
अतिद्रुतमनुद्रुतस्तमथ मुक्तनारीजनं
रुरोजिथ शिरोमणिं हलभृते च तस्याददाः ॥ ४ ॥

कदापीति । सीरिणा बलभद्रेण सह विहरति क्रीडति सति धनदानुगो वैश्रवणभृत्यः अबलाः गोपीः जहार । अतिद्रुतं शीघ्रम् अनुद्रुतः अनुगतः भयान्मुक्तो नारीजनो येन तं शङ्खचूडं रुरोजिथ निगृहीतवान् तस्य शिरोमणिं हलभृतेऽग्रजायाददाश्च ॥ ४ ॥

दिनेषु च सुहृज्जनैः सह वनेषु लीलापरं
मनोभवमनोहरं रसितवेणुनादामृतम् ।
भवन्तममरीदृशाममृतपारणादायिनं
विचिन्त्य किमु नालपन् विरहतापिता गोपिकाः ॥ ५ ॥

दिनेष्विति । एवं दिनेषु प्रतिदिनं च सुहृज्जनैः गोपबालकैः सह । मनोभवादपि मनोहरम् । रसितम् आस्वादितं वेणुनाद एवामृतं येन । अमरीदृशां स्वर्गस्त्रीनयनानाम् अमृतपारणादायिनं निजरूपामृतपानमापादयन्तम् । विरहेण क्षणं जातेन तापिताः सन्तप्तहृदयाः किमु नालपन्, तत्तदवस्थां विचिन्त्य विलेपुरित्यर्थः ॥ ५ ॥

भोजराजभृतकस्त्वथ कश्चित् कष्टदुष्टपथदृष्टिररिष्टः ।
निष्ठुराकृतिरपष्ठुनिनादस्तिष्ठते स्म भवते वृषरूपी ॥ ६ ॥

भोजेति । भोजराजस्य कंसस्य भृतकः भृत्यः । कष्टा हिंसाबहुला दुष्टपथे परोपद्रवे दृष्टिरन्वेषणं यस्य । निष्ठुरा क्रूरा आकृतिर्यस्य । वृषरूपी अपष्ठुनिनादः क्रूरस्वनः भवते तिष्ठते स्म भवद्दर्शनपथे स्थितवान् ॥ ६ ॥

शाक्वरोऽथ जगतीधृतिहारी मूर्तिमेष बृहतीं प्रदधानः ।
पङ्क्तिमाशु परिघूर्ण्य पशूनां छन्दसां निधिमवाप भवन्तम् ॥ ७ ॥

**शाकर** इति । शाकरो वृषभः जगत्या भूम्या धृतिं स्थैर्यं हर्तुं शीलमस्येति तथा । पशूनां पङ्क्तिं परिघूर्ण्य विद्राव्य छन्दसां निधिं वेदगर्भम् । एषोऽरिष्टः शक्करीजगतीधृतिबृहतीपङ्क्तिच्छन्दोमात्रयुक्तः । भवांस्तुच्छन्दोनिधिरिति महान् विशेष इति च प्रतीयते ॥ ७ ॥

**तुङ्गशृङ्गमुखमाश्वभियन्तं सङ्गृहय्य रभसादभियं तम् ।**
**भद्ररूपमपि दैत्यमभद्रं मर्दयन्नमदयः सुरलोकम् ॥ ८ ॥**

**तुङ्गेति** । तुङ्गे शृङ्गमुखे शृङ्गाग्रे यस्य, तुङ्गशृङ्गं मुखं यस्येति वा । अभियन्तम् अभिगच्छन्तम् अभियं भयरहितं भद्ररूपं वृषरूपम् अभद्रं दुष्टं सङ्गृहय्य गृहीत्वा मर्दयन् निगृह्णन् । अमदयः प्रसादयामासिथ ॥ ८ ॥

**चित्रमद्य भगवन्! वृषघातात् सुस्थिराजनि वृषस्थितिरुर्व्याम् ।**
**वर्धते च वृषचेतसि भूयान्मोद इत्यभिनुतोऽसि सुरैस्त्वम् ॥ ९ ॥**

**चित्रमिति** । वृषघातादु[1] अरिष्टवधादु[2] उर्व्यां वृषस्य धर्मस्य स्थितिः सुस्थिराजनि । वृष्ण इन्द्रस्य चेतसि, वृषस्य धर्मस्य चेतसि, धर्मबुद्धौ सज्जने वा । वृषघाताद् वृषस्य स्थितिः वृषचेतसि मोदश्चेति चित्रम् ॥ ९ ॥

**औक्षकाणि! परिधावत दूरं वीक्ष्यतामयमिहोक्षविभेदी ।**
**इत्थमात्तहसितैः सह गोपैर्गेहगस्त्वमव वातपुरेश! ॥ १० ॥**

**औक्षकाणीति** । हे औक्षकाणि! उक्षसमूहाः! वृषभसमूहाः! यूयं दूरं परिधावत । इहायमुक्षविभेदी वृषहन्ता अरिष्टहन्ता वा । इत्थमात्तहसितैः व्याहृतहास्यवचनैः ॥ १० ॥

इति सुदर्शनाख्यविद्याधरस्य शापमोक्षवर्णनं शङ्खचूडवधवर्णनं वृषभासुरवधवर्णनं च

**सप्ततितमं दशकम् ।**

---

१. 'तिः । इ' क. ख. पाठः. २. 'सि । वृषघा' क. ख. पाठः.

यत्नेषु सर्वेष्वपि नावकेशी केशी स भोजेशितुरिष्टबन्धुः ।
त्वं सिन्धुजावाप्य इतीव मत्वा संप्राप्तवान् सिन्धुजवाजिरूपः ॥ १ ॥

यत्नेष्विति । यत्नेषु नावकेशी अवन्ध्यः स केशी त्वं सिन्धुजया लक्ष्म्या अवाप्य इति सिन्धुजावाप्यश्चेदहमपि सिन्धुजो भवामीति मत्वेव ॥ १ ॥

गन्धर्वतामेष गतोऽपि रूक्षैर्नादैः समुद्वेजितसर्वलोकः ।
भवद्विलोकावधि गोपवाटीं प्रमर्द्य पापः पुनरापतत् त्वाम् ॥ २ ॥

गन्धर्वतामिति । गन्धर्वताम् अश्वताम् गतोऽपि रूक्षैर्नादैः । गन्धर्वो हि मृदुनादः ॥ २ ॥

तार्क्ष्यार्पिताङ्घ्रेस्तव तार्क्ष्य एष चिक्षेप वक्षोभुवि नाम पादम् ।
भृगोः पदाघातकथां निशम्य स्वेनापि शक्यं तदितीव मोहात् ॥ ३ ॥

तार्क्ष्येति । एष तार्क्ष्यो दनुजः । भृगुर्हि विष्णुं वक्षसि पदाहन् । तत्कथां निशम्य तत् पदाहननं स्वेनात्मनापि शक्यमिति मोहादिव ॥ ३ ॥

प्रवञ्चयन्नस्य खुराञ्चलं द्रागमुं च चिक्षेपिथ दूरदूरम् ।
संमूर्छितोऽपि ह्यतिमूर्छितेन क्रोधोष्मणा खादितुमाद्रुतस्त्वाम् ॥ ४ ॥

प्रवञ्चयन्निति । खुराञ्चलं खुरप्रहारं प्रवञ्चयन् छलयन् द्राग् झटिति पादयोर्गृहीत्वामुं दूरदूरं चिक्षेपिथ विससर्जिथ । अतिमूर्छितेन प्रवृद्धेन । आद्रुतः अभिपतितः ॥ ४ ॥

त्वं वाहदण्डे कृतधीश्च बाहादण्डं न्यधास्तस्य मुखे तदानीम् ।
तद्वृद्धिरुद्धश्वसनो गतासुः सप्तीभवन्नप्ययमैक्यमागात् ॥ ५ ॥

त्वामिति । वाहदण्डे अश्ववधे । बाहादण्डं भुजदण्डम् । तद्वृद्ध्या बाहादण्डवृद्ध्या । सप्तीभवन् अश्वीभवन्नपि भगवत्यैक्यं सायुज्यम् । वाहदण्डे कृतधीरपि बाहादण्डमिति विरोधश्च द्योत्यते ॥ ५ ॥

---

१. 'त्वां' क. ख. पाठः. २. 'स्वां' ख. पाठः. ३. 'बा' घ. पाठः.

**आलम्भमात्रेण पशोः सुराणां प्रसादके नूत्न इवाश्वमेधे ।**
**कृते त्वया हर्षवशात् सुरेन्द्रास्त्वां तुष्टुवुः केशवनामधेयम् ॥ ६ ॥**

**आलम्भेति** । अश्वमेधयागे हि पशुमालभ्य तेन यजने कृत एव देवानां प्रसादः स्यात् । इह त्वालम्भमात्रेण अश्वहिंसामात्रेण सुराणां प्रसादो जातः । अतो नूत्ने अपूर्वे अश्वमेधयागे अश्ववधे वा कृते ततः केशवनामधेयं त्वां तुष्टुवुः ॥ ६ ॥

**कंसाय ते शौरिसुतत्वमुक्त्वा तं तद्वधोत्कं प्रतिरुध्य वाचा ।**
**प्राप्तेन केशिक्षपणावसाने श्रीनारदेन त्वमभिष्टुतोऽभूः ॥ ७ ॥**

**कंसायेति** । नायं कृष्णो नन्दसुतः, किन्तु देवक्या अष्टमसुत इति ते शौरिसुतत्वमुक्त्वा ततस्तद्वधोत्कं वसुदेववधोद्युक्तं कंसं वाचा प्रतिरुध्य केशिक्षपणावसाने प्राप्तेन ॥ ७ ॥

**कदापि गोपैः सह काननान्ते निलायनक्रीडनलोलुपं त्वाम् ।**
**मयात्मजः प्राप दुरन्तमायो व्योमाभिधो व्योमचरोपरोधी ॥ ८ ॥**

**कदापीति** । निलायनक्रीडने तिरोधाननिरीक्षणस्पर्शनरूपे सश्रद्धम् । व्योमचरोपरोधी देवशत्रुः ॥ ८ ॥

**स चोरपालायितवल्लवेषु चोरायितो गोपशिशून् पशूंश्च ।**
**गुहासु कृत्वा पिदधे शिलाभिस्त्वया च बुद्ध्वा परिमर्दितोऽभूत् ॥९॥**

**स इति** । केचिद् वल्लवाश्चोरायिताः । केचित् पालायिताः । मयपुत्रस्तु गोपवेषधारी चोरायितः पशून् गोपशिशूंश्च पर्वतगुहासु कृत्वा निक्षिप्य पिदधे बबन्ध । त्वया परिमर्दितो निगृहीतः ॥ ९ ॥

**एवंविधैश्चाद्भुतकेलिभेदैरानन्दमूर्छामतुलां व्रजस्य ।**
**पदे पदे नूतनयन्नसीमं परात्मरूपिन्! पवनेश! पायाः ॥ १० ॥**

**एवंविधैरि**ति । आनन्दस्य मूर्छां वृद्धिं पदे पदे **अनुक्षणम् असीमं** निरवधि । अत्र हेतुः परात्मरूपीति ॥ १० ॥

इति केशिवधवर्णनं व्योमासुरवधवर्णनं च

**एकसप्ततितमं दशकम् ।**

---

अथ कंसवधमाह दशकचतुष्टयेन—

**कंसोऽथ नारदगिरा व्रजवासिनं त्वा-**
**माकर्ण्य दीर्णहृदयः स हि गान्दिनेयम् ।**
**आहूय कार्मुकमखच्छलतो भवन्त-**
**मानेतुमेनमहिनोदहिनाथशायिन् ! ॥ १ ॥**

**कंस** इति । विष्णुस्त्वद्वधार्थं देवक्यां जातो नन्दव्रजे वसतीति **नारदस्य गिरा दीर्णहृदय**श्चकितमतिः गान्दिनेयम् अक्रूरं **कार्मुकमखच्छलतो** धनुर्यागनिरीक्षणार्थमिति व्याजेन अहिनोत् प्रेषयामास ॥ १ ॥

**अक्रूर एष भवदङ्घ्रिपरश्चिराय**
**त्वद्दर्शनाक्षममनाः क्षितिपालभीत्या ।**
**तस्याज्ञयैव पुनरीक्षितुमुद्यतस्त्वा-**
**मानन्दभारमतिभूरितरं बभार ॥ २ ॥**

**अक्रूर** इति । भवदङ्घ्रिपरः भवद्भक्तः **क्षितिपालभीत्या** कंसभयेन अहं कृष्णदर्शनाक्षम इति मनो यस्य स त्वद्दर्शनाक्षममनाः ॥ २ ॥

**सोऽयं रथेन सुकृती भवतो निवासं**
**गच्छन् मनोरथगणांस्त्वयि धार्यमाणान् ।**
**आस्वादयन् मुहुरपायभयेन दैवं**
**संप्रार्थयन् पथि न किञ्चिदपि व्यजानात् ॥ ३ ॥**

**स** इति । त्वयि त्वद्विषये मनोरथगणान् दर्शनस्पर्शनादिरूपान् मनसा धार्यमाणान् आस्वादयन् अपायभयेन स्वस्य कंसभृत्यतादिहेतुकेन भगवद्दर्शनाभा-

वभयेन ममाद्य श्रीकृष्णदर्शनं भूयादिति दैवं प्रार्थयन् । एवं पथि त्वामेव चिन्तयन् नान्यत् किञ्चिदपि व्यजानात् ॥ ३ ॥

तदेवाह —

**द्रक्ष्यामि वेदशतगीतगतिं पुमांसं**
**स्प्रक्ष्यामि किंस्विदपिनाम परिष्वजेय ।**
**किं वक्ष्यते स खलु मां क नु वीक्षितः स्या-**
**दित्थं निनाय स भवन्मयमेव मार्गम् ॥ ४ ॥**

**द्रक्ष्यामी**ति । वेदशतैः उपनिषद्भिः गीता प्रतिपादिता गतिः स्वरूपं यस्य तं पुमांसं पुरुषं किंस्विद् द्रक्ष्यामि स्प्रक्ष्यामि स्पर्शनसुखमनुभवामि । अपिनामैवं भूयात् । स खलु भगवान् मां कृताञ्जलिं 'हे अक्रूरे'ति किं वक्ष्यते । क नु कस्मिन् प्रदेशे मया स वीक्षितः स्यात् । इत्थं भवत्स्मरणनैरन्तर्येण तदालम्बनतया भवन्मयं मार्गं निनाय अतिक्रान्तवान् ॥ ४ ॥

**भूयः क्रमादभिविशन् भवदङ्घ्रिपूतं**
**बृन्दावनं हरविरिञ्चसुराभिवन्द्यम् ।**
**आनन्दमग्न इव लग्न इव प्रमोहे**
**किं किं दशान्तरमवाप न पङ्कजाक्ष! ॥ ५ ॥**

**भूय** इति । प्रमोहे लग्नो बहिर्विकाराभावान्मूढ इव किं किं दशान्तरं नावाप ॥ ५ ॥

**पश्यन्नवन्दत भवद्विहृतिस्थलानि**
**पांसुष्ववेष्टत भवच्चरणाङ्कितेषु ।**
**किं ब्रूमहे बहुजना हि तदापि जाता**
**एवं तु भक्तितरला विरलाः परात्मन्! ॥ ६ ॥**

**पश्यन्नि**ति । भवद्विहृतिस्थलानि क्रीडास्थानानि अवन्दत । भवच्चरणाङ्कितेषु पां-

---

१. 'दि' क. पाठः.

सुष्ववेष्टत श्रीकृष्णपादपांसव इति सर्वाङ्गेष्वकरोत् । किं ब्रूमहे। तदा भवतः काले बहुजना जाताः, तथाप्यक्रूरवदेवं भक्त्या तरलाः परवशाः विरला न्यूनाः ॥ ६ ॥

सायं स गोपभवनानि भवच्चरित्र-
गीतामृतप्रसृतकर्णरसायनानि ।
पश्यन् प्रमोदसरितेव किलोह्यमानो
गच्छन् भवद्भवन निधिमन्वयासीत् ॥ ७ ॥

**सायमिति** । सायं सन्ध्याकाले भवच्चरित्रगीतमेवामृतं, तत्प्रसृतममृतनिष्यन्दः, तदेव कर्णरसायनं श्रोत्रानन्दकरं येषु तानि गोपभवनानि पश्यन् प्रमोदरूपया सरिता नद्या उह्यमान इव ॥ ७ ॥

तावद् ददर्श पशुदोहविलोकलोलं
भक्तोत्तमागतिमिव प्रतिपालयन्तम् ।
भूमन्! भवन्तमयमग्रजवन्तमन्त-
र्ब्रह्मानुभूतिरससिन्धुमिवोद्वमन्तम्* ॥ ८ ॥

**तावदिति** । पशुदोहविलोकने लोलं सश्रद्धं भक्तोत्तमस्याक्रूरस्य आगतिं प्रतिपालयन्तमिवायमक्रूरो भवन्त ददर्श । ब्रह्मानुभूतिर्ब्रह्मज्ञानं, तज्जन्यो रससिन्धुः सुखार्णव आनन्दः । पथि श्रीकृष्णाकाराकारितायाश्चित्तवृत्तेः अन्तःस्थत्वाद् भगवद्दर्शनसमनन्तरं तस्या इन्द्रियद्वारा बहिर्निर्गमनाच्चान्तःस्थं श्रीकृष्णदर्शनसुखं बहिरुद्वमन्तमिवेत्यर्थः ॥ ८ ॥

सायन्तनाप्लवविशेषविविक्तगात्रौ
द्वौ पीतनीलरुचिराम्बरलोभनीयौ ।
नातिप्रपञ्चधृतभूषणचारुवेषौ
मन्दस्मितार्द्रवदनौ स युवां ददर्श ॥ ९ ॥

* बहिर्भवनानुकूलव्यापारवृत्तेरुद्वमतेरिह बहिर्भावमात्रे वृत्तिर्निवृत्तप्रेषणपक्षाश्रयणेन । एवञ्चाक्रूरहृदयाद् बहिर्भवन्तं ब्रह्मानुभूतिरससिन्धुमिव स्थितमिति भगवद्विशेषणमुपपन्नम् । अस्या एवोपपत्तये व्याख्याने 'पथि श्रीकृष्ण' त्याद्युक्तिः ।

**सायन्तनेति**। सायन्तनः सन्ध्यासमयस्थः आप्लवः आकण्ठं स्नानं तेन विशेषेण विविक्तगात्रौ स्वच्छदेहौ नातिप्रपञ्चम् अनतिबहुलं यथा तथा धृतैः भूषणैः चारुर्मनोहरो वेषोऽलङ्क्रियाविशेषो ययोः ॥ ९ ॥

**दूराद् रथात् समवरुह्य नमन्तमेन-**
**मुत्थाप्य भक्तकुलमौलिमथोपगूहन्।**
**हर्षान्मिताक्षरगिरा कुशलानुयोगी**
**पाणिं प्रगृह्य सबलोऽथ गृहं निनेथ ॥ १० ॥**

**दूरादिति**। हर्षादुपगूहन् मिताक्षरया गिरा कुशलानुयोगी कुशलं पृच्छन् गृहं निनेथ प्रवेशयामासिथ ॥ १० ॥

**नन्देन साकममितादरमर्चयित्वा**
**तं यादवं तदुदितां निशमय्य वार्ताम्।**
**गोपेषु भूपतिनिदेशकथां निवेद्य**
**नानाकथाभिरिह तेन निशामनैषीः ॥ ११ ॥**

**नन्देनेति**। भूपतिनिदेशकथां कंसाज्ञावचनं निवेद्य उपायनसंभारसंभृत-शकटसंयोजनाद्यादिश्य तेनाक्रूरेण सह नानाकथाभिः निशामनैषीः ॥ ११ ॥

तस्यां निशायां श्रीकृष्णे गोपीनामन्यासक्तिशङ्काभूदित्याह—

**चन्द्रागृहे किमुत चन्द्रभगागृहे नु**
**राधागृहे नु भवने किमु मैत्रविन्दे।**
**धूर्तो विलम्बत इति प्रमदाभिरुच्चै-**
**राशङ्कितो निशि मरुत्पुरनाथ[1] पायाः ॥ १२ ॥**

इति अक्रूरस्य गोकुलयात्रा-बृन्दावनप्राप्ति-भगवत्समागम-
भगवत्कृतसत्कारादीनां वर्णनं
**द्विसप्ततितमं दशकं सटिकम्।**

---

१. 'शंसितो' क. पाठः.

निशमय्य तवाथ यानवार्तां भृशमार्ताः पशुपालबालिकास्ताः ।
किमिदं किमिदं कथं न्विर्तीमाः समवेताः परिदेवितान्यकुर्वन् ॥ १ ॥

निशमय्येति । यानवार्ता श्वः प्रभाते श्रीकृष्णं नेतुमागतोऽक्रूर इत्येवंरूपाम् । किमिदम् अमृतास्वादे विषपानमिवातिकष्टमवस्थान्तरमापतितम् । कथं न्विदम् अस्मद्भाग्यदोषाद् नन्दसूनोर्निष्करुणतया वा इत्येवमादीनि परिदेवितानि विलपनान्यकुर्वन् ॥ १ ॥

परिदेवितान्येवाह—

करुणानिधिरेष नन्दसूनुः कथमस्मान् विसृजेदनन्यनाथाः ।
बत नः किमु दैवमेवमासीदिति तास्त्वद्गतमानसा विलेपुः ॥ २ ॥

करुणेति । नो दैवं भाग्यम् एवं निरतिशयसुखप्रदं सहसा नष्टं चासीत् किमु बत खिद्यामहे ॥ २ ॥

चरमप्रहरे प्रतिष्ठमानः सह पित्रा निजमित्रमण्डलैश्च ।
परितापभरं नितम्बिनीनां शमयिष्यन् व्यमुचः सखायमेकम् ॥ ३ ॥

चरमेति । चरमप्रहरे अन्त्ययामे प्रतिष्ठमानो निर्गच्छन् एकं सखायमाप्तं दूततया व्यमुचः प्रेषितवान् ॥ ३ ॥

अचिरादुपयामि सन्निधिं वो भविता साधु मयैव सङ्गमश्रीः ।
अमृताम्बुनिधौ निमज्जयिष्ये द्रुतमित्याश्वसिता वधूरकार्षीः ॥ ४ ॥

अचिरादिति । वो युष्माकं मया सङ्गमश्रीः संभोगसौख्यम् अचिराद् भवितैव । किञ्च अमृताम्बुनिधौ सुखार्णवे, अथवा अमृतं मोक्षस्तद्रूपेऽम्बुनिधौ । अन्ते मोक्षमपि वो वितरिष्यामीत्यर्थः ॥ ४ ॥

सविषादभरं सयाच्ञमुच्चैरतिदूरं वनिताभिरीक्ष्यमाणः ।
मृदु तद्दिशि पातयन्नपाङ्गान् सबलोऽक्रूररथेन निर्गतोऽभूः ॥ ५ ॥

---

१. 'माहूय इ' ख. पाठः.

**सविषादेति** । वनिताभिः अतिदूरं सविषादभरं यथा भवति तथा त्वदागमनविलम्बेऽस्मत्प्राणा यास्यन्ति, अतस्त्वरितमागन्तव्यमिति सयाच्ञं च यथा भवति तथा ईक्ष्यमाणस्त्वं तद्दिशि अपाङ्गान् कटाक्षान् मृदु मुकुलीकृताभ्यां नयनाभ्यां पातयन् निर्गतोऽभूः ॥ ५ ॥

**अनसा बहुलेन वल्लवानां मनसा चानुगतोऽथ वल्लभानाम् ।**
**वनमार्तमृगं विषण्णवृक्षं समतीतो यमुनातटीमयासीः ॥ ६ ॥**

**अनसेति** । वल्लवानां गोपानाम् अनसा शकटेन । वल्लभानां गोपीनां मनसानुगतः आर्ताः पीडिता मृगाः यस्मिन् विषण्णा वृक्षा यस्मिन् तद् वनं समतीतः अतिक्रान्तः ॥ ६ ॥

**नियमाय निमज्ज्य वारिणि त्वामभिवीक्ष्याथ रथेऽपि गान्दिनेयः ।**
**विवशोऽजनि किन्न्विदं विभोस्ते ननु चित्रं त्ववलोकनं समन्तात् ॥**

**नियमायेति** । नियमाय सन्ध्यावन्दनादि कर्तुं वारिणि यमुनाजले निमज्ज्य तत्र त्वामभिवीक्ष्य अथ उन्मज्जनानन्तरं रथेऽपि त्वामभिवीक्ष्य गान्दिनेयः अक्रूरः विवशोऽजनि । ननु विभोस्ते समन्तादवलोकनं किन्नु चित्रं, विभुत्वाद् व्याप्तत्वादेव न चित्रमित्यर्थः ॥ ७ ॥

**पुनरेष निमज्ज्य पुण्यशाली पुरुषं त्वां परमं भुजङ्गभोगे ।**
**अरिकम्बुगदाम्बुजैः स्फुरन्तं सुरसिद्धौघपरीतमालुलोके ॥ ८ ॥**

**पुनरिति** । एषोऽक्रूरः पुण्यशाली सुकृती, अन्यथा शेषशायिनो भवतो दर्शनाभावात्, पुनर्निमज्ज्य त्वां परमं पुरुषं विष्णुम् आलुलोके ददर्श ॥ ८ ॥

**स तदा परमात्मसौख्यसिन्धौ विनिमग्नः प्रणुवन् प्रकारभेदैः ।**
**अविलोक्य पुनश्च हर्षसिन्धोरनुवृत्त्या पुलकावृतो ययौ त्वाम् ॥ ९ ॥**

**स इति** । परमात्मसौख्यसिन्धौ ब्रह्मानन्दार्णवे । प्रकारभेदैः सगुणनिर्गुणभेदैः प्रणुवन् स्तुवन् अविलोक्य तद्रूपं तिरोहितं वीक्ष्य पुनश्चानवलोकने सत्यपि

हर्षसिन्धोऽनुवृत्त्या परमानन्दानुभवानिवृत्तेः पुलकावृततनुस्त्वां ययौ उन्मज्ज्य त्वत्समीपमाप ॥ ९ ॥

किमु शीतलिमा महान् जले यत् पुलकोऽसाविति चोदितेन तेन ।
अतिहर्षनिरुत्तरेण सार्धं रथवासी पवनेश! पाहि मां त्वम् ॥ १० ॥

किमिति । अतिहर्षनिरुत्तरेण भगवतः स्वरूपदर्शनेनानन्दबाष्पनिरुद्धकण्ठतया अदत्तोत्तरेण ॥ १० ॥

इति भगवतो मथुराप्रस्थानवर्णनं यमुनाजले अक्रूरस्य
भगवत्स्वरूपसाक्षात्कारादिवर्णनं च
त्रिसप्ततितमं दशकम् ।

---

सम्प्राप्तो मथुरां दिनार्धविगमे तत्रान्तरस्मिन् वस-
न्नारामे विहिताशनः सखिजनैर्यातः पुरीमीक्षितुम् ।
प्रापो राजपथं चिरश्रुतिधृतव्यालोककौतूहल-
स्त्रीपुंसोद्यदगण्यपुण्यनिगलैराकृष्यमाणो नु किम् ॥ १ ॥

सम्प्राप्त इति । दिनार्धविगमे मध्याह्ने तत्र मथुरायाम् अन्तरस्मिन्नारामे बाह्योद्याने वसन् राजपथं राजमार्गं प्रापः प्राप्तवान् । चिरश्रुत्या धृतं व्यालोककौतूहलं येषां तेभ्यः स्त्रीपुंसेभ्यः उद्यन्ति फलोन्मुखानि अगण्यानि अपरिमेयानि पुण्यान्येव निगलाः शृङ्खलाः तैराकृष्यमाणः किन्नु ॥ १ ॥

तत्र कथमपि त्वत्सादृश्यानुमेयसुकृता मथुरास्त्रियस्त्वद्दर्शनसुखमन्वभूवन्नित्याह —

त्वत्पादद्युतिवत् सरागसुभगास्त्वन्मूर्तिवद् योषितः
सम्प्राप्ता विलसत्पयोधररुचो लोला भवद्दृष्टिवत् ।
हारिण्यस्त्वदुरस्स्थलीवदयि ते मन्दस्मितप्रौढिव-
न्नैर्मल्योल्लसिताः कचौघरुचिवद् राजत्कलापाश्रिताः ॥ २ ॥

---

१. 'प्तो' ङ. च. पाठः.

त्वत्पादेति । त्वत्पादद्युतिः सरागा रक्तवर्णा सुभगा च । तद्वत् सुरासुरस्त्रियोऽपि सरागाः त्वद्गुणश्रवणात् त्वयि चिरं धृतप्रणयाः सुभगाश्च । आत्वद्दर्शनार्थं सम्प्राप्ताः । त्वन्मूर्तिः विलसत्पयोधररुक् सजलजलधरश्यामला । तद्वत् ता अपि विलसत्पयोधररुचः आगमनसम्भ्रमात् चलितकुचाः । इतस्ततः सम्प्राप्तयोषिद्दर्शनव्यापृततया लोला चञ्चला भवद्दृष्टिः । तद्वत् ता अपि लोलाः भवद्दर्शनकौतुकयुक्ताः । हाराः सन्त्यस्यामिति हारिणी उरःस्थली । मनोहारिण्यश्च ताः । आय भगवन्! ते तव मन्दस्मितप्रौढिः मन्दस्मितस्य प्रौढिः उदारता सा नैर्मल्योल्लसिता । ता अपि नैर्मल्योल्लसिताः स्वच्छशरीराः शुद्धमनसश्च । त्वत्कचौघरुचिः राजत्कलापाश्रिता बर्हालङ्कृता । अन्यत्र कलापा भूषणानि । सर्वाभरणभूषिता इत्यर्थः ॥ २ ॥

**तासामाकलयन्नपाङ्गवलनैर्मोदं प्रहर्षाद्भुत-**
**व्यालोलेषु जनेषु तत्र रजकं कञ्चित् पटीं प्रार्थयन् ।**
**कस्ते दास्यति राजकीयवसनं याहीति तेनोदितः**
**सद्यस्तस्य करेण शीर्षमहृथाः सोऽप्याप पुण्यां गतिम् ॥ ३ ॥**

तासामिति । अपाङ्गवलनैः कटाक्षवीक्षणैः तासां मोदमाकलयन् प्रापयन् जनेषु प्रहर्षाद्भुताच्च व्यालोलेषु आगतेषु । पटीं वासांसि । पुण्यां गतिं मोक्षम् ॥ ३ ॥

**भूयो वायकमेकमायतमतिं तोषेण वेषोचितं**
**दाश्वांसं स्वपदं निनेथ सुकृतं को वेद जीवात्मनाम् ।**
**मालाभिः स्तबकैः स्तवैरपि पुनर्मालाकृता मानितो**
**भक्तिं तेन वृतां दिदेशिथ परां लक्ष्मीं च लक्ष्मीपते! ॥ ४ ॥**

भूय इति । वायकं तन्तुवायम् एकं भगवत्प्रसादपात्रम् आयतमतिं विपुलमनसं वेषोचितं विचित्रवर्णदुकूलादिकं दाश्वांसं दत्तवन्तं स्वपदं सारूप्यं निनेथ अनयः । सुकृतं को वेद, केवलं फलानुमेयमिति भावः । स्तबकैः पुष्पैः स्तवैः स्तोत्रैश्च मालां करोतीति मालाकृत् तेन मानितः पूजितः । परां प्रेमलक्षणां भक्तिं दिदेशिथ दत्तवान् ॥ ४ ॥

कुब्जामब्जविलोचनां पथि पुनर्दृष्ट्वाङ्गरागे तया
दत्ते साधु किलाङ्गरागमददास्तस्या महान्तं हृदि ।
चित्तस्थामृजुतामथ प्रथयितुं गात्रेऽपि तस्याः स्फुटं
गृह्णन् मञ्जु करेण तामुदनयस्तावज्जगत्सुन्दरीम् ॥ ५ ॥

कुब्जामिति । कुब्जां त्रिवक्राम् अब्जविलोचनाम् इतरावयवसौन्दर्यातिशययुक्ताम् । तयाङ्गरागे अनुलेपने दत्ते सति तस्या हृदि महान्तम् अङ्गे भवन्मूर्तौ रागम् अनुरागं भवत्प्रेमपरपर्यायमददाः । अङ्गेति पृथक्पदं वा । चित्तस्थां परोक्षाम् ऋजुतां गात्रेऽपि प्रथयितुम् अपरोक्षीकर्तुं स्फुटं नूनं करेण मञ्जु अनुत्पादितवेदनं यथा भवति तथा गृह्णन् उदनयः ऋज्वीचकर्थ ॥ ५ ॥

तावन्निश्चितवैभवास्तव विभो! नात्यन्तपापा जना
यत्किञ्चिद् ददते स्म शक्त्यनुगुणं ताम्बूलमाल्यादिकम् ।
गृह्णानः कुसुमादि किञ्चन तदा मार्गे निबद्धाञ्जलि-
र्नातिष्ठं बत हा यतोऽद्य विपुलामार्तिं व्रजामि प्रभो! ॥ ६ ॥

तावदिति । यावदङ्गरागसमर्पणेन त्रिवक्रामप्यनुगृहीतवान्, तावत् तद्दृष्टान्तेन तव निश्चितं वैभवं वरप्रदानशक्तिर्यैः । ये न चात्यन्तपापाः, ते जनाः शक्त्यनुगुणं यत्किञ्चित् ताम्बूलमाल्यादिकं तुभ्यं ददते स्म दत्तवन्तः । ते च कृतार्थाः । तदाहमपि किञ्चन कुसुमादि गृह्णानो मार्गे निबद्धाञ्जलिर्नातिष्ठम् । हा बत कष्टं, यतस्तदकरणादद्य विपुलां महतीम् आर्तिं रोगादिजनितां पीडां व्रजामि ॥ ६ ॥

एष्यामीति विमुक्तयापि भगवन्नालेपदात्र्या तया
दूरात् कातरया निरीक्षितगतिस्त्वं प्राविशो गोपुरम् ।
आघोषानुमितत्वदागममहाहर्षोल्लल्देवकी-
वक्षोजप्रगलत्पयोरसमिषात् त्वत्कीर्तिरन्तर्गता ॥ ७ ॥

एष्यामीति । मद्गृहानागच्छेति प्रार्थितेन त्वया कृतकार्योऽहमेष्याम्यागच्छामीति विमुक्तया प्रेषितयापि तया आलेपदात्र्या त्रिवक्रया कातरया विरहभीतया

दूराद् निरीक्षिता गतिर्यस्य स त्वं गोपुरं प्राविशः प्रविष्टवान् । आघोषेण त्वद्दर्शनादिप्रवृत्तपौरजनजनितेनानुमितः कम्पितो यस्त्वदागमः तज्जनितेन महता हर्षेण उल्लसतः क्षुभिताद् देवकीवक्षोजाद् यः पयोरसः प्रजगाल, तद्व्याजेन त्वत्कीर्तिस्त्वत्प्रवेशात् पूर्वमन्तर्गता नगरं प्रविष्टा ॥ ७ ॥

**आविष्टो नगरीं महोत्सववतीं कोदण्डशालां व्रजन्**
**माधुर्येण नु तेजसा नु पुरुषैर्दूरेण दत्तान्तरः ।**
**स्रग्भिर्भूषितमर्चितं वरधनुर्मा मेति वादात् पुरः**
**प्राग्रह्णाः समरोपयः किल समाक्राक्षीरभाङ्क्षीरपि ॥ ८ ॥**

आविष्ट इति । माधुर्येण वा श्रीमूर्तेर्वा मधुरतया तेजसा अधृष्यतया वा प्रतिषेद्धुमशक्यतया रक्षिपुरुषैर्दूरेण दत्तान्तरः परिहृतमार्गः सन् मा मा धनुः स्पृशेति वादाद् रक्षिपुरुषवचनात् पुरः पूर्वमेव धनुः प्राग्रह्णाः अग्रहीः । पुनरपि मा मा समारोपयेति वादात् पुरः समरोपयः । एवं मा मा आकर्षयेति वादात् पुरः समाक्राक्षीः । मा मा भाङ्क्षीरिति वादात् पुरः अभाङ्क्षीरपि ॥ ८ ॥

**श्वः कंसक्षपणोत्सवस्य पुरतः प्रारम्भतूर्योपम-**
**श्चापध्वंसमहाध्वनिस्तव विभो! देवानरोमाञ्चयत् ।**
**कंसस्यापि च वेपथुस्तदुदितः कोदण्डखण्डद्वयी-**
**चण्डाभ्याहतरक्षिपूरुषरवैरुत्कूलितोऽभूत् त्वया ॥ ९ ॥**

श्व इति । कंसक्षपणं कंसवधनामोत्सवो भावी । तस्य पुरतः पूर्वं मङ्गलार्थः प्रारम्भतूर्यरवः कर्तव्यः । तत्सदृशस्तव चापध्वंसमहाध्वनिर्देवानरोमाञ्चयत् कंसमपि *वधिष्यतीति रोमाञ्चितशरीरानकृत । कंसस्यापि तदुदितः चापध्वंसमहाध्वनिश्रवणाज्जातो वेपथुः कम्पः तस्यैव कोदण्डस्य खण्डद्वय्या चण्डाभ्याहतानां सुदृढ प्रहृतानां रक्षिपूरुषाणां रवैः धिग धिग् हा हताः स्म इति विलपनरूपैः त्वया उत्कूलितो वर्धितोऽभूत् ॥ ९ ॥

१. 'पूर्वं स' क पाठः. २. 'सध्व' क. ग. पाठः.

* 'वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति' इति 'जनिवध्योश्च' (७. ३. ३५) इति सूत्रे वृत्तिकारः ।

शिष्टैर्दुष्टजनैश्च दृष्टमहिमा प्रीत्या च भीत्या ततः
संपश्यन् पुरसम्पदं प्रविचरन् सायं गतो वाटिकाम् ।
श्रीदाम्ना सह राधिकाविरहजं खेदं वदन् प्रस्वप-
न्नानन्दन्नवतारकार्यघटनाद् वातेश ! संरक्ष माम् ॥ १० ॥

शिष्टैरिति । शिष्टैः सज्जनैः प्रीत्या दृष्टो महिमा अद्भुतपराक्रमो यस्य । दुष्टजनैः भीत्या दृष्टमहिमा सन् सायं सन्ध्यायां वाटिकां शकटस्थानं गतः श्रीदाम्नासेन गोपेन । अवतारकार्यघटनात् कंसे हते तच्छ्वशुरस्य मागधस्य परिभवात् तस्य तद्बन्धूनां शिशुपालादीनां च वधो भावीत्यादिचिन्तया भूभारहरणनिर्वाहदर्शनादानन्दन् ॥ १० ॥

इति भगवतो मथुरापुरीप्रवेश-रजकनिग्रह-वायकमालाकार-
कुब्जानुग्रह-धनुर्भङ्गादिवर्णनं
चतुस्सप्ततितमं दशकम् ।

---

प्रातः सन्त्रस्तभोजक्षितिपतिवचसा प्रस्तुते मल्लतूर्ये
सङ्घे राज्ञां च मञ्चानभिययुषि गते नन्दगोपेऽपि हर्म्यम् ।
कंसे सौधाधिरूढे त्वमपि सहबलः सानुगश्चारुवेषो
रङ्गद्वारं गतोऽभूः कुपितकुवलयापीडनागावलीढम् ॥ १ ॥

प्रातरिति । अगरेणुः प्रातः सन्त्रस्तस्य देवक्या अष्टमपुत्रतया अतिमानुषेण पराक्रमेण चायं मां हनिष्यतीति भीतस्य (कंसस्य) वचसा आज्ञया मल्लतूर्ये मल्लक्रीडानुसारिवाद्यप्रयोगे प्रस्तुते आरब्धे सति । अभिययुषि आरूढे च सति । महामात्रप्रणोदात् कुपितेन कुवलयापीडाख्येन नागेन अवलीढं विघ्नितप्रवेशं मल्लरङ्गद्वारं गतोऽभूः ॥ १ ॥

पापिष्ठापेहि मार्गाद् द्रुतमिति वचसा निष्ठुरक्रुद्धबुद्धे-
रम्बष्ठस्य प्रणोदादधिकजवजुषा हस्तिना गृह्यमाणः ।

---

१. 'वधिष्य' ख. पाठः.

केलीमुक्तोऽथ गोपीकुचकलशचिरस्पर्धिनं कुम्भमस्य
व्याहत्यालीयथास्त्वं चरणभुवि पुनर्निर्गतो वल्गुहासी ॥ २ ॥

पापिष्ठेति । हे पापिष्ठ! अतिशयेन दुष्ट! मार्गाद् द्रुततरम् अपेहि अपसर इति त्वद्वचसा निष्ठुरा स्वतः क्रूरा क्रुद्धा च बुद्धिर्यस्य तस्याम्बष्ठस्य महामात्रस्य प्रणोदात् चोदनया । केलीमुक्तः क्रीडया हस्तिकराद् विगलितः अथ अनन्तरं गोपीकुचकलशचिरस्पर्धिनम्, अत एव तत्साम्यापादकपुण्येन भगवत्करस्पर्शलाभः, अस्य कुम्भं मस्तकं व्याहत्य हस्तेन ताडयित्वा चरणभुवि चरणचतुष्टयमध्ये लीलयालीयथाः[1] ॥ २ ॥

हस्तप्राप्योऽप्यगम्यो झटिति मुनिजनस्येव धावन् गजेन्द्रं
क्रीडन्नापत्य भूमौ पुनरभिपततस्तस्य दन्तं सजीवम् ।
मूलादुन्मूल्य तन्मूलगमहितमहामौक्तिकान्यात्ममित्रे
प्रादास्त्वं हारमेभिर्ललितविरचितं राधिकायै दिशेति ॥ ३ ॥

हस्तेति । हस्तेन शुण्डया प्राप्यः स्पृश्यमानोऽप्यगम्योऽस्पृश्यमानो यथा भवति तथा झटिति धावन् क्रीडन् भूमौ स्वयमापत्य दण्डवत् पतित्वा पुनः पश्चादभिपततो दन्ताभ्यां भूमौ घ्नतस्तस्य सजीवं जीवेन सह दन्तं मूलादखण्डमुन्मूल्य तन्मूलगानि दन्तमूलस्थानि महितानि पराध्यानि महान्ति स्थूलानि मौक्तिकान्यात्ममित्रे श्रीदाम्नि प्रादाः एभिर्ललितविरचितं मनोहरतया रचितं हारं मालां राधिकायै मत्प्रेयस्यै दिश प्रदेहीति वचनपूर्वकम् ॥ ३ ॥

गृह्णानं दन्तमंसे युतमथ हलिना रङ्गमङ्गाविशन्तं
त्वां मङ्गल्याङ्गभङ्गीरभसहृतमनोलोचना वीक्ष्य लोकाः ।
हंहो धन्यो नु[2] नन्दो नहि नहि पशुपालाङ्गना नो यशोदा
नो नो धन्येक्षणाः स्मस्त्रिजगति वयमेवेति सर्वे शशंसुः ॥ ४ ॥

गृह्णानमिति । अङ्ग! हे श्रीकृष्ण! इतरदन्तमंसे गृह्णानेन हलिना युतं

---

१. 'ष्येऽलीय' क. ख. पाठः.　२. 'हि' इति मूलपाठः.

मल्लक्रीडारङ्गमाविशन्तम् । मङ्गल्यरूपयाङ्गभङ्ग्या रभसहृतानि बलात्कारेण हृतानि मनोलोचनानि येषाम् । हंहो हे लोकाः! यत्पुत्रोऽयं, स नन्दस्त्रिजगति धन्यः नु निश्चितम् । अथवा नहि नहि, याः एनं स्तनान्तरे कृत्वा आलिङ्गनादि-सुखमन्वभूवन्, ताः पशुपालाङ्गनाः नन्दादपि धन्यतमा इति केचित् । नो नो गोप्यः, यास्य मातृभावमन्वभूत्, सा यशोदा धन्या । नो नो यशोदा, वयमेव धन्येक्षणाः यानि श्रीकृष्णाख्ये परब्रह्मणि निमग्नानि, तान्यस्माकमीक्षणान्येव भाग्यवन्तीति शशंसुः स्तुतवन्तः ॥ ४ ॥

ननु सर्वेषामेवं मयि स्नेहबहुमानादेः किं कारणमित्याशङ्कायामाह—

**पूर्णं ब्रह्मैव साक्षान्निरवधिपरमानन्दसान्द्रप्रकाशं**
**गोपेषु त्वं व्यलासीर्न खलु बहुजनैस्तावदावेदितोऽभूः ।**
**दृष्ट्वाथ त्वां तदेदंप्रथममुपगते पुण्यकाले जनौघाः**
**पूर्णानन्दा विपापाः सरसमभिजगुस्त्वत्कृतानि स्मृतानि ॥ ५ ॥**

**पूर्ण**मिति । पूर्णं सर्वानुगतम् । अतस्तवैव सर्वशरीरेषु जीवरूपेणावस्थानाद् आत्मनि च सर्वेषां निरतिशयस्नेहबहुमानादिसम्भवात् त्वयीदमुपपद्यत इति भावः । नन्वेकस्यानेकत्रावस्थानं कथमित्यत्राह— ब्रह्मेति । आकाशवद् बृहत्त्वादेवेत्यर्थः । ननु ब्रह्मणः कथं चाक्षुषत्वं तत्राह— साक्षाद् गोपेषु व्यलासीरिति। श्रीकृष्णात्मनावतीर्णत्वादित्यर्थः । ननु शरीरपरिग्रहश्चेद् ममापि संसारप्रसङ्ग इत्यत्राह— निरवधिपरमानन्दसान्द्रप्रकाशमिति । निरवधि नित्यं परमानन्दरूपं सान्द्रप्रकाशं विज्ञानघनम् । तत्र नित्यत्वात् जननमरणासम्भवः, परमानन्दरूपत्वाद् दुःखाभावः, विज्ञानघनत्वादज्ञानाभावश्चेति संसारनिदानाभावान्नोक्तदोष इति भावः । कथं तर्हि कंसादयो मां ब्रह्मतया न जानन्तीत्यत आह— न खल्विति । यैः कैश्चिज्जन्मजन्मान्तरार्जितपुण्यपरिपाकवद्भिरेव त्वं ब्रह्मेत्यावेदितोऽभूरित्यर्थः । ननु तर्हि पापिष्ठानां कथं मद्दर्शनं संबोभवीतीति चेत्, सत्यं, पुण्यपापयोः पुण्याधिक्ये सति तत्परिपाकवशेन त्वद्दर्शनसुखं तावत् सम्भवति । ततस्त्वद्दर्शनस्मरणचरित्रवर्णनादिना विगतपापाः सन्तः क्रमादेतेऽपि त्वत्तत्त्वज्ञानेऽधिक्रियन्त एवेत्यभिप्रायेणाह— दृष्ट्वाथ त्वामिति । जनौघाः ज्ञानिनोऽज्ञानिनश्च त्वां

पुण्यकाले पुण्यपरिपाक उपगते इदंप्रथमं दृष्ट्वा विगतपापाः पूर्णानन्दाश्च सन्तः त्वद्दर्शनेन स्मृतानि त्वच्चरितानि सरसं सानन्दं यथा भवति तथा अभिजगुः प्रशशंसुरित्यर्थः ॥ ५ ॥

**चाणूरो मल्लवीरस्तदनु नृपगिरा मुष्टिको मुष्टिशाली**
**त्वां रामं चाभिपेदे झटझटिति मिथो मुष्टिपातातिरूक्षम् ।**
**उत्पातापातनाकर्षणविविधरणान्यासतां तत्र चित्रं**
**मृत्योः प्रागेव मल्लप्रभुरगमदयं भूरिशो बन्धमोक्षान् ॥ ६ ॥**

**चाणूर** इति । झटझटिति सशब्दं मिथो मुष्टिपातैरतिरूक्षं यथा भवति तथा । उत्पात उन्नयनम्, आपातनं भुव्यवपातनम्, मिथो बद्धहस्तपादयोरितरेतरत आकर्षणम्, एवंविधानि विविधानि रणानि तावदासताम् । मृत्योर्मरणात् प्रागेवान्योन्यहस्तपादादिकृतान् बन्धान् मोक्षांश्चायमगमत्, किमुच्यते मृतो बन्धान्मोक्षमगमदितीति भावः ॥ ६ ॥

**हा धिक् कष्टं कुमारौ सुललितवपुषौ मल्लवीरौ कठोरौ**
**न द्रक्ष्यामो व्रजामस्त्वरितमिति जने भाषमाणे तदानीम् ।**
**चाणूरं तं करोद्भ्रामणविगलदसुं पोथयामासिथोर्व्यां**
**पिष्टोऽभून्मुष्टिकोऽपि द्रुतमथ हलिना नष्टशिष्टैर्दधावे ॥ ७ ॥**

**हा धिगिति** । करेण यद् उद्भ्रामणं तेनैव विगलदसुम् उर्व्यां पोथयामासिथ प्रक्षिप्तवान् । नष्टशिष्टैः प्राणपरीप्सया दधावे धावनमकारि ॥ ७ ॥

**कंसः संवार्य तूर्यं खलमतिरविदन् कार्यमार्यान् पितॄंस्ता-**
**नाहन्तुं व्याप्तमूर्तेस्तव च समशिषद् दूरमुत्सारणाय ।**
**रुष्टो दुष्टोक्तिभिस्त्वं गरुड इव गिरिं मञ्चमञ्चन्नुदञ्चत्-**
**खड्गव्यावल्गदुस्संग्रहमपि च हठात् प्राग्रहीरौग्रसेनिम् ॥ ८ ॥**

**कंस** इति । कंसः कार्यम् एवं स्थिते यत् कर्तव्यं त्वत्पादपतनं, तद् भवितव्यताबलाद् अविदन् अजानन् आर्यान् सज्जनान् । आहन्तुं निग्रहाय । पितॄन्

१. 'न्तुं तत्रि' ख. पाठः.

वसुदेवनन्दोग्रसेनादीन् । व्याप्तस्योत्सारणमशक्यं, तदपि समशिषत् आज्ञापयामास । दुष्टस्य कंसस्योक्तिभिः रुष्टः कुपितस्त्वम् अञ्चन् उत्पतन् उदञ्चतः उन्नमितस्य खड्गस्य व्यावल्गेन चलनेन दुस्सङ्ग्रहं ग्रहीतुमशक्यमपि हठाद् बलात्कारेणैव[1] औग्रसेनिं कंसं[2] प्राग्रहीः ॥ ८ ॥

**सद्यो निष्पिष्टसन्धिं भुवि नरपतिमापात्य तस्योपरिष्टात्**
**त्वय्यापात्ये* तदैव त्वदुपरि पतिता नाकिनां पुष्पवृष्टिः ।**
**किं किं ब्रूमस्तदानीं सततमपि भिया त्वद्गतात्मा स भेजे**
**सायुज्यं त्वद्वधोत्था परम[3] ! परमियं वासना कालनेमेः ॥ ९ ॥**

**सद्य** इति । आपात्य पातयित्वा तस्योपरिष्टाद् उपरि आपात्ये आपतति त्वयि तव कंसोपरिपतनं नाकिनां पुष्पवृष्टिपतनमपि युगपज्जातमित्यर्थः । किं किं ब्रूमः । त्वत्स्मरणं त्वत्सायुज्यं कुरुत इत्यत्रोपपत्तीर्बहु न कथयामः, यतस्तदानीं भिया सततं त्वद्गतात्मा स कंसः सायुज्यं भेजे । यद् भीत्यापि विष्णुस्मरणं, सेयं परं केवलं कालनेमेस्त्वद्वधोत्था वासना । कंसः प्राक् कालनेमिर्नामासुरः । स च विष्णुना हतः ॥ ९ ॥

**तद्भ्रातॄनष्ट पिष्ट्वा द्रुतमथ पितरौ सन्नमन्नुग्रसेनं**
**कृत्वा राजानमुच्चैर्यदुकुलमखिलं मोदयन् कामदानैः ।**
**भक्तानामुत्तमं चोद्धवममरगुरोराप्तनीतिं सखायं**
**लब्ध्वा[4] तुष्टो नगर्यां पवनपुरपते ! रुन्धि मे सर्वरोगान् ॥ १० ॥**

**तदि**ति । तद्भ्रातॄन् कंसानुजान् कङ्कन्यग्रोधकादीन् । पितरौ देवकीवसुदेवौ । उच्चैः अतिशयेन मोदयन् । अमरगुरोः बृहस्पतेः आप्ता गृहीता नीतिर्नयशास्त्रं येन तमुद्धवं सखायं कार्यसचिवतया नर्मसचिवतया च लब्ध्वा तुष्टः कृतकृत्य इव नगर्यां वसन्निति शेषः ॥ १० ॥

इति कुवलयापीडवधवर्णनं भगवतो मल्लरङ्गप्रवेशवर्णनं मल्लयुद्धवर्णनं
मल्लवधवर्णनं कंसवधादिवर्णनं च

**पञ्चसप्ततितमं दशकम् ।**

---

१. 'ण औ' क.ग. पाठः. २. 'सम् ॥' क. पाठः. ३. 'वरद!' क.घ.ङ.च. पाठः. ४. 'कृत्वा तु' घ.ङ. पाठः.

---

* आपततीत्यापात्यः 'भव्यगेय–' (३-४-६८) इति निपातनात् कर्तरि ण्यत् ।

अथोपनयनपूर्वकं विद्यां गृहीत्वा मृतपुत्रं दक्षिणीकृत्य समावृत्त इत्याह—

**गत्वा सान्दीपनिमथ चतुष्षष्टिमात्रैरहोभिः**
**सर्वज्ञस्त्वं सह मुसलिना सर्वविद्यां गृहीत्वा ।**
**पुत्रं नष्टं यमनिलयनादाहृतं दक्षिणार्थं**
**दत्त्वा तस्मै निजपुरमगा नादयन् पाञ्चजन्यम् ॥ १ ॥**

गत्वेति । स्वतः सर्वज्ञस्त्वं, तथापि लोकसङ्ग्रहार्थं सान्दीपनिं नाम मुनिं गत्वोपनयनं प्राप्य सर्वविद्याः साङ्गोपाङ्गोपवेदरूपाः गृहीत्वा नष्टं मृतं गुरोः पुत्रं तस्मै गुरवे दक्षिणार्थं दत्त्वा पाञ्चजन्यं शङ्खवेषधरपञ्चजननामासुरवधात् तदङ्गप्रभवं शङ्खम् ॥ १ ॥

श्रीकृष्णेन बृन्दावनान्मथुराप्रस्थाने गोपीनां परितापशमनार्थं यदुक्तम् 'अचिरादुपयामि सन्निधिं व' इति, तत् सत्यं कर्तुमात्मनिर्विशेषमुद्धवं मथुरास्थः स्वयं प्रेषयामासेत्याह—

**स्मृत्वा स्मृत्वा पशुपसुदृशः प्रेमभारप्रणुन्नाः**
**कारुण्येन त्वमपि विवशः प्राहिणोरुद्धवं तम् ।**
**किञ्चामुष्मै परमसुहृदे भक्तवर्याय तासां**
**भक्त्युद्रेकं सकलभुवने दुर्लभं दर्शयिष्यन् ॥ २ ॥**

स्मृत्वेति । पशुपसुदृशो गोप्यः त्वां स्मृत्वा स्मृत्वा पुनः पुनः स्मरणात् प्रेमभारेण अनुरागातिशयेन प्रणुन्नाः परवशा जाताः । त्वमपि कारुण्येन भक्तवात्सल्येन विवशः परवशः । किञ्चेति, उद्धवप्रेषणे हेत्वन्तरमप्यस्तीत्यर्थः । तदेवाह— अमुष्मा इति । तासां भक्युद्रेकम् उद्धवात् भक्त्यतिशयम् अमुष्मै उद्धवाय प्रदर्शयिष्यन् प्रदर्शनार्थमित्यर्थः । परमसुहृदे भक्तवर्यायेति भक्तवर्याभिमानापगम एव त्वत्परमसुहृत्त्वमुचितमिति तवाभिप्राय इत्यभिप्रायः ॥ २ ॥

**त्वन्माहात्म्यप्रथिमपिशुनं गोकुलं प्राप्य सायं**
**त्वद्वार्ताभिर्बहु स रमयामास नन्दं यशोदाम् ।**

---

१. 'पायनपूर्वकं प्रा' क. पाठः. २. 'पप्रश' क. पाठः.

प्रातर्दृष्ट्वा मणिमयरथं शङ्किताः पङ्कजाक्ष्यः
श्रुत्वा प्राप्तं भवदनुचरं त्यक्तकार्याः समीयुः ॥ ३ ॥

त्वादिति । त्वन्माहात्म्यस्य प्रथिमा विस्तारः तत्पिशुनं तत्सूचकं गोकुलं तत्र नन्दगेहं प्राप्य सायं सन्ध्यायाम् । अतः स्वस्वगेहस्थाभिर्गोपीभिरुद्धवागमनं न विदितम् । अतः केवलं नन्दं यशोदामेव बहु अतिशयेन रमयामास । प्रातस्त्वदागमं शङ्किताः ॥ ३ ॥

दृष्ट्वा चैनं त्वदुपमलसद्वेषभूषाभिरामं
स्मृत्वा स्मृत्वा तव विलसितान्युच्चकैस्तानि तानि ।
रुद्धालापाः कथमपि पुनर्गद्गदां वाचमूचुः
सौजन्यादीन् निजपरभिदामप्यलं विस्मरन्त्यः ॥ ४ ॥

दृष्ट्वेति । त्वदुपमाभ्यां त्वद्वेषभूषणसदृशाभ्यां लसद्भ्यां वेषभूषाभ्याम् आभरणतद्विन्यासविशेषाभ्यामभिरामम् । अतः सदृशदर्शनादुच्चकैरतिशयेन तानि तानि विलसितानि क्रीडाः स्मृत्वा बाष्पकण्ठतया रुद्ध आलापो यासाम् । त्वद्गतमानसतया निजपरभिदां स्वपरभेदमपि ॥ ४ ॥

श्रीमन्! किं त्वं पितृजनकृते प्रेषितो निर्दयेन
क्वासौ कान्तो नगरसुदृशां हा हरे! नाथ! पायाः ।
आश्लेषाणाममृतवपुषो हन्त ते चुम्बनाना-
मुन्मादानां कुहकवचसां विस्मरेत् कान्त! का वा ॥ ५ ॥

श्रीमन्निति । निर्दयेन कृष्णेन पितृजनकृते नन्दयशोदयोः प्रियार्थं किं प्रेषितोऽसि । असौ नगरसुदृशां कान्तः विदग्धजनविधेय इदानीं क्व इति प्रणयवचनसमनुस्मृतभगवद्गुणकृतपारवश्या ऊचुः हा इति । हरे! भक्तजनसन्तापशमन! हा नाथ! अस्मत्प्राणसंरक्षक! निजरूपामृतपानेन जीवय । अमृतमयं वपुर्यस्य तस्य तव आश्लेषाणां चुम्बनानां हन्त उन्मादानाम् आत्मानं विस्मृत्यैव कृतानां तत्त-

१. 'द्वि' च. पाठः, 'प' घ. ङ. पाठः.

द्विलसितानां कुहकवचसां कपटवचनानाम् । अथवा हे कुहक! कपट! तवोन्मादानाम् अननुसंहितपूर्वापराणां वचसां को वा विस्मरेत् ॥ ५ ॥

**रासक्रीडालुलितललितं विश्लथत्केशपाशं**
**मन्दोद्भिन्नश्रमजलकणं लोभनीयं त्वदङ्गम् ।**
**कारुण्याब्धे! सकृदपि समालिङ्गितुं दर्शयेति**
**प्रेमोन्मादाद् भुवनमदन! त्वत्प्रियास्त्वां विलेपुः ॥ ६ ॥**

रासेति । रासक्रीडायां लुलितं मर्दितं ललितं सुन्दरं च त्वदङ्गं हे कारुण्याब्धे! भक्तवत्सल! सकृद् एकवारमपि समालिङ्गितुमपि । भुवनमदन! सर्वेषां सर्वदापि सर्वकामोन्मादप्रद! ॥ ६ ॥

**एवम्प्रायैर्विवशवचनैराकुला गोपिकास्ता-**
**स्त्वत्सन्देशैः प्रकृतिमनयत् सोऽथ विज्ञानगर्भैः ।**
**भूयस्ताभिर्मुदितमतिभिस्त्वन्मयीभिर्वधूभि-**
**स्तत्तद्वार्तासरसमनयत् कानिचिद् वासराणि ॥ ७ ॥**

एवमिति । अथोद्धवो विज्ञानगर्भैस्त्वत्सन्देशैस्ताः प्रकृतिं कृतार्थतामनयत् । त्वन्मयीभिः त्वच्चिन्तयात्मानं विस्मरन्तीभिः तत्तद्वार्ताभिः सरसं यथा भवति तथा³ कानिचिद् वासराण्यनयत् ॥ ७ ॥

**त्वत्प्रोद्गानैः सहितमनिशं सर्वतो गेहकृत्यं**
**त्वद्वार्तैव प्रसरति मिथः सैव चोत्स्वापलापाः ।**
**चेष्टाः प्रायस्त्वदनुकृतयस्त्वन्मयं सर्वमेवं**
**दृष्ट्वा तत्र व्यमुहदधिकं विस्मयादुद्धवोऽयम् ॥ ८ ॥**

त्वदिति । उत्स्वापलापाः स्वप्नवचनानि सैव त्वद्वार्तैव । चेष्टाः व्यापाराः प्रायस्त्वदनुकरणरूपाः । एवम् उक्तप्रकारेण तासां सर्वं त्वन्मयं दृष्ट्वा अयमुद्धवो विस्मयादधिकं व्यमुहद् विमुमोह प्रतिपत्तिमूढोऽभूदित्यर्थः ॥ ८ ॥

१. 'का वि' क. पाठः. २. 'त' घ. ङ. च. पाठः. ३. 'थान' क. पाठः.

एवमुद्धवः स्त्रीणामपीश्वरे स्वातिशयप्रेमलक्षणभक्तिदर्शनात् त्यक्तभक्तमन्यभावस्ताः प्रत्येकमाश्वासयामास । तत्र प्रधानभूतायां राधायामाश्वासनप्रकारमाह—

**राधाया मे प्रियतममिदं मत्प्रियैवं ब्रवीति**
**त्वं किं मौनं कलयसि सखे! मानिनी मत्प्रियेव ।**
**इत्याद्येव प्रवदति सखि! त्वत्प्रियो निर्जने मा-**
**मित्थंवादैररमयदयं त्वत्प्रियामुत्पलाक्षीम् ॥ ९ ॥**

**राधाया** इति । हे सखि! राधे! त्वत्प्रियः श्रीकृष्णः निर्जने मामित्यादि त्वत्सम्बन्धिवचनमेव प्रवदति । कथं, हे सखे! उद्धव! मे राधाया इदं प्रियतमं, मत्प्रिया सैवं ब्रवीति, किं त्वं मानिनी मत्प्रियेव मौनं कलयसि धत्स इति । जनसंसदि तु तस्य गम्भीरचेतस्तया सन्नपि त्वद्विरहखेदो ज्ञातुमशक्यः । अयम् उद्धव इत्थंवादैस्त्वत्प्रेमसूचकैर्वचनैरेव त्वत्प्रियां राधामरमयत् ॥ ९ ॥

सन्देशमाह—

**एष्यामि द्रागनुपगमनं केवलं कार्यभाराद्**
**विश्लेषेऽपि स्मरणदृढतासम्भवान्मास्तु खेदः ।**
**ब्रह्मानन्दे मिलति नचिरात् सङ्गमो वा वियोग-**
**स्तुल्यो वः स्यादिति तव गिरा सोऽकरोन्निर्व्यथास्ताः ॥१०॥**

**एष्यामीति** । अहं द्राग् झटिति एष्यामि । अनुपगमनं भवत्सन्निधावनागमनं केवलं मम कार्यभारादेव, न प्रेममान्द्यात् । किञ्च भवतीनां मद्विश्लेषो महते फलाय, मत्स्मरणस्य दृढतासम्भवात् । तस्माद् विश्लेषविषयः खेदो मास्तु । स्मरणदृढतायाः समाध्यपरपर्यायायाः फलमाह—ब्रह्मानन्द इति । ब्रह्मरूपस्य मम स्मरणदृढतायां सत्यां नचिराद् ब्रह्मानन्दे मिलति सति वो भवतीनां मत्सङ्गमो मद्वियोगश्च तुल्यः स्यात् । विरहेऽपि वः सर्वात्मना न मद्विरहः, भवतीनामप्यन्तरन्तर्यामिरूपेण ममैवावस्थानादिति भावः । इति या तव गीः सन्देशः, तया स उद्धवस्ता निर्व्यथा अकरोत् ॥ १० ॥

१. 'या' क. ग. पाठः. २. 'या आ' क. ग. पाठः. ३. 'राधैवं' क. पाठः. ४. 'सुकरः ।' क. ग. पाठः. ५ 'षेऽपि वः खे' क. ग. पाठः.

एवं भक्तिः सकलभुवने नेक्षिता[1] न श्रुता वा
किं शास्त्रौघैः किमिह तपसा गोपिकाभ्यो नमोऽस्तु।
इत्यानन्दाकुलमुपगतं गोकुलादुद्धवं तं
दृष्ट्वा हृष्टो गुरुपुरपते! पाहि मामामयौघात् ॥ ११ ॥

**एवमिति**। एवं गोपिकानामिव। शास्त्रौघैस्तपसा वा किं फलम्। तद्रहितानामपि भक्ति[2]दर्शनान्न शास्त्रादिफलं भक्तिरित्यर्थः। तस्माद् गोपिकाभ्यो नमोऽस्तु। इति 'एवम् एवंभक्तिरित्यादिनमोऽस्त्वि'त्यन्तमन्त्रपुरस्सरं पुनः पुनस्ता नमस्कृत्य आनन्दाकुलं गोकुलादुपगतं त्वत्सन्निधिं प्राप्तं[3] तं त्यक्तभक्ताभिमानमुद्धवं दृष्ट्वा हृष्टः इदानीमस्य मत्सखित्वाधिकारो जात इति सन्तुष्टः ॥ १२ ॥

इति उद्धवदूत्यवर्णनं षट्सप्ततितमं दशकं सैकम्।

---

सैरन्ध्र्यास्तदनु चिरं स्मरातुराया
यातोऽभूः सललितमुद्धवेन सार्धम्।
आवासं त्वदुपगमोत्सवं सदैव
ध्यायन्त्याः प्रतिदिनवाससज्जिकायाः ॥ १ ॥

**सैरन्ध्र्या** इति। अद्यैष्यति कान्त इति प्रतिदिनं तदुचितवेषभूषणविभवसंभरणपूर्वकं वासगृहे प्रतिपालनात् वासकसज्जिकायाः सैरन्ध्र्या अनुलेपदात्र्या आवासं सललितं ललितवेषभूषणसहायसम्पत्सहितं यथा भवति तथा यातोऽभूः। त्वदुपगमोत्सवं त्वत्सङ्गमकौतुकम् ॥ १ ॥

उपगते त्वयि पूर्णमनोरथां
प्रमदसम्भ्रमकम्प्रपयोधराम्।
विविधमाननमादधतीं मुदा
रहसि तां रमयाञ्चकृषे सुखम् ॥ २ ॥

---

१. 'क्षा' क. घ. पाठः. २. 'क्त्यतिशयद' क. ग. पाठः. ३. 'प्रवन्तं स्व' क. पाठः.

**उपगत** इति। प्रमदसम्भ्रमेण हर्षातिशयजनितसौजन्यव्यापारत्वरया कम्प्रौ कम्पनशीलौ पयोधरौ यस्याः। विविधमाननं संमाननम् आदधतीं तां सुखं रमयाञ्चकृषे ॥ २ ॥

पृष्टा वरं पुनरसाववृणोद् वराकी
भूयस्त्वया सुरतमेव निशान्तरेषु।
सायुज्यमस्त्विति वदेद् बुध एव कामं
सामीप्यमस्त्वनिशमित्यपि नाब्रवीत् किम् ॥ ३ ॥

**पृष्टेति**। यदिच्छसि, तद् वृण्विति त्वया पुनः प्रस्थाने वरं पृष्टा असौ सैरन्ध्री भूयस्त्वया सुरतमेवावृणोद्, न मोक्षम् त्वत्सायुज्यसामीप्यादिरूपम्। तत्र बुधः सायुज्याख्यमोक्षरसाभिज्ञ एव सायुज्यमस्त्विति वदेत् प्रार्थयेत्। एषा तु वराकी निर्विषयमोक्षरसानभिज्ञेत्येतत् कामं भवतु। अनिशं सामीप्यमस्त्वित्यपि किं नाब्रवीत्। त्वत्सामीप्यसुखं तु तया कञ्चित् कालमनुभूतमेव। तस्मात् सर्वमीश्वरेच्छापरतन्त्रमिति वेदितव्यम् ॥ ३ ॥

ततो भवान् देव! निशासु कासुचि-
न्मृगीदृशं तां निभृतं विनोदयन्।
अदादुपश्लोक इति श्रुतं सुतं
स नारदात् सात्त्वततन्त्रविद् बभौ ॥ ४ ॥

**तत** इति। उपश्लोक इति श्रुतं विश्रुतं सुतम् अदाद् उत्पादयामास। सः नारदात् सात्त्वततन्त्रं पाञ्चरात्राद्यागमं वेत्तीति तथा ॥ ४ ॥

अक्रूरमन्दिरमितोऽथ बलोद्धवाभ्या-
मभ्यर्चितो बहु नुतो मुदितेन तेन।
एनं विसृज्य विपिनागतपाण्डवेय-
वृत्तं विवेदिथ तथा धृतराष्ट्रचेष्टाम् ॥ ५ ॥

**अक्रूरेति**। एनम् अक्रूरं विसृज्य विपिनाद् आगतानां पाण्डवेयानां वृत्त तथा धृतराष्ट्रचेष्टां च विवेदिथ ॥ ५ ॥

---

१. 'ष्टा सा सै' क. पाठः. २. 'स्त्विति किं' क. पाठः.

विघाताज्जामातुः परमसुहृदो भोजनृपते-
जरासन्धे रुन्धत्यनवधिरुषान्धेऽथ मथुराम् ।
रथाद्यैर्द्योर्लब्धैः कतिपयबलस्त्वं बलयुत-
स्त्रयोविंशत्यक्षौहिणि तदुपनीतं समहृथाः ॥ ६ ॥

**विघातादिति** । जरासन्धस्य जामाता कंसः, तत्पुत्र्योरस्तिप्राप्त्योः पतित्वात्, तस्य भोजनृपतेर्वधाद् अनवधिरुषान्धे जरासन्धे मथुरां रुन्धति सति द्योः स्वर्गाल्लब्धैर्मातलिनानीतै रथाद्यैः सपरिकरैः कतिपयबलः परिमितसेनासहितः तदुपनीतं जरासन्धाहृतं त्रयोविंशत्यक्षौहिणि बलं समहृथाः सञ्जहर्थ ॥ ६ ॥

बद्धं बलादथ बलेन बलोत्तरं त्वं
भूयो बलोद्यमरसेन मुमोचिथैनम् ।
निश्शेषदिग्जयसमाहृतविश्वसैन्यात्
कोऽन्यस्ततो हि बलपौरुषवांस्तदानीम् ॥ ७ ॥

**बद्धमिति** । अथ बलेन बलाद् बद्धं बलेन उत्तरम् उत्कृष्टं भूयो बलोद्यमरसेन जरासन्धः पराजितो भूयोऽपि भूरिबलमुपनेष्यतीति कौतुकेन एनं जरासन्धं मुमोचिथ । कीदृशो जरासन्ध इत्यपेक्षायामाह — निश्शेषदिग्जये समाहृतानि विश्वेषां सर्वनृपाणां सैन्यानि येन तस्माज्जरासन्धादन्यः कः ॥ ७ ॥

भग्नः स लग्नहृदयोऽपि नृपैः प्रणुन्नो
युद्धं त्वया व्यधित षोडशकृत्व एवम् ।
अक्षौहिणीः शिव शिवास्य जघन्थ विष्णो!
सम्भूय सैकनवतित्रिशतं तदानीम् ॥ ८ ॥

**भग्न इति** । स जरासन्धस्त्वत्सकाशात् सप्तदशकृत्वः पराजितः ॥ ८ ॥

अष्टादशेऽस्य समरे समुपेयुषि त्वं
दृष्ट्वा पुरोऽथ यवनं यवनत्रिकोट्या ।

---

१. 'विघाताद्वधा' क. ग. पाठः. २. इदं क. ग. पुस्तकयोर्न दृश्यते.

त्वष्ट्रा विधाप्य पुरमाशु पयोधिमध्ये
तत्राथ योगबलतः स्वजनाननैषीः ॥ ९ ॥

**अष्टादश** इति । अस्याष्टादशे समरे समुपेयुषि *आगामिनि सति त्वं यवनानां म्लेच्छानां त्रिकोट्या युतं यवनं पुरतो दृष्ट्वा त्वष्ट्रा विश्वकर्मणा पयोधिमध्ये आशु द्वारवत्याख्यं पुरं विधाप्य कारयित्वा योगबलतः योगैश्वर्येण तत्र स्वजनाननैषीः ॥ ९ ॥

पद्भ्यां त्वं पद्ममाली चकित इव पुरान्निर्गतो धावमानो
म्लेच्छेशेनानुयातो वधसुकृतविहीनेन शैले न्यलैषीः ।
सुप्तेनाङ्घ्र्याहतेन द्रुतमथ मुचुकुन्देन भस्मीकृतेऽस्मिन्
भूपायास्मै गुहान्ते सुललितवपुषा तस्थिषे भक्तिभाजे ॥१०॥

**पद्भ्यामिति** । त्वया वधः सुकृतैकलभ्यः तद्विहीनेन । शैले तद्गुहायां देवदत्तया निद्रया चिरं सुप्तेन यवनेन कृष्णोऽयमिति भ्रान्त्या अङ्घ्र्याहतेन मुचुकुन्देनास्मिन् यवने भस्मीकृते तस्मै मुचुकुन्दाय तस्थिषे आत्मानं प्रकाश्य स्थितवानसि ॥ १० ॥

ऐक्ष्वाकोऽहं विरक्तोऽस्म्यखिलनृपसुखे त्वत्प्रसादैककाङ्क्षी
हा देवेति स्तुवन्तं वरविततिषु तं निस्पृहं वीक्ष्य हृष्यन् ।
मुक्तेस्तुल्यां च भक्तिं धुतसकलमलं मोक्षमप्याशु दत्त्वा
कार्यं हिंसाविशुद्ध्यै तप इति च तदा प्रात्थ लोकप्रतीत्यै ॥११॥

**ऐक्ष्वाक** इति । ऐक्ष्वाकः इक्ष्वाकुवंशजः अखिलनृपसुखे राज्यभोगे विरक्तः। आशु समनन्तरब्राह्मणजन्मान्ते धुतसकलमलम् अज्ञानकल्पितसंसारनिवृत्तिरूपं मोक्षं तावत्कालपर्यन्तं मुक्तेस्तुल्यां निरतिशयसुखरूपां प्रेमलक्षणां भक्तिमपि दत्त्वा क्षात्रधर्मेण कृताया हिंसाया विशुद्ध्यै तपः कार्यमिति च तदा प्रात्थ अब्रवीः । यद्यपि त्वद्दर्शनादेव कृतकृत्यो मुचुकुन्दः, तथापि लोकप्रतीत्यै, क्षत्रधर्मं लोकान् ग्राहयितुमिदमात्थेत्यर्थः ॥ ११ ॥

---

१. 'न् ॥' ख. पाठः.

---

* आर्थिकार्थकथनमिदम् ।

तदनु मथुरां गत्वा हत्वा चमूं यवनाहृतां
मगधपतिना मार्गे सैन्यैः पुरेव निवारितः ।
चरमविजयं दर्पायास्मै प्रदाय पलायितो
जलधिनगरीं यातो वातालयेश्वर! पाहि माम् ॥ १२ ॥

**तदन्विति** । द्वारकां व्रजन् मार्गे मगधपतिना जरासन्धेन पुरा यथा, तथा निवारितः चरमविजयम् अष्टादशसङ्ग्रामजयं दर्पाय अहङ्कारमुत्पादयितुं प्रदाय पलायितो धावन् प्रवर्षणाख्यं गिरिमारुह्य तस्मादुत्पत्य भुवि पतित्वा जरासन्धेनालक्षितो जलधिनगरीं द्वारकां यातः ॥ १२ ॥

इति सैरन्ध्रयामुपश्लोकोत्पत्तिवर्णनं जरासन्धादियुद्धवर्णनं
मुचुकुन्दानुग्रहवर्णनं च
**सप्तसप्ततितमं दशकं सटिकम् ।**

---

त्रिदिववर्धकि[1]वर्धितकौशलं त्रिदशदत्तसमस्तविभूतिमत् ।
जलधिमध्यगतं त्वमभूषयो नवपुरं वपुरञ्चितरोचिषा ॥ १ ॥

**त्रिदिवेति** । त्रिदिववर्धकि[2]ना विश्वकर्मणा वर्धितानि सर्वप्रयत्नेन कृतानि कौशलानि यत्र । त्रिदशैर्लोकपालैः दत्ताः प्रत्यर्पिताः समस्ता विभूतयः सुधर्मापारिजाताद्याः सन्त्यस्मिन्निति तथा । नवपुरं द्वारकां वपुरञ्चितेन रोचिषा देहकान्त्या त्वमभूषयः ॥ १ ॥

ददुषि रेवतभूभृति रेवतीं हलभृते तनयां विधिशासनात् ।
महितमुत्सवघोषमपूपुषः समुदितैर्मुदितैः सह यादवैः ॥ २ ॥

**ददुषीति** । रेवतो नाम राजा रेवत्याख्यामात्मतनयामादाय सत्यलोकं गत्वा ब्रह्माणं पृष्टवान् 'एनां कस्मै प्रदास्यामी'ति । 'त्वत्समानकालिका राजानः सम्प्रत्यदर्शनं गताः । किन्तु त्वयि भूमिगते सति रामकृष्णाववतीर्णौ भविष्यतः । तयो रामायैनां देही'ति विधेः शासनात् । समुदितैः सहितैः ॥ २ ॥

---

१. 'दशवर्ध' क. ग. पाठः. २. 'दशवर्ध' क. ग. पाठः.

**अथ विदर्भसुतां खलु रुक्मिणीं प्रणयिनीं त्वयि देव! सहोदरः।**
**स्वयमदित्सत चेदिमहीभुजे स्वतमसा तमसाधुमुपाश्रयन्॥ ३॥**

अथेति। सहोदरो रुक्मी। स्वयं, नान्ये पित्रादयः, चेदिमहीभुजे शिशुपालाय अदित्सत दातुमैच्छत्। स्वतमसा स्वाज्ञानेन तमसाधुं चेदिनृपम् उपाश्रयन्॥ ३॥

**चिरधृतप्रणया त्वयि बालिका सपदि काङ्क्षितभङ्गसमाकुला।**
**तव निवेदयितुं द्विजमादिशत् स्वकदनं कदनङ्गविनिर्मितम्॥ ४॥**

चिरेति। कदनङ्गेन विनिर्मितं स्वस्य कदनं पीडाम्॥ ४॥

**द्विजसुतोऽपि च तूर्णमुपाययौ तव पुरं हि दुराशदुरासदम्।**
**मुदमवाप च सादरपूजितः स भवता भवतापहृता स्वयम्॥ ५॥**

द्विजेति। दुराशदुरासदं हि दुष्टाशयैरेव दुष्प्रवेशम्। भवतापं संसारदुःखं हरतीति भवतापहृत्॥ ५॥

**स च भवन्तमवोचत कुण्डिने नृपसुता खलु राजति रुक्मिणी।**
**त्वयि समुत्सुकया निजधीरताराहितया हि तया प्रहितोऽस्म्यहम्॥ ६॥**

स चेति। कुण्डिने विदर्भपुरे। तया प्रहितोऽस्मि॥ ६॥

रुक्मिण्याः सन्देशमाह द्वाभ्यां—

**तव हृतास्मि पुरैव गुणैरहं हरति मां किल चेदिनृपोऽधुना।**
**अयि कृपालय! पालय मामिति प्रजगदे जगदेकपते! तया॥ ७॥**

तवेति। गुणैः पाशस्थानीयैस्तव भक्तवात्सल्यादिगुणैः अहं पुरा स्वयंवरप्रसङ्गात् प्रागेव। अधुना स्वयंवरे चेदिनृपः शिशुपालः मां त्वद्धृतमनसं हरति हर्तुमुत्सहते किल। अयि कृपालय! भक्तवत्सल! मां पालय शरीरमपि हृत्वा मनसा संयोजयेति तया प्रजगदे॥ ७॥

---

१. 'प्प्रापम्।' क. ग. पाठः.

**अशरणां यदि मां त्वमुपेक्षसे सपदि जीवितमेव जहाम्यहम् ।**
**इति गिरा सुतनोरतनोद् भृशं सुहृदयं हृदयं तव कातरम् ॥ ८ ॥**

**अशरणामिति** । अयं द्विजः इति सुतनो रुक्मिण्या गिरा तव हृदयं भृशं कातरं प्रियतमाप्राणापायभीरु अतनोत् ॥ ८ ॥

**अकथयस्त्वमथैनमये सखे! तदधिका मम मन्मथवेदना ।**
**नृपसमक्षमुपेत्य हराम्यहं तदयि तां दयितामसितेक्षणाम् ॥ ९ ॥**

**अकथय** इति । तदधिका रुक्मिण्या अधिका । तत् तस्माद् अयि सखे! नृपसमक्षं पश्यतां नृपाणां तां दयितां हरामि ॥ ९ ॥

**प्रमुदितेन च तेन समं तदा रथगतो लघु कुण्डिनमेयिवान् ।**
**गुरुमरुत्पुरनायक! मे भवान् वितनुतां तनुतां निखिलापदाम् ॥१०॥**

**प्रमुदितेनेति** । त्वद्वचनश्रवणेन प्रमुदितेन तेन द्विजेन समं सह रथे गतः लघु शीघ्रम् एयिवान् गतवान् भवान् । तनुतां न्यूनतां वितनुतां कुरुताम् ॥१०॥

इति द्वारकावासवर्णनं रुक्मिणीपरिणये भगवतः कुण्डिनपुरप्राप्तिवर्णनं च

अष्टसप्ततितमं दशकम् ।

---

**बलसमेतबलानुगतो भवान् पुरमगाहत भीष्मकमानितः ।**
**द्विजसुतं त्वदुपागमवादिनं धृतरसा तरसा प्रणनाम सा ॥ १ ॥**

**बलेति** । कलहशङ्किना बलसमेतेन सेनासहितेन श्रीबलभद्रेणानुगतः भीष्मकेण रुक्मिण्या जनकेन मानितः पूजितः । अगाहत प्रविवेश । त्वदुपागमवादिनं प्राप्तस्त्वद्दयित इति निवेदयन्तम् । धृतरसा सञ्जातकौतुका तरसा प्रणनाम, नान्यत् किञ्चिद् दत्तवती । सा श्रियोंऽशभूता नमस्कारेण स्वात्मानं समग्रां श्रियमर्पितवती ॥ १ ॥

**भुवनकान्तमवेक्ष्य भवद्वपुर्नृपसुतस्य निशम्य च चेष्टितम् ।**
**विपुलखेदजुषां पुरवासिनां सरुदितैरुदितैरगमन्निशा ॥ २ ॥**

**भुवनेति** । नृपसुतस्य रुक्मिणः चेष्टितं शिशुपालाय कन्यां साधयितुमुद्यमं रुक्मिण्याः सदृशं भवद्वपुश्चावेक्ष्य सरुदितैरुदितैः प्रलापैः ॥ २ ॥

**तदनु वन्दितुमिन्दुमुखी शिवां विहितमङ्गलभूषणभासुरा ।**
**निरगमद् भवदर्पितजीविता स्वपुरतः पुरतः सुभटावृता ॥ ३ ॥**

**तदन्विति** । स्वपुरतः स्वस्य पुरात् । पुरतः पुरोभागे ॥ ३ ॥

**कुलवधूभिरुपेत्य कुमारिका गिरिसुतां परिपूज्य च सादरम् ।**
**मुहुरयाचत तत्पदपङ्कजे निपतिता पतितां तव केवलम् ॥ ४ ॥**

**कुलेति** । कुलवधूभिः मङ्गलस्त्रीभिः सहोपेत्य तत्पदपङ्कजे गिरिसुतापदपङ्कजे निपतिता केवलं तव पतितां श्रीकृष्णो मे पतिर्भूयादिति मुहुरयाचत ॥ ४ ॥

**समवलोक्य कुतूहलसङ्कुले नृपकुले निभृतं त्वयि च स्थिते ।**
**नृपसुता निरगाद् गिरिजालयात् सुरुचिरं रुचिरञ्जितदिङ्मुखा ॥ ५ ॥**

**समिति** । त्वयि च निभृतं स्थिते तां हर्तुं रन्ध्रं प्रतीक्ष्य गूढं स्थिते सति । रुच्या रञ्जितानि दिङ्मुखानि यया ॥ ५ ॥

**भुवनमोहनरूपरुचा तदा विवशिताखिलराजकदम्बया ।**
**त्वमपि देव! कटाक्षविमोक्षणैः प्रमदया मदयाञ्चकृषे मनाक् ॥ ६ ॥**

**भुवनेति** । विवशितः परवशीकृतः अखिलराजकदम्बो यया तया प्रमदया रुक्मिण्या त्वमपि मनाग् ईषद् मदयाञ्चकृषे सञ्जातमदः कृतः ॥ ६ ॥

**क्व नु गमिष्यसि चन्द्रमुखीति तां सरसमेत्य करेण हरन् क्षणात् ।**
**समधिरोप्य रथं त्वमपाहृथा भुवि ततो विततो निनदो द्विषाम् ॥ ७ ॥**

**क्व नु गमिष्यसीति** । अपाहृथाः अपहृतवान् ॥ ७ ॥

---

१. 'ते प' क. पाठः.

**क्व नु गतः पशुपाल इति क्रुधा कृतरणा यदुभिश्च जिता नृपाः ।**
**न तु भवानुदचाल्यत तैरहो पिशुनकैः शुनकैरिव केसरी ॥ ८ ॥**

**क्व नु गत** इति । कृतो रणो यैः ते नृपाः यदुभिर्जिताः पराजिताः । तैः पिशुनकैः दुर्जनैः भवान् न तूदचाल्यत, तान् भवान् नाजीगणदित्यर्थः । शुनकैः श्वभिः केसरीव ॥ ८ ॥

**तदनु रुक्मिणमागतमाहवे वधमुपेक्ष्य निबध्य विरूपयन् ।**
**हृतमदं परिमुच्य बलोक्तिभिः पुरमया रमया सह कान्तया ॥ ९ ॥**

**तदन्विति** । रुक्मिणं विरूपयन् वपनादिना विरूपं कुर्वन् बलोक्तिभिः अग्रजवचनैः परिमुच्य विगलितबन्धनं कृत्वा रमया कान्तया सह पुरमयाः प्राप्तवान् ॥ ९ ॥

**नवसमागमलज्जितमानसां प्रणयकौतुकजृम्भितमन्मथाम् ।**
**अरमयः खलु नाथ! यथासुखं रहसि तां हसितांशुलसन्मुखीम् ॥१०॥**

**नवसमागमेति** । हसितांशुभिर्लसन्मुखीं तां रहस्यरमयः ॥ १० ॥

**विविधनर्मभिरेवमहर्निशं प्रमदमाकलयन् पुनरेकदा ।**
**ऋजुमतेः किल वक्रगिरा भवान् वरतनोरतनोदतिलोलताम् ॥ ११ ॥**

**विविधनर्मभिरिति** । प्रमदं हर्षमाकलयन् जनयन् । वक्रगिरा वक्रोक्त्या ऋजुमतेः रुक्मिण्याः अतिलोलतां परवशतामतनोत् ॥ ११ ॥

**तदधिकैरथ लालनकौशलैः प्रणयिनीमधिकं रमयन्निमाम् ।**
**अयि मुकुन्द! भवच्चरितानि नः प्रगदतां गदतान्तिमपाकुरु ॥ १२ ॥**

**तदधिकैरिति** । प्रगदतां स्तुवतां गदतान्ति रोगपीडाम् अपाकुरु ॥१२॥

**इति रुक्मिणीपरिणयवर्णनम् एकोनाशीतितमं दशकं सद्विकम् ।**

---

१. 'हि' घ. ङ. पाठः, २. 'सुखय' ग. घ. ङ. च. पाठः,

सत्राजितस्त्वमथ लुब्धवदर्कलब्धं
दिव्यं स्यमन्तकमणिं भगवन्नयाचीः ।
तत्कारणं बहुविधं मम भाति नूनं
तस्यात्मजां त्वयि रतां छलतो विवोढुम् ॥ १ ॥

सत्राजित इति । तस्य स्यमन्तकयाचनस्य कारणं जाम्बवदनुग्रहतत्सुतावाप्तिसत्यभामादातृप्रतिग्रहीतृसत्राजिच्छतधन्ववधाक्रूरप्रीत्यापादनादिरूपं बहुविधं मम भाति प्रतिभाति । नूनम् एवं तु निश्चिनोमि । तस्य सत्राजित आत्मजां त्वयि रतां सत्यभामां छलतो व्याजेन विवोढुं विवाहार्थम् । स्वापराधभीरुणानिच्छतापि स्वसुतां दापयितुमित्यर्थः ॥ १ ॥

अदत्तं तं तुभ्यं मणिवरमनेनाल्पमनसा
प्रसेनस्तद्भ्राता गलभुवि वहन् प्राप मृगयाम् ।
अहन्नेनं सिंहो मणिमहसि मांसभ्रमवशात्
कपीन्द्रस्तं हत्वा मणिमपि च बालाय ददिवान् ॥ २ ॥

अदत्तमिति । कपीन्द्रो जाम्बवान् ॥ २ ॥

शशंसुः सत्राजिद्गिरमनु जनास्त्वां मणिहरं
जनानां पीयूषं भवति गुणिनां दोषकणिका ।
ततः सर्वज्ञोऽपि स्वजनसहितो मार्गणपरः
प्रसेनं तं दृष्ट्वा हरिमपि गतोऽभूः कपिगुहाम् ॥ ३ ॥

शशंसुरिति । कृष्णो मे भ्रातरं हत्वा मणिं हृतवानिति सत्राजिद्गिरमनु तच्छ्रुत्वा जनाः प्राङ्मणियाचनात् तव मणिजिघृक्षामप्युत्पश्यन्तस्त्वां मणिहरं शशंसुः । गुणिनां दोषकणिका दोषलेशोऽपि जनानां पीयूषवदास्वादनीया भवति हि । हरिं सिंहमपि दृष्ट्वा कपेर्जाम्बवतो गुहाम् ॥ ३ ॥

भवन्तमवितर्कयन्नतिवयाः स्वयं जाम्बवान्
मुकुन्दशरणं हि मां क इह रोद्धुमित्यालपन् ।
विभो! रघुपते! हरे! जय जयेत्यलं मुष्टिभि-
श्चिरं[1] तव समर्चनं व्यधित भक्तचूडामणिः ॥ ४ ॥

---

१. 'श्चिरं त' ग. घ. ङ. पाठः.

**भवन्तमिति** । अतिवयाः वृद्धः अत एव भवन्तं श्रीकृष्णात्मनावतीर्णम् अवितर्कयन् अनिरूपयन् मुकुन्दो विष्णुः शरणं यस्य तं मां रोद्धुम् इह जगति कः शक्तः विभो! हरे! रघुपते! जय जय स्वोत्कर्षमाविष्कुर्वित्यालपन् मन्त्रमिव पुनः पुनर्जपन् चरन् प्रदक्षिणं कुर्वन्निव द्वन्द्वयुद्धमार्गे सञ्चरन् मुष्टिभिः कुसुमैरिव तव स्वस्वामिनः समर्चनं सम्यक् संरम्भात्मकभक्तिपुरस्सरं पूजां व्यधित प्रसादयामास, यतोऽयं भक्तचूडामणिः त्वत्प्रीत्यै कृतसकलकर्मा[1] ॥ ४ ॥

**बुद्ध्वाथ तेन दत्तां नवरमणीं वरमणीं[2] च परिगृह्णन् ।**
**अनुगृह्णन्नमुमागाः सपदि च सत्राजिते मणिं प्रादाः ॥ ५ ॥**

**बुद्ध्वेति** । अथ बुद्ध्वा त्वन्मुष्टिपातेन सञ्जातव्यथतया त्वां पुराणपुरुषं ज्ञात्वा स्वापराधमार्जनाय तेन जाम्बवता दत्तां नवाम् अप्रौढां रमणीं जाम्बवतीं वरमणीं[3] स्यमन्तकं च परिगृह्णन् अमुं भक्तम् अनुगृह्णन् पाणिपद्मेन प्रत्यङ्गमभिमृश्यापनीताखिलपरितापं कुर्वन् द्वारकामागाः । सपदि आगमनानन्तरमेव सत्राजिते मणिं तत्प्राप्त्याख्यानपूर्वकं प्रादाः दत्तवान् ॥ ५ ॥

**तदनु स खलु व्रीडालोलो विलोलविलोचनां**
**दुहितरमहो धीमान् भामां गिरैव परार्पिताम् ।**
**अदित मणिना तुभ्यं लभ्यं समेत्य भवानपि**
**प्रमुदितमनास्तस्यैवादान्मणिं गहनाशयः ॥ ६ ॥**

**तदन्विति** । स खलु सत्राजित् सत्यभामाख्यं स्त्रीरत्नं रत्नमपि श्रीकृष्णाय दत्त्वा आत्मापराधं प्रमार्ज्मीति शुभा धीरस्यास्तीति धीमान् गिरैव, न क्रियया पराय शतधन्वने अर्पितां प्रतिश्रुताम् मणिना सह तुभ्यम् अदित दत्तवान् । भवानपि मणेर्लभ्यं स्वर्णभाराष्टकं समेत्य दातव्यमिति समयपूर्वकं प्राप्य तस्य सत्राजित एव मणिमदात् । किमर्थं गहनाशयः भूयोऽप्यस्य मणिहेतुकामापदं विधातुं[4] वान्यत् किञ्चिद्वेति देवैरप्यविदित आशयोऽभिप्रायो यस्य ॥ ६ ॥

**व्रीडाकुलां रमयति त्वयि सत्यभामां**
**कौन्तेयदाहकथयाथ कुरून् प्रयाते ।**

---

१. 'र्मा इति ॥' क. ग. पाठः. २. 'णिं' ग. ङ. च. पाठः. ३. 'णिं' ख. पाठः. ४. 'तुमित्यपि' क. ख. पाठः.

ह्री गान्दिनेयकृतवर्मगिरा निपात्य
सत्राजितं शतधनुर्मणिमाजहार ॥ ७ ॥

व्रीडाकुलामिति । जतुगेहे कौन्तेया दग्धा इति कथा लोकवादः, तया त्वयि कुरून् हस्तिनपुरं प्रयाते सति ह्री कष्टं गान्दिनेयस्य अक्रूरस्य कृतवर्मणश्च प्रतिश्रुतस्यादातारं जहीति गिरा शतधन्वा सत्राजितं निपात्य हत्वा[1] मणिमाजहार ॥ ७ ॥

शोकात् कुरूनुपगतामवलोक्य कान्तां
हत्वा द्रुतं शतधनुं समहर्षयस्ताम् ।
रत्ने सशङ्क इव मैथिलगेहमेत्य
रामो गदां समशिशिक्षत धार्तराष्ट्रम् ॥ ८ ॥

शोकादिति[2] । तां सत्यभामां पितृहन्तुर्वधेन समहर्षयः प्रसादितवान् । रत्ने मणौ सशङ्क इव मणिहेतोः शतधन्वानं निहतवानिति ख्यापयितुं तद्वासंसि मणिमन्विष्टवानित्यर्थः । 'त्वं पुरीं गत्वा मणिमन्विच्छे'ति कृष्णमुक्त्वा रामो मैथिलस्य गेहमेत्य धार्तराष्ट्रं सुयोधनं गदां समशिशिक्षत ॥ ८ ॥

नन्वक्रूरो भक्तः कथं सत्यभामायाः पितरं हन्तुं शतधन्वानं नियुक्तवानित्याशङ्कयास्य भक्तम्मन्यतागर्वापनयनाय कुबुद्धिस्त्वयैवोत्पादितेत्याह अक्रूर इति द्वाभ्याम्—

अक्रूर एष भगवन्! भवदिच्छयैव
सत्राजितः कुचरितस्य युयोज हिंसाम् ।
अक्रूरतो मणिमनाहृतवान् पुनस्त्वं
तस्यैव भूतिमुपधातुमिति ब्रुवन्ति ॥ ९ ॥

अक्रूर इति । अक्रूरतः शतधन्वना श्रीकृष्णभीत्या पलायने सति न्यस्तं मणिं त्वमनाहृतवान् । तस्याक्रूरस्य भूतिम् ऐश्वर्यम् उपधातुम् उत्पादयितुमिति ब्रुवन्ति । अभिज्ञा इति शेषः ॥ ९ ॥

---

१. 'त्वा ॥' क. पाठः. २. 'ति । मणि' क. पाठः.

भक्तस्त्वयि स्थिरतरः स हि गान्दिनेय-
स्तस्यैव कापथमतिः कथमीश! जाता ।
विज्ञानवान् प्रशमवानहमित्युदीर्णं
गर्वं ध्रुवं शमयितुं भवता कृतैव ॥ १० ॥

भक्त इति । कापथे कुत्सिते मार्गे हिंसादौ । उदीर्णम् उत्पन्नम् ॥ १० ॥

यातं भयेन कृतवर्मयुतं पुनस्त-
माहूय तद्विनिहितं च मणिं प्रकाश्य ।
तत्रैव सुव्रतधरे विनिधाय तुष्यन्
भामाकुचान्तरशयः[3] पवनेश! पायाः ॥ ११ ॥

यातमिति । सत्राजिद्धन्तुर्वधात्[4] तत्प्रयोजकयोरावयोरपि वधः कृष्णेन भावीति भयेन यातं विदेशगतं कृतवर्मसहितं तम् अक्रूरं पुनर्दूतमुखेन आहूय अनीय शतधन्वना तस्मिन्नक्रूरे विनिहितं प्रकाश्य अग्रजादिभ्यः प्रदर्श्य तत्र अक्रूर एव विनिधाय तुष्यन् कृतकृत्यः सन् ॥ ११ ॥

इति स्यमन्तकोपाख्यानमशीतितमं दशकं सैकम् ।

---

स्निग्धां मुग्धां सततमपि तां लालयन् सत्यभामां
यातो भूयः सह खलु तया याज्ञसेनीविवाहम् ।
पार्थप्रीत्यै पुनरपि मनागास्थितो हस्तिपुर्यां
शक्रप्रस्थं पुरमपि विभो! संविधायागतोऽभूः ॥ १ ॥

स्निग्धामिति । स्निग्धां प्रणयिनीं मुग्धां मोहनरूपाम् । संविधाय विश्वकर्मणा कारयित्वा ॥ १ ॥

भद्रां भद्रां भवदवरजां कौरवेणार्थ्यमानां
त्वद्वाचा तामहृत कुहनामस्करी शक्रसूनुः ।

---

१. इदं पद्यं क. घ. ङ. च. पुस्तकेषु न दृश्यते । २. इदं वाक्यं क. पुस्तके न दृश्यते ।
३. 'शयनः प' क. ङ. च. पाठः. ४. 'जिद्वधा' ख. पाठः.

तत्र क्रुद्धं बलमनुनयन् प्रत्यगास्तेन सार्धं
शक्रप्रस्थं प्रियसखमुदे सत्यभामासहायः ॥ २ ॥

भद्रामिति । भद्रां सुभद्रां भवतोऽवरजां कनीयसीम् । कुहनामस्करी कपटयतिः । तत्र सुभद्राहरणे । तेन अर्जुनेन सार्धम् । प्रत्यगाः गतवान् ॥ २ ॥

तत्र क्रीडन्नपि च यमुनाकूलदृष्टां गृहीत्वा
तां कालिन्दीं नगरमगमः खाण्डवप्रीणिताग्निः ।
भ्रातृत्रस्तां प्रणयविवशां देव! पैतृष्वसेयीं
राज्ञां मध्ये सपादि जह्रिषे† मित्रविन्दामवन्तीम् ॥ ३ ॥

तत्रेति । तत्र शक्रप्रस्थे क्रीडन् अर्जुनेन सह मृगयां गच्छन् तां सूर्यपुत्रीं कालिन्दीम् । तदैव खाण्डवेन प्रीणितस्तर्पितोऽग्निर्येन । भ्रातृभ्यां विन्दानुविन्दाभ्यां तद्वरणप्रतिषेधात् त्रस्तां राज्ञां मध्ये स्वयंवरे ज(ह्रः हि)षे हृतवान् ॥ ३ ॥

सत्यां गत्वा पुनरुदवहो नग्नजिन्नन्दनां तां
बद्ध्वा सप्तापि च वृषवरान् सप्तमूर्तिर्निमेषात् ।
भद्रां नाम प्रददुरथ ते देव! सन्तर्दनाद्या-
स्तत्सोदर्या वरद! भवतः सापि पैतृष्वसेयी ॥ ४ ॥

सत्यामिति । पुनर्नग्नजिन्नृपते राजधानीं गत्वा आत्मानं सप्तधा कृत्वा सप्त वृषवरान् बद्ध्वा तन्नन्दनां सत्याम् उदवहः । तत्सोदर्यां सन्तर्दनादिसोदरीं श्रुतकीर्तेः सुतां भद्रां ते तत्सोदराः ते तुभ्यं प्रददुः । पैतृष्वसेयी वसुदेवसोदर्याः पुत्री ॥ ४ ॥

पार्थाद्यैरप्यकृतलवनं तोयमात्राभिलक्ष्यं
लक्षं छित्वा शफरमवृथा लक्षणां मद्रकन्याम् ।
अष्टावेवं तव समभवन् वल्लभास्तत्र मध्ये
शुश्रोथ त्वं सुरपतिगिरा भौमदुश्चेष्टितानि ॥ ५ ॥

---

१. 'र्या' घ. ङ. च. पाठः. २. 'क्ष्म' घ. पाठः.

---

† हकाररेफसंयोगे पाक्षिकं लघुत्वं ह्रस्वस्य 'ग्रहे वा' इति ।

**पार्थाद्यैरिति** । पार्थाद्यैः भीमदुर्योधनमागधादिभिरप्यकृतलवनम् अशक्यच्छेदनं तोयमात्रे केवलं[1] जले प्रतिबिम्बरूपेणाभिलक्ष्यं शफरं मत्स्यात्मकं लक्षम् । अवृथाः वृतवान् ॥ ५ ॥

**स्मृतायातं पक्षिप्रवरमधिरूढस्त्वमगमो**
　**वहन्नङ्के भामामुपवनमिवारातिनगरम् ।**
**विभिन्दन् दुर्गाणि त्रुटितपृतनाशोणितरसैः**
　**पुरं तावत् प्राग्ज्योतिषमकुरुथाः शोणितपुरम् ॥ ६ ॥**

**स्मृतायातमिति** । स्मृतायातं स्मरणमात्रेण प्राप्तम् । अरातेर्भौमस्य नगरम् । दुर्गाणि गिरिशस्त्रजलाग्न्यनिलादिमयानि विभिन्दन् त्रुटितानां शस्त्रकृत्तानां पृतनानां शोणितरसैः रुधिरद्रवैः प्राग्ज्योतिषाख्यं पुरं शोणितं रक्तवर्णमकुरुथाः ॥ ६ ॥

**मुरस्त्वां पञ्चास्यो जलधिवनमध्यादुदपतत्**
　**स चक्रे चक्रेण प्रदलितशिरा मङ्क्षु भवता ।**
**चतुर्दन्तैर्दन्तावलपतिभिरिन्धानसमरं**
　**रथाङ्गेनच्छित्वा नरकमकरोस्तीर्णनरकम् ॥ ७ ॥**

**मुर इति** । मुरो नाम दैत्यः जलधिवनमध्यात् समुद्रजलान्तर्भागात् । सः मुरः भवता चक्रेण प्रदलितशिराश्चक्रे कृतः । इन्धाने प्रवृद्धे समरे नरकं भौमं तीर्णनरकं संसारोत्तीर्णम् ॥ ७ ॥

**स्तुतो भूम्या राज्यं सपदि भगदत्तेऽस्य तनये**
　**गजं चैकं दत्त्वा प्रजिघयिथ नागान् निजपुरीम् ।**
**खलेनाबद्धानां स्वगतमनसां षोडश पुनः**
　**सहस्राणि स्त्रीणामपि च धनराशिं च विपुलम् ॥ ८ ॥**

**स्तुत इति** । खलेन भौमेन आबद्धानां स्त्रीणां षोडशसहस्राणि विपुलं धनराशिं चतुर्दन्तान् नागानपि च निजपुरीं प्रजिघयिथ प्राहिणोः ॥ ८ ॥

---

१. 'लज' क. पाठः.

**भौमापाहृतकुण्डलं तददितेर्दातुं प्रयातो दिवं**
**शक्राद्यैर्महितः समं दयितया द्युस्त्रीषु दत्तह्रिया ।**
**हृत्वा कल्पतरुं रुषाभिपतितं जित्वेन्द्रमभ्यागम-**
**स्तत्तु श्रीमददोष ईदृश इति व्याख्यातुमेवाकृथाः ॥ ९ ॥**

**भौमापाहृतकुण्डलमिति ।** भौमेनेन्द्रादपहृतं कुण्डलम् अदितेस्तन्मात्रे दातुम् । द्युस्त्रीषु शच्युर्वश्यादिषु रूपातिशयेन दत्ता ह्रीर्यया तया दयितया समं सह महितः पूजितः । तत् पारिजातहरणेनेन्द्रस्य परिभवजननं श्रीमददोष ईदृशो यथेन्द्रस्येति व्याख्यातुं प्रकाशयितुमेवाकृथाः कृतवान् ॥ ९ ॥

**कल्पद्रुं सत्यभामाभवनभुवि सृजन् द्व्यष्टसाहस्रयोषाः**
**स्वीकृत्य प्रत्यगारं विहितबहुवपुर्लालयन् केलिभेदैः ।**
**आश्चर्यान्नारदालोकितविविधगतिस्तत्र तत्रापि गेहे**
**भूयः सर्वासु कुर्वन् दश दश तनयान् पाहि वातालयेश ॥ १० ॥**

**कल्पद्रुमिति ।** सत्यभामाया भवनभुवि गृहोद्याने सृजन् स्थापयन् प्रत्यगारं विहितबहुवपुः भवनं प्रति भवनं प्रति रूपभेदेन स्थित्वा द्व्यष्टसाहस्रयोषाः युगपत् स्वीकृत्य परिणीय आश्चर्यात् तदाश्चर्यं श्रुत्वा नारदेनालोकिता विविधा गतयो गार्हस्थ्यभेदा यस्य ॥ १० ॥

इति सुभद्राहरणवर्णनं श्रीकृष्णस्य महिष्यन्तरपरिग्रहवर्णनं
नरकासुरवधादिवर्णनं च

**एकाशीतितमं दशकम् ।**

---

**प्रद्युम्नो रौक्मिणेयः स खलु तव कला शम्बरेणाहृतस्तं**
**हत्वा रत्या सहाप्तो निजपुरमहरद् रुक्मिकन्यां च धन्याम् ।**
**तत्पुत्रोऽथानिरुद्धो गुणनिधिरवहद् रोचनां रुक्मिपौत्रीं**
**तत्रोद्वाहे गतस्त्वं न्यवधि मुसलिना रुक्म्यपि द्यूतवैरात् ॥ १ ॥**

**प्रद्युम्न** इति। तव कला विष्ण्वंशः तं शम्बरं हत्वा रत्या भार्यया सह निजपुरमाप्तः प्रद्युम्नो रुक्मिकन्यां रुक्मवतीम् अवहद् उपयेमे। तत्रानिरुद्धोद्वाहे द्यूतवैरात् छलेन बलभद्रे पराजयमारोप्याधिक्षेपाद् मुसलिना रुक्मी न्यवधि हतः। अपिशब्देन कालिङ्गस्य दन्ताः पातिता इत्यप्युक्तम्॥ १॥

**बाणस्य सा बलिसुतस्य सहस्रबाहो-**
**र्माहेश्वरस्य महिता दुहिता किलोषा।**
**त्वत्पौत्रमेनमनिरुद्धमदृष्टपूर्वं**
**स्वप्नेऽनुभूय भगवन्! विरहातुराभूत्॥ २॥**

**बाणस्येति**। माहेश्वरस्य शिवभक्तस्य। महिता श्लाघ्या॥ २॥

**योगिन्यतीव कुशला खलु चित्रलेखा**
**तस्याः सखी विलिखती तरुणानशेषान्।**
**तत्रानिरुद्धमुषया विदितं निशाया-**
**मानेष्ट योगबलतो भवतो निकेतात्॥ ३॥**

**योगीति**। योगिनी अणिमाद्यष्टैश्वर्यवती अतीव कुशला चित्रकर्मादिकलाकौशलवती च। तत्र विलिखितेषु तया विदितम् अयमेव स्वप्नदृष्ट इति, अनिरुद्धं भवतो निकेताद् द्वारकायाः आनेष्ट आनीतवती॥ ३॥

**कन्यापुरे दयितया सुखमारमन्तं**
**चैनं कथञ्चन बबन्धुषि शर्वबन्धौ।**
**श्रीनारदोक्ततदुदन्तदुरन्तरोषै-**
**स्त्वं तस्य शोणितपुरं यदुभिर्न्यरुन्धाः॥ ४॥**

**कन्यापुर** इति। दयितया उषया समम् आरमन्तं क्रीडन्तम्। एनम् अनिरुद्धं शर्वबन्धौ बाणे बबन्धुषि नागपाशेन बद्धं कुर्वति सति श्रीनारदोक्तात् तदुदन्ताद् अनिरुद्धबन्धनरूपाद् वृत्तान्ताद् दुरन्तोऽनवधी रोषो येषां तैर्यदुभिः सह त्वं तस्य बाणस्य शोणिताख्यं नगरं न्यरुन्धाः आवृणोः॥ ४॥

---

१. 'तपुराख्यं' क, ख. पाठः.

पुरीपालः शैलप्रियदुहितृनाथोऽस्य भगवान्
समं भूतव्रातैर्यदुबलमशङ्कं निरुरुधे ।
महाप्राणो बाणो झटिति युयुधानेन युयुधे
गुहः प्रद्युम्नेन त्वमपि पुरहन्त्रा जघटिषे ॥ ५ ॥

**पुरीपाल** इति । अस्य बाणस्य पुरीपालः शैलस्य हिमवतः प्रियदुहितुः पार्वत्याः नाथो भगवान् । महाप्राणः महाबलः । त्वमपि पुरहन्त्रा श्रीशङ्करेण सह जघटिषे अयुध्यथाः ॥ ५ ॥

निरुद्धाशेषास्त्रे मुमुहुषि तवास्त्रेण गिरिशे
द्रुता भूता भीताः प्रमथकुलवीराः प्रमथिताः ।
परास्कन्दत् स्कन्दः कुसुमशरबाणैश्च सचिवः
स कुम्भाण्डो भाण्डं नवमिव बलेनाशु बिभिदे ॥ ६ ॥

**निरुद्धे**ति । निरुद्धानि प्रत्यस्त्रैः शमितानि अशेषास्त्राणि यस्य । तव मोहनास्त्रेण मुमुहुषि मोहं गते च सति । द्रुताः पलायिताः । प्रमथिताः पीडिताः । कुसुमशरस्य प्रद्युम्नस्य बाणैः स्कन्दः परास्कन्दत् प्रतिनिवृत्तः । बाणस्य सचिवः कुम्भाण्डो नवं जलपूर्णं मृण्मयं भाण्डमिव बिभिदे भिन्नः ॥ ६ ॥

चापानां पञ्चशत्या प्रसभमुपगते छिन्नचापेऽथ बाणे
व्यर्थे याते समेतो ज्वरपतिरशनैरज्वरि त्वज्ज्वरेण ।
ज्ञानी स्तुत्वाथ दत्त्वा तव चरितजुषां विज्वरं स ज्वरोऽगात्
प्रायोऽन्तर्ज्ञानवन्तोऽपि च बहुतमसा रौद्रचेष्टा हि रौद्राः ॥ ७ ॥

**चापानामि**ति । बाणे व्यर्थे विरथे याते ज्वरपतिर्माहेश्वर[1]ज्वरः त्वज्ज्वरेण समेतो युध्यन् अशनैर्झटिति अज्वरि सन्तप्तोऽभूत् । अथ माहेश्वरो ज्वरः ज्ञानी त्वां स्तुत्वा त्वत्प्रसादात् तव चरितजुषां विज्वरं ज्वराभवं दत्त्वानुगृह्य स माहेश्वरो ज्वरोऽगात् । यद्वा सज्वरः सन्तापयुक्तः । यतोऽन्तर्हृदि ज्ञानवन्तोऽपि बहुतमसा तमोगुणाधिक्येन रौद्रचेष्टाः क्रूरकर्माणो हि रौद्राः रुद्रपार्षदाः ॥ ७ ॥

---

१: 'रस्त्व' क. ग. पाठः.

**बाणं नानायुधोग्रं पुनरभिपतितं दर्पदोषाद् वितन्वन्**
**निर्लूनाशेषदोषं सपदि बुबुधुषा शङ्करेणोपगीतः ।**
**तद्वाचा शिष्टबाहुद्वितयमुभयतो निर्भयं तत्प्रियं तं**
**मुक्त्वा तद्दत्तमानो निजपुरमगमः सानिरुद्धः सहोषः ॥ ८ ॥**

बाणमिति । दर्प[1] एक एव दोषः तस्माद् निर्लूनाः छिन्नाः अशेषा दोषो बाहवः दोषा गर्वादयश्च यस्य । बुबुधुषा आत्मानं विष्णुमप्येकमधिजग्मुषा उपगीतः स्तुतः । तस्य श्रीशङ्करस्य वाचा । ‡उभयतो विष्णुशङ्करयोरपि निर्भयं तत्प्रियं शिवभक्तम् । तद्दत्तमानः बाणेन दत्तपारिबर्हः । निजपुरं द्वारकाम् ॥ ८ ॥

**मुहुस्तावच्छक्रं वरुणमजयो नन्दहरणे**
**यमं बालानीतौ दवदहनपानेऽनिलसखम् ।**
**विधिं वत्सस्तेये गिरिशमिह बाणस्य समरे**
**विभो! विश्वोत्कर्षी तदयमवतारो जयति ते ॥ ९ ॥**

मुहुरिति । मुहुः इन्द्रयागपारिजातापहरणखाण्डवदाहादौ शक्रमजयः । तत् तस्मात् ते तव अयमवतारः विश्वेभ्यो देवेभ्य उत्कर्षोऽस्यास्तीति तथा । अत एव जयति सर्वावतारेभ्य उत्कृष्टो भवति ॥ ९ ॥

**द्विजरुषा कृकलासवपुर्धरं नृगनृपं त्रिदिवालयमापयन् ।**
**निजजने द्विजभक्तिमनुत्तमामुपदिशन् पवनेश्वर! पाहि माम् ॥१०॥**

द्विजरुषेति । द्विजस्य दत्तापहरणजनितया रुषा तत्कार्येण शापेन निरुद्-ककूपस्थं कृकलासवपुर्धरं[2] नृगनृपं त्रिदिवालयं स्वर्गम् आपयन् प्रापयन् । न विद्यते उत्तमो य(स्मादि?स्या इ)त्यनुत्तमाम् । नृगस्य ब्राह्मणगवापहरणेन कृकलासत्वा-पत्तेस्तद्दानमाहात्म्येन स्वर्गप्राप्तेश्च नृगमुखेन निवेदनपुरस्सरमुपदिशन् ॥ १० ॥

इति उषापरिणयवर्णनं बाणासुरयुद्धवर्णनं नृगस्य शापमोक्षवर्णनं च
द्व्यशीतितमं दशकम् ।

---

१. 'र्प एव' क. पाठः. २. 'रं त्रि' क. ग. पाठः.

‡ चत्वारोऽस्य बाहवः शिष्टा इति उभयत इत्यस्य पूर्वत्रैवान्वयो युज्यते ।

रामेऽथ गोकुलगते प्रमदाप्रसक्ते
हूतानुपेतयमुनादमने मदान्धे ।
स्वैरं समारमति सेवकवादमूढो
दूतं न्ययुङ्क्त तव पौण्ड्रकवासुदेवः ॥ १ ॥

**राम** इति। प्रमदासु गोपीषु प्रसक्ते[1] लोले । हूताम् आहूतां तथाप्यनुपेतामनागतां यमुनां दमयतीति तथा । वारुणीमदिरामदान्धे रामे स्वैरं समारमति सति त्वं जगदीश्वर इति सेवकवादैर्मूढः पौण्ड्रकवासुदेवः तव दूतं न्ययुङ्क्त नियुक्तवान्[2] ॥ १ ॥

नारायणोऽहमवतीर्ण इहास्मि भूमौ
धत्से किल त्वमपि मामकलक्षणानि ।
उत्सृज्य तानि शरणं व्रज मामिति त्वां
दूतो जगाद सकलैर्हसितः सभायाम् ॥ २ ॥

**नारायण** इति । त्वमपि मामकलक्षणानि श्रीवत्सकौस्तुभादीनि धत्से किल, तान्युत्सृज्य मां शरणं व्रजेति सभायां जगाद ॥ २ ॥

दूतेऽथ यातवति यादवसैनिकस्त्वं
यातो ददर्शिथ वपुः किल पौण्ड्रकीयम् ।
तापेन वक्षसि कृताङ्कमनल्पमूल्य-
श्रीकौस्तुभं मकरकुण्डलपीतचेलम् ॥ ३ ॥

**दूत** इति । यादवाः सैनिका यस्य स त्वं काशीं यातः पौण्ड्रकीयं वपुर्ददर्शिथ । तापेन तप्तलोहन्यासेन कृतः श्रीवत्साङ्को यस्य । अनल्पमूल्यः अनल्पेन मूल्येन क्रीत्वानीय कण्ठे बद्धः श्रीकौस्तुभो यस्य ॥ ३ ॥

कालायसं निजसुदर्शनमस्यतोऽस्य
कालानलोत्करकिरेण सुदर्शनेन ।

---

१. 'क्ते भोगलो' क. ग. पाठः. २. इदं पदं क. ग. पुस्तकयोर्न दृश्यते ।

**शीर्षं चकर्तिथ ममर्दिथ चास्य सेनां**
**तन्मित्रकाशिपशिरोऽपि चकर्थ काश्याम् ॥ ४ ॥**

**कालायसमिति** । कालायसमयं निजसुदर्शनम् अस्यतः प्रयुञ्जतः अस्य पौण्ड्रकस्य । कालानलोत्करकिरेण[1] संहारकार्यङ्गारवर्षिणा । चकर्तिथ कृत्तवान् । तन्मित्रस्य काशिपस्य शिरः काश्यां पतितं चकर्थ अकरोः ॥ ४ ॥

**जाड्येन बालकगिरापि किलाहमेव**
**श्रीवासुदेव इति रूढमतिश्चिरं सः ।**
**सायुज्यमेव भवदैक्यधिया गतोऽभूत्**
**को नाम कस्य सुकृतं कथमित्यवेयात् ॥ ५ ॥**

**जाड्येनेति** । जाड्येन मूढताहेतुकेन परप्रत्ययत्वेन बालकानां मन्दधियां वाचा गिरा रूढा स्थिरा मतिर्यस्य ॥ ५ ॥

**काशीश्वरस्य तनयोऽथ सुदक्षिणाख्यः**
**शर्वं प्रपूज्य भवते विहिताभिचारः ।**
**कृत्यानलं कमपि बाणरणातिभीतै-**
**र्भूतैः कथञ्चन वृतैः सममभ्यमुञ्चत् ॥ ६ ॥**

**काशीश्वरस्येति** । कथञ्चन वृतैः भूतैः समं सह कृत्यानलम् आभिचारकुण्डोत्थितं मूर्तिमन्तमग्निम् अभ्यमुञ्चद् विससर्ज ॥ ६ ॥

**तालप्रमाणचरणामखिलं दहन्तीं**
**कृत्यां विलोक्य चकितैः कथितोऽपि पौरैः ।**
**द्यूतोत्सवे किमपि नो चलितो विभो! त्वं**
**पार्श्वस्थमाशु विससर्जिथ कालचक्रम् ॥ ७ ॥**

**तालप्रमाणेति** । पौरैः कथितो विज्ञापितोऽपि द्यूतोत्सवे द्यूतक्रीडाकौतुके नो चलितः न विमुखो जातः, किन्तु पार्श्वस्थं चक्रं हस्तसंज्ञया विससर्जिथ ॥७॥

---

१. 'धनलोत्कर' क. पाठः.

अभ्यापतत्यमितधाम्नि भवन्महास्त्रे
हा हेति विद्रुतवती खलु घोरकृत्या ।
रोषात् सुदक्षिणमदक्षिणचेष्टितं तं
पुप्लोष चक्रमपि काशिपुरीमधाक्षीत् ॥ ८ ॥

अभ्यापततीति । अमितम् अपरिच्छिन्नं धाम तेजो यस्य, परिमित-धाम्नामग्न्यादितेजसामपि तेजःप्रदत्वादमितं धामैव वा, 'यदपि च परमं सर्वधाम्नां च धाम' इति वचनात्, तस्मिन् भवन्महास्त्रे सुदर्शनाख्ये अभ्यापतति कृत्यामभिधावति सति हा हेत्याक्रन्दन्ती विद्रुतवती । आभिचारस्याब्रह्मण्ये सफलतायाः शर्वेणानुगृहीतत्वात् तदनादरेण ब्रह्मण्यदेवे श्रीकृष्णे प्रयोगाददक्षिण-चेष्टितं सुदक्षिणं रोषात् पुप्लोष । काशिपुरीं सुदक्षिणराजधानीमपि अधाक्षीद् ददाह ॥ ८ ॥

स खलु विविदो रक्षोघाते कृतोपकृतिः पुरा
तव तु कलया मृत्युं प्राप्तुं तदा खलतां गतः ।
नरकसचिवो देशक्लेशं सृजन् नगरान्तिके
झटिति हलिना युध्यन्नद्धा पपात तलाहतः ॥ ९ ॥

स खल्विति । रक्षोघाते रावणवधे कृतोपकृतिः श्रीरामपक्षीयः, तथापि तव कलया अंशभूतेन श्रीबलभद्रेण मृत्युं मृतिं प्राप्तुं खलतां तव वैरितां गतः नरकसचिवः भौमस्य सखा त्वन्नगरान्तिके देशानां क्लेशम् उपद्रवं सृजन् उत्पादयन् हलिना तलेन करतलेन आहतः अद्धा सम्यग् अनायासेन पपात मृतः ॥९॥

साम्बं कौरव्यपुत्रीहरणनियमितं सान्त्वनार्थी कुरूणां
यातस्तद्वाक्यरोषोद्धृतकरिनगरो मोचयामास रामः ।
ते घात्याः पाण्डवेयैरिति यदुपृतनां नामुचस्त्वं तदानीं
तं त्वां दुर्बोधलीलं पवनपुरपते! तापशान्त्यै निषेवे ॥ १० ॥

साम्बमिति । कौरव्यपुत्रीं सुयोधनसुतां लक्ष्मणां साम्बः स्वयंवरे हृतवान् ।

१. 'किलै' क. पाठः. २. 'नै अ' क. ग. पाठः. ३. 'क्ष्म' क. पाठः.

तत्र च कुरुभिर्नियमितं बद्धं श्रुत्वा कुरुभिर्विरोधो मास्त्विति सान्त्वनार्थी यातः तेषामधिक्षेपवाक्यैर्जातेन रोषेणोद्धृतं करिनगरं हस्तिनपुरं येन स रामः साम्बं मोचयामास । तदानीम् अग्रजपरिभवे त्वं यदुप्रतनां नामुचः ते पाण्डवैर्घात्या इति । एवं दुर्बोधा लीला यस्य ॥ १० ॥

इति पौण्ड्रकवधवर्णनं काशिपुरीदाहवर्णनं बलभद्रप्रतापवर्णनं च

त्र्यशीतितमं दशकम् ।

---

**क्वचिदथ तपनोपरागकाले पुरि निदधत् कृतवर्मकामसूनू ।**
**यदुकुलमहिलावृतः सुतीर्थं समुपगतोऽसि समन्तपञ्चकाख्यम् ॥ १ ॥**

**क्वचिदिति** । तपनोपरागकाले सूर्यग्रहणकाले पुरि द्वारकायां कृतवर्माणमनिरुद्धं च निदधद् रक्षणार्थं निक्षिप्य ॥ १ ॥

**बहुतरजनताहिताय तत्र त्वमपि पुनन् विनिमज्ज्य तीर्थतोये ।**
**द्विजगणपरिमुक्तवित्तराशिः सममिलथाः कुरुपाण्डवादिमित्रैः ॥ २ ॥**

**बहुतरेति** । तत्र समन्तपञ्चके तीर्थतोयं पुनन् तीर्थतोयस्य पापशोधकत्वमुत्पादयन् । तदपि बहुतरजनताहिताय तीर्थस्नायिजनानुग्रहाय द्विजगणेभ्यः परिमुक्तो दत्तो वित्तराशिर्येन स त्वं मित्रैर्बन्धुभिः सममिलथाः सम्मिलितोऽभूः ॥२॥

**तव खलु दयिताजनैः समेता द्रुपदसुता त्वयि गाढभक्तिभारा ।**
**तदुदितभवदाहृतिप्रकारैरतिमुमुदे सममन्यभामिनीभिः ॥ ३ ॥**

**तवेति** । द्रुपदसुता तव दयिताजनैः रुक्मिण्यादिभिर्मिलिता तदुदितैः त्वद्दयिताभिरुदितैः भवत्कर्तृकात्माहरणप्रकारैः सप्तगोवृषबन्धनादिरूपैः अन्यभामिनीभिः सुभद्रादिभिः सममतिमुमुदे ॥ ३ ॥

**तदनु च भगवन्! निरीक्ष्य गोपानतिकुतुकादुपगम्य मानयित्वा ।**
**चिरतरविरहातुराङ्गरेखाः पशुपवधूः सरसं त्वमन्वयासीः ॥ ४ ॥**

तदन्विति। चिरतरविरहेण आतुराः अङ्गरेखाः कृशशरीराणि यासां ताः। अन्वयासीः अनुगतः ॥ ४ ॥

**सपदि च भवदीक्षणोत्सवेन प्रमुषितमानहृदां नितम्बिनीनाम् ।**
**अतिरसपरिमुक्तकञ्चुलीके परिचयहृद्यतरे कुचे न्यलैषीः ॥ ५ ॥**

सपदीति। प्रमुषितो मानो यस्मिन् तादृशं हृद् यासाम्। अतिरसेन अतिशयितेनान्योन्यानुरागेण परिमुक्ता यथाकथञ्चिदपनीता कञ्चुलीका गात्रिका यस्मात्। परिचयहृद्यतरे प्रागनुभूतस्य प्रत्यभिज्ञायमानतया कौतुकविशेषजनके कुचे न्यलैषीः क्षीरनीराख्यपरिरम्भणसुखमन्वभूः ॥ ५ ॥

**रिपुजनकलहैः पुनः पुनर्मे समुपगतैरियती विलम्बनाभूत् ।**
**इति कृतपरिरम्भणे त्वयि द्रागतिविवशा खलु राधिका निलिल्ये ॥६॥**

रिपुजनकलहैरिति। मे मम पुनः पुनः समुपगतै रिपुजनकलहैः इयती अतिमहती विलम्बना कालक्षेपोऽभूदिति वचनपुरस्सरं कृतपरिरम्भणे त्वयि द्रागतिविवशा झटिति त्यक्तमाना निलिल्ये त्वदैक्यमिवान्वभूत् ॥ ६ ॥

**अपगतविरहव्यथास्तदा ता रहसि विधाय ददाथ तत्त्वबोधम् ।**
**परमसुखचिदात्मकोऽहमात्मेत्युदयतु वः स्फुटमेव चेतसीति ॥ ७ ॥**

अपगतेति। तदा रहसि ताः परिरम्भणादिभिरपगतविरहव्यथा विधाय अहं परमसुखचिदात्मकः परमानन्दबोधस्वरूपः सर्वेषामात्मान्तर्यामी च अतो वो मद्विरहः शोकावकाशश्च परमार्थतो नास्त्येवेति वश्चेतसि स्फुटमुदयतु निश्चयात्मिका बुद्धिर्मदनुग्रहात् स्यादेवेति तत्त्वबोधं ददाथ ॥ ७ ॥

**सुखरसपरिमिश्रितो वियोगः किमपि पुराभवदुद्धवोपदेशैः ।**
**समभवदमुतः परं तु तासां परमसुखैक्यमयी भवद्विचिन्ता ॥ ८ ॥**

सुखरसेति। तासां गोपस्त्रीणां पुरा उद्धवोपदेशैः उद्धवमुखेन कृतैरुपदेशैः सुखरसेनाल्पीयसा परिमिश्रितो वियोगो विरहदुःखं किमपि किञ्चिदभवत्। अमु-

तो भवदुपदेशात् परं तु भवद्विचिन्ता परमसुखैक्यमयी परमानन्दैकरसरूपा समभवत् ॥ ८ ॥

**मुनिवरनिवहैस्तवाथ पित्रा दुरितशमाय शुभानि पृच्छ्यमानैः ।**
**त्वयि सति किमिदं शुभान्तरैरित्युरुहसितैरपि याजितस्तदासौ ॥ ९ ॥**

**मुनिवरेति ।** अथ तव पित्रा[1] वसुदेवेन दुरितशमाय दुष्कर्म[2]निवृत्तये[3] अनुष्ठेयानि शुभकर्माणि पृच्छ्यमानैरनुयुज्यमानैर्मुनिवरनिवहैर्व्यासनारदादिभिस्त्वयि सकलशुभास्पदे पुत्रे सत्यप्यस्य[4] शुभान्तरैः कर्मादिभिः किमिदं दुरितशमनप्रार्थनमित्युरुहासितैरपि तथापि तदासौ वसुदेवो याजितः यजनं कारितः ॥ ९ ॥

**सुमहति यजने वितायमाने प्रमुदितमित्रजने सहैव गोपाः ।**
**यदुजनमहितास्त्रिमासमात्रं भवदनुषङ्गरसं पुरेव भेजुः ॥ १० ॥**

**सुमहतीति ।** सुमहति उत्तमकल्पके[5] यजने वितायमाने क्रियमाणे सति । प्रमुदिता मित्रजना बन्धुवर्गा यस्मिन्[6] तस्मिन् तैः सहैव नन्दादयो गोपा यदुजनैर्महिताः सम्मानिताः अद्य श्व इति त्रिमासमात्रं भवदनुषङ्गरसं भवत्सङ्गमसुखं पुरा नन्दव्रज इव भेजुः अन्वभूवन् ॥ १० ॥

**व्यपगमसमये समेत्य राधां दृढमुपगूह्य निरीक्ष्य वीतखेदाम् ।**
**प्रमुदितहृदयः पुरं प्रयातः पवनपुरेश्वर! पाहि मां गदेभ्यः ॥ ११ ॥**

**व्यपगमसमय इति ।** व्यपगमसमये वियोगकाले प्रस्थाने राधां समेत्य दृढमुपगूह्य वीतखेदां तदनुग्रहरूपोपगूहनेनै[7]व त्यक्तविरहव्यथां निरीक्ष्य प्रमुदितहृदयः पुरं द्वारवतीं प्रयातः । अतस्तादृशभक्तवात्सल्ययुक्तस्त्वं मां गदेभ्यः पाहि ॥ ११ ॥

**इति समन्तपञ्चकयात्रावर्णनं चतुरशीतितमं दशकं सैकम् ।**

---

१. 'त्रा दु' क. पाठः. २. 'ष्कृतनि' क. पाठः. ३. 'ये सक' ख. पाठः. ४. 'त्यस्य' क. ग. पाठः. ५. 'के सहै' ख. पाठः. ६. 'न् तैः' क. पाठः. ७. 'ने' ख. पाठः.

ततो मगधभूभृता चिरनिरोधसंक्लेशितं
शताष्टकयुतायुतद्वितयमीश! भूमीभृताम्।
अनाथशरणाय ते कमपि पूरुषं प्राहिणो-
दयाचत स मागधक्षपणमेव किं भूयसा ॥ १ ॥

तत इति। ततः अनन्तरं मगधभूभृता जरासन्धेन गिरिगुहायां चिरनिरोधेन संक्लेशितं भूमीभृतां शताष्टकयुतायुतद्वितयम् अष्टशतोत्तरायुतद्वयं। ते तुभ्यम्। सः दूतः। किं भूयसा विज्ञापनेन[1]। मागधक्षपणं जरासन्धवधमेवायाचत ॥ १ ॥

यियासुरभिमागधं तदनु नारदोदीरिताद्
युधिष्ठिरमखोद्यमादुभयकार्यपर्याकुलः।
विरुद्धजयिनोऽध्वरादुभयसिद्धिरित्युद्धवे
शशंसुषि निजैः समं पुरमियेथ यौधिष्ठिरीम् ॥ २ ॥

यियासुरिति। अभिमागधं मागधमभिमुखीकृत्य यियासुः जिगमिषुः। उभयेति। मागधयुधिष्ठिरनिग्रहानुग्रहरूपोभयकार्यपर्याकुलः विरुद्धजयिनः शत्रुनिग्रहपूर्वकं कर्तव्याद् अध्वराद् राजसूयाख्याद् उभयसिद्धिः मागधनिग्रहयुधिष्ठिरेष्टसिद्धिरित्युद्धवे शशंसुषि उक्तवति सति यौधिष्ठिरीं पुरम् इन्द्रप्रस्थम् इयेथ गतवान्[2] ॥ २ ॥

अशेषदयितायुते त्वयि समागते धर्मजो
विजित्य सहजैर्महीं भवदपाङ्गसंवर्धितैः।
श्रियं निरुपमां वहन्नहह भक्तदासायितं
भवन्तमयि! मागधे प्रहितवान् सभीमार्जुनम् ॥ ३ ॥

अशेषेति। त्वयि अशेषदयितायुते षोडशसहस्रपत्नीयुते समागते सति धर्मजः भवदपाङ्गेन त्वत्कटाक्षेण संवर्धितैः वर्धितबलैः महीं कृत्स्नां विजित्य निरुपमां श्रियं दिग्विजये[3] लब्धं धनसञ्चयं वहन् अयि! भगवन्! अहह आश्चर्यमेतत् भक्तदासायितं भक्तदासवदाचरन्तं[4] मागधे जरासन्धे तज्जयार्थं[5] प्रहितवान् ॥ ३ ॥

---

१. 'नेति मा' क. ग. पाठः. २. 'नासि ॥' क. ग. पाठः. ३. 'ग्जयल' क. पाठः. ४. 'रितं भवन्तं' क. ग. पाठः. ५. 'न्नवधार्थं' क. पाठः.

**गिरिव्रजपुरं गतास्तदनु देव! यूयं त्रयो**
**ययाच समरोत्सवं द्विजमिषेण तं मागधम् ।**
**अपूर्णसुकृतं त्वमुं पवनजेन संग्रामयन्**
**निरीक्ष्य सह जिष्णुना त्वमपि राजयुध्वा स्थितः ॥ ४ ॥**

**गिरिव्रजे**ति । गिरिव्रजपुरं जरासन्धनगरीं गताः समरोत्सवं द्रष्टृजनकौ-[1]तुकजनकं द्वन्द्वयुद्धं ययाच प्रार्थितवन्तः । अपूर्णसुकृतमिति । यद्यपि मृतिसमये त्वद्दर्शनावकाशः सुकृतेन, तथापि सद्योमुक्तिप्रदत्वत्कर्तृकवधसुकृतहीनमित्यर्थः । अतः पवनजेन संग्रामयन् युद्धं कारयन् राजानौ भीममागधौ, अथवा पाण्डव-दुर्योधनतत्पक्षीयान् राज्ञोऽन्योन्यं योधितवानिति राजयुध्वा त्वम् ॥ ४ ॥

**अशान्तसमरोद्धतं विटपपाटनासंज्ञया**
**निपात्य जरसः सुतं पवनजेन निष्पाटितम् ।**
**विमुच्य नृपतीन् मुदा समनुगृह्य भक्तिं परां**
**दिदेशिथ गतस्पृहानपि च धर्मगुप्त्यै भुवः ॥ ५ ॥**

**अशान्ते**ति । अशान्ते अदृष्टान्यतरजयपराजये समरे उद्धतम् अहङ्कृतं जरसः सुतं जरानाम्न्या पिशाच्या जातमात्र एव धात्र्या त्यक्तं देहशकलद्वयं संयोज्य सञ्जातचेतनतया पुत्रत्वेन परिगृहीतम् । एवञ्च देहशकलयोर्द्वैधीभाव एवास्य मृतिः । एतद् विद्वांस्त्वं विटपपाटनारूपया संज्ञया ज्ञापकेन ज्ञाततत्त्वेन पवनजेन निष्पाटितं विदारितशरीरं कृत्वा निपात्य घातयित्वा तेन दिग्जये गृहीत्वा गिरिदर्यां निरुद्धान् नृपतीन् विमुच्य तेभ्यो मुदा परां प्रेमलक्षणां भक्तिं समनुगृह्य निजराज्यभोगे गतस्पृहानपि भुवो धर्मेण गुप्त्यै दिदेशिथ प्रेषयामासिथ । अथवा राज्ञां प्रजापालनरूपस्य स्वधर्मस्य गुप्त्यै भुवः स्वस्वविषयान् दिदेशिथ दत्त-वान् ॥ ५ ॥

**प्रचक्रुषि युधिष्ठिरे तदनु राजसूयाध्वरं**
**प्रसन्नभृतकीभवत्सकलराजकन्याकुलम् ।**

---

१. 'ष्टृकौ' क. ग. पाठः.

त्वमप्यायि जगत्पते! द्विजपदावनेजादिकं
चकर्थ किमु कथ्यते नृपवरस्य भाग्योन्नतिः ॥ ६ ॥

**प्रचक्रुषीति** । प्रचक्रुषि प्रारब्धवति । अभृतका भृतका दासा भवन्तीति भृतकीभवन्तः, प्रसन्नैः अनसूयकैः भृतकीभवद्भिः सकलैः राजकैर्व्याकुलम् ॥ ६ ॥

ततः सवनकर्मणि प्रवरमग्र्यपूजाविधिं
विचार्य सहदेववागनुगतः स धर्मात्मजः ।
व्यधत्त भवते मुदा सदसि विश्वभूतात्मने
तदा ससुरमानुषं भुवनमेव तृप्तिं दधौ ॥ ७ ॥

**तत** इति । भगवान् श्रीकृष्णोऽग्रपूजामर्हतीति सहदेवस्य वाचमनुगतः अनुसृतः विश्वभूतात्मने सर्वभूतानामात्मभूताय अग्र्यपूजाविधिं व्यधत्त । अतः ससुरमानुषं चराचरात्मकं भुवनमेव तृप्तिं दधौ ॥ ७ ॥

ततः सपदि चेदिपो मुनिनृपेषु तिष्ठत्स्वहो
सभाजयति को जडः पशुपदुर्दुरूटं वटुम् ।
इति त्वयि स दुर्वचोविततिमुद्वमन्नासना-
दुदापतदुदायुधः समपतन्नमुं पाण्डवाः ॥ ८ ॥

**तत** इति । चेदिपः शिशुपालः । सभाजयति पूजयति । पशुपदुर्दुरूटं पशुपापशदम् । त्वयि त्वद्विषये दुर्वचोविततिं यथा कश्चिन्मुमूर्षुर्भुक्तं सर्वमुद्वमति, तथोद्वमन् जल्पन् उदायुधः उद्धृतायुधः आसनादुदापतद् उत्थायाभ्ययात् । तदा त्वत्परिभवेन पाण्डवाः अमुं समपतन् हन्तुमुद्यताः ॥ ८ ॥

निवार्य निजपक्षगानभिमुखस्य विद्वेषिण-
स्त्वमेव *जहिषे शिरो दनुजदारिणा स्वारिणा ।
जनुस्त्रितयलब्धया सततचिन्तया शुद्धधी-
स्त्वया स परमेकतामधृत योगिनां दुर्लभाम् ॥ ९ ॥

---

* हकाररेफसंयोगे पाक्षिकं लघुत्वं ह्रस्वस्य 'ग्रहे वा' इति ।

**निवार्येति** । निजपक्षगान् पाण्डवान् निवार्य त्वं दनुजदारिणा असुरशरीर-भेदनशीलेन स्वस्यारिणा सुदर्शनाख्येन चक्रेण विद्वेषिणः शिशुपालस्य शिरो जह्निषे अच्छिनः । जनुस्त्रितये हिरण्यकशिपुरावणशिशुपालरूपे लब्धया ॥ ९ ॥

**ततः सुमहिते त्वया क्रतुवरे निरूढे जनो**
**ययौ जयति धर्मजो जयति कृष्ण इत्यालपन् ।**
**खलः स तु सुयोधनो धुतमनाः सपत्नश्रिया**
**मयार्पितसभामुखे स्थलजलभ्रमादभ्रमीत् ॥ १० ॥**

**तत** इति । ततः शिशुपालवधानन्तरं सुतरां महिते पूजिते । त्वया निरूढे परिसमापिते श्रीकृष्णो जयति सर्वस्मादुत्कृष्टो भवति, स ईश्वरो यस्य वशे स धर्मजो जयतीत्यालपन् जनो महाजनः स्वं स्वं भवनं ययौ । स कल्यंशः सुयोधनस्तु सपत्नानां शत्रूणां पाण्डवानां श्रिया समृद्ध्या धुतम् असूयादिभिश्चलितं मनो यस्य । खाण्डवदाहे मयेनार्पिताया दत्तायाः सभाया मुखे स्थलजल-भ्रमात् स्थलधिया जले पतनाद् जलधिया स्थले वस्त्रान्तग्रहणाच्च अभ्रमीत् सम्भ्रान्तोऽभूत् ॥ १० ॥

**तदा हसितमुत्थितं द्रुपदनन्दनाभीमयो-**
**रपाङ्गकलया विभो! किमपि तावदुज्जृम्भयन् ।**
**धराभरनिराकृतौ सपदि नाम बीजं वपन्**
**जनार्दन! मरुत्पुरीनिलय! पाहि मामामयात् ॥ ११ ॥**

**तदेति** । तदा सुयोधनस्य जाड्ये सति द्रुपदनन्दनाभीमयोर्मुख उत्थितं हसितं अपाङ्गकलया कटाक्षलेशेन किमप्युज्जृम्भयन् सातिशयं कुर्वन् तदेव[1] धराभरनिराकृतौ बीजं वपन् कारणत्वेन स्थापयन् ॥ ११ ॥

इति जरासन्धवधवर्णनं युधिष्ठिरराजसूयवर्णनं च

**पञ्चाशीतितमं दशकं सैकम् ।**

---

१. 'दै' ख. पाठः.

**साल्वो भैष्मीविवाहे यदुबलविजितश्चन्द्रचूडाद् विमानं**
**विन्दन् सौभं स मायी त्वयि वसति कुरूंस्त्वत्पुरीमभ्यभाङ्क्षीत् ।**
**प्रद्युम्नस्तं निरुन्धन्नखिलयदुभटैर्न्यग्रहीदुग्रवीर्यं**
**तस्यामात्यं द्युमन्तं व्यजनि च समरः सप्तविंशत्यहान्तम् ॥ १ ॥**

**साल्व** इति । भैष्मीविवाहे रुक्मिणीस्वयंवरे यदुबलेन यदुसेनया विजितः पराजितः यादवोच्छेदप्रतिज्ञापूर्वकं प्रसादितात् चन्द्रचूडात् सौभाख्यं विमानं विन्दन् त्वयि कुरून् वसति सति त्वत्पुरीं द्वारकाम् अभ्यभाङ्क्षीत् बभञ्ज । प्रद्युम्नस्तु तं साल्वं निरुन्धन् द्युमन्तं न्यग्रहीद् जघान ॥ १ ॥

**तावत् त्वं रामशाली त्वरितमुपगतः खण्डितप्रायसैन्यं**
**सौभेशं तं न्यरुन्धाः स च किल गदया शार्ङ्गमभ्रंशयत् ते ।**
**मायातातं व्यहिंसीदपि तव पुरतस्तत् त्वयापि क्षणार्धं**
**नाज्ञायीत्याहुरेके तदिदमवमतं व्यास एव न्यषेधीत् ॥ २ ॥**

**तावदि**ति । सौभेशं साल्वम् । ते शार्ङ्गं धनुः अभ्रंशयत् त्याजयामास, तव पुरतो मायानिर्मितं तातं वसुदेवं व्यहिंसीदपि । तदिदं साल्वमायामोहनमत्र-मतमिति व्यास एव

"क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः ।
क्व चाखण्डितविज्ञानज्ञानैश्वर्यैश्वरो हरिः ॥"
(श्री. भा. स्क. १०. अ. ७७. श्लो. ३१)

इति न्यषेधीत् ॥ २ ॥

**क्षिप्त्वा सौभं गदाचूर्णितमुदकनिधौ मङ्क्षु साल्वेऽपि चक्रे-**
**णोत्कृत्ते दन्तवक्त्रः प्रसभमभिपतन्नभ्यमुञ्चद् गदां ते ।**
**कौमोदक्या हतोऽसावपि सुकृतनिधिश्चैद्यवत् प्रापदैक्यं**
**सर्वेषामेष पूर्वं त्वयि धृतमनसां मोक्षणार्थोऽवतारः ॥ ३ ॥**

**क्षिप्त्वे**ति । ते तुभ्यं त्वां हन्तुं गदामभ्यमुञ्चत् । एषोऽवतारस्त्वयि धृतमनसां मोक्षणाय ॥ ३ ॥

---

१. 'न्नि' क. ङ. पाठः. २. 'प' ख. घ. ङ. पाठः.

**त्वय्यायातेऽथ जाते किल कुरुसदसि द्यूतके संयतायाः**
**क्रन्दन्त्या याज्ञसेन्याः सकरुणमकृथाश्चेलमालामनन्ताम् ।**
**अन्नान्तप्राप्तशर्वांशजमुनिचकितद्रौपदीचिन्तितोऽथ**
**प्राप्तः शाकान्नमश्नन् मुनिगणमकृथास्तृप्तिमन्तं वनान्ते ॥ ४ ॥**

**त्वयीति** । अथ त्वयि इन्द्रप्रस्थाद् द्वारकामायाते सति कुरुसदसि जाते द्यूतके सव्याजे द्यूते संयतायाः दुश्शासनेन गृहीतायाः चेलमालां वस्त्रपरम्पराम् । अन्नान्ते अन्नावसाने प्राप्तात् शर्वांशजाद् दुर्वाससो मुनेश्चकितया शापशङ्कितया द्रौपद्या चिन्तितस्तत्र प्राप्तः पात्रलग्नं शाकान्नम् अश्नन् मुनिगणं शिष्यवर्गसहितं दुर्वाससं तृप्तिमन्तमकृथाः ॥ ४ ॥

**युद्धोद्योगेऽथ मन्त्रे मिलति सति वृतः फल्गुनेन त्वमेकः**
**कौरव्ये दत्तसैन्यः करिपुरमगमो दूत्यकृत् पाण्डवार्थम् ।**
**भीष्मद्रोणादिमान्ये तव खलु वचने धिक्कृते कौरवेण**
**व्यावृण्वन् विश्वरूपं मुनिसदसि पुरीं क्षोभयित्वागतोऽभूः ॥ ५ ॥**

**युद्धोद्योग** इति । अथ युद्धोद्योगे मिलति सति फल्गुनेन त्वमेको मन्त्रे कार्यनिरूपणे वृतः समकालमागते कौरव्ये दत्तसैन्यः दुर्योधनाय दत्तयदुसैन्यः पाण्डवार्थे पाण्डवानामर्धराज्यलब्धये दूत्यं दूतकर्म करोतीति तथा । भीष्मद्रोणादिभिर्मान्ये पूजनीये कौरवेण दुर्योधनेन धिक्कृते सति मुनिसदसि विश्वात्मकं स्वं रूपं व्यावृण्वन् प्रकाशयन् ॥ ५ ॥

**जिष्णोस्त्वं कृष्ण ! सूतः खलु समरमुखे बन्धुघाते दयालुं**
**खिन्नं तं वीक्ष्य वीरं किमिदमयि सखे ! नित्य एकोऽयमात्मा ।**
**को वध्यः कोऽत्र हन्ता तदिह वधभियं प्रोज्झ्य मय्यर्पितात्मा**
**धर्म्यं युद्धं चरेति प्रकृतिमनयथा दर्शयन् विश्वरूपम् ॥ ६ ॥**

---

१. 'जनम' क. पाठः.

**जिष्णोरिति**। खिन्नं युद्धाद् विमुखं तमर्जुनं वीक्ष्य। नित्य एक इति। नित्यत्वादवध्यत्वम् एकत्वाद् वध्यहन्तृभेदाभावश्च। तत् तस्माद्, यस्मादवध्य आत्मा तस्माद् वधभियं भीष्मद्रोणादिवधे याधर्मभीस्तां प्रोज्झ्य त्यक्त्वा धर्म्यं क्षत्रियधर्मादनपेतं युद्धं चरेत्युपदिश्य विश्वासार्थं विश्वरूपमैकात्म्यं दर्शयन् प्रकृतिं गतसम्मोहताम् अनयथाः प्रापयामासिथ ॥ ६ ॥

**भक्तोत्तंसेऽथ भीष्मे तव धरणिभरक्षेपकृत्यैकसक्ते**
**नित्यं नित्यं विभिन्दत्यवनिभृदयुतं प्राप्तसादे च पार्थे ।**
**निश्शस्त्रत्वप्रतिज्ञां विजहदरिवरं धारयन् क्रोधशाली-**
**वाधावन् प्राञ्जलिं तं नतशिरसमथो वीक्ष्य मोदादपागाः॥७॥**

**भक्तोत्तंस** इति। पार्थे भीष्मसायकैः प्राप्तसादे सञ्जातक्लेशे सति शस्त्रं न गृह्णामीति प्रतिज्ञां विजहत् त्यजन् क्रोधशालीव अरिवरं सुदर्शनम्। शस्त्रं ग्राहयामीति तत्प्रतिज्ञां सत्यं कर्तुमेव, न तव क्रोधशालित्वात् ॥ ७ ॥

भगदत्तप्रयुक्तनारायणास्त्राद्, जयद्रथवधप्रतिज्ञायाः, कर्णनागास्त्राच्चार्जुनं रक्षितवानित्याह —

**युद्धे द्रोणस्य हस्तिस्थिररणभगदत्तेरितं वैष्णवास्त्रं**
**वक्षस्याधत्त चक्रस्थगितरविमहाः प्रार्दयन् सिन्धुराजम् ।**
**नागास्त्रे कर्णमुक्ते क्षितिमवनमयन् केवलं कृत्तमौलिं**
**तत्रे तत्रापि पार्थं किमिव न हि भवान् पाण्डवानामकार्षीत् ॥८॥**

**युद्ध** इति। चक्रेण स्थगितं तिरस्कृतं रविमहो येन। सिन्धुराजं जयद्रथम्। कृत्तमौलिं खण्डितसकेशकिरीटम्। तत्रे ररक्ष। पाण्डवानां किमिवोपकारं भवान् नाकार्षीत् ॥ ८ ॥

**युद्धादौ तीर्थगामी स खलु हलधरो नैमिशक्षेत्रमृच्छ-**
**न्नप्रत्युत्थायिसूतक्षयकृदथ सुतं तत्पदे कल्पयित्वा ।**
**यज्ञघ्नं बल्वलं पर्वणि परिदलयन् स्नाततीर्थो रणान्ते**
**सम्प्राप्तो भीमदुर्योधनरणमशमं वीक्ष्य यातः पुरीं ते ॥ ९ ॥**

युद्धादाविति। ऋच्छन् गच्छन् अप्रत्युत्थायिनः सूतस्य रोमहर्षणस्य क्षयकृद् वधं कुर्वन् अथ मुनिवचनात् सुतं तत्पुत्रं तत्पदे मुनिदत्ते ब्रह्मासने। पर्वणि पर्वणि यज्ञघ्नं बल्वलं दैत्यं परिदलयन् निघ्नन् ॥ ९ ॥

**संसुप्तद्रौपदेयक्षपणहतधियं द्रौणिमेत्य त्वदुक्त्या**
**तन्मुक्तं ब्राह्ममस्त्रं समहृत विजयो मौलिरत्नं च जह्रे।**
**उच्छित्त्यै पाण्डवानां पुनरपि च विशत्युत्तरागर्भमस्त्रे**
**रक्षन्नङ्गुष्ठमात्रः किल जठरमगाश्चक्रपाणिर्विभो! त्वम् ॥ १० ॥**

संसुप्तेति। संसुप्तपञ्चद्रौपदेयक्षपणेन[1] हतधियम् अविदितेतिकर्तव्यताकं द्रौणिम् अश्वत्थामानमेत्य तेन अश्वत्थाम्ना मुक्तं ब्राह्ममस्त्रं त्वदुक्त्या विजयः समहृत संहृतवान्, तस्य मौलिरत्नं च जह्रे[2]। पाण्डवानामुच्छित्त्यै मूलच्छेदार्थं[3] पुनस्तत्प्रयुक्ते अस्त्रे ब्रह्मास्त्रे उत्तरागर्भं विशति सति अङ्गुष्ठमात्रवपुश्चक्रपाणिः सन् त्वमुत्तराया जठरमगाः किल ॥ १० ॥

अथ धर्मजभीष्मयोर्भुक्तिमुक्ती प्रदाय कृतकृत्यो भगवानित्याह—

**धर्मौघं धर्मसूनोरभिदधदखिलं छन्दमृत्युः स भीष्म-**
**स्त्वां पश्यन् भक्तिभूम्नैव हि सपदि ययौ निष्कलब्रह्मभूयम्।**
**संयाज्याथाश्वमेधैस्त्रिभिरतिमहितैर्धर्मजं पूर्णकामं**
**सम्प्राप्तो द्वारकां त्वं पवनपुरपते! पाहि मां सर्वरोगात् ॥ ११ ॥**

धर्मौघमिति। सः भूभारहरणे परमसुहृद् भीष्मः त्वां पश्यन् त्वद्भक्ते-र्भूम्नैवानपायिन्या भक्त्या निष्कलब्रह्मभूयं निष्कलब्रह्मत्वं मोक्षं[4] सपदि ययौ। अथाश्वमेधैः संयाज्य याजयित्वा ॥ ११ ॥

इति साल्वादिवधवर्णनं भारतयुद्धोपक्रमवर्णनं भारतयुद्धवर्णनं च

**षडशीतितमं दशकं सैकम्।**

---

१. 'न हता धीर्नष्टा बुद्धिर्यस्य तं द्रौ' क. पाठः. २. 'हे। उच्छि' क. ग. पाठः. ३. 'थं। जठ' क. पाठः. ४. 'क्षम्। सं' क. ग. पाठः.

**कुचेलनामा भवतः सतीर्थ्यतां गतः स सान्दीपनिमन्दिरे द्विजः।**
**त्वदेकरागेण धनादिनिःस्पृहो दिनानि निन्ये प्रशमी गृहाश्रमी ॥ १ ॥**

**कुचेलनामेति**। सतीर्थ्यतां सब्रह्मचारिताम्। त्वदेकरागेण त्वयि प्रेमलक्षणया भक्त्या। प्रशमी जितेन्द्रियः ॥ १ ॥

**समानशीलापि तदीयवल्लभा तथैव नो चित्तजयं समेयुषी।**
**कदाचिदूचे बत वृत्तिलब्धये रमापतिः किं न सखा निषेव्यते ॥ २ ॥**

**समानशीलेति**। यद्यपि समानशीला, तथापि तथैव कुचेलवच्चित्तजयं धनादिनिःस्पृहत्वं नो समेयुषी प्राप्तवती। वृत्तेर्जीवनोपायस्य लब्धये रमापतिः। सखेति निषेवौचित्यम् ॥ २ ॥

**इतीरितोऽयं प्रियया क्षुधार्तया जुगुप्समानोऽपि धने मदावहे।**
**तदा त्वदालोकनकौतुकाद् ययौ वहन् पटान्ते पृथुकानुपायनम् ॥ ३ ॥**

**इतीरित** इति। पटान्ते उपायनम् उपहारं वहन् द्वारकां ययौ ॥ ३ ॥

**गतोऽयमाश्चर्यमयीं भवत्पुरीं गृहेषु शैब्याभवनं समेयिवान्।**
**प्रविश्य वैकुण्ठमिवाप निर्वृतिं तवातिसम्भावनया तु किं पुनः ॥ ४ ॥**

**गत** इति। आश्चर्यमयीम् अनल्पशिल्पां भवत्पुरीं द्वारकां गतोऽयं कुचेलः तत्र गृहेषु ध्यष्टसहस्रेषु मध्ये शैब्याया भवनं समेयिवान् प्राप्तः। तवातिसम्भावनया अतिसम्मानेन निर्वृतिं सुखमवापेति किं पुनरुच्यते ॥ ४ ॥

**प्रपूजितं तं प्रियया च वीजितं करे गृहीत्वाकथयः पुरा कृतम्।**
**यदिन्धनार्थं गुरुदारचोदितैरपर्तुवर्षं तदमर्षि कानने ॥ ५ ॥**

**प्रपूजितमिति**। अपर्तौ वर्षर्तुव्यतिरिक्तकाले तत् सुमहद् वर्षममर्षि सोढमिति यत्, तत[2] पुरा कृतं गुरुकुले कृतं कर्माकथयः ॥ ५ ॥

---

१. 'ति किं न निषेव्यते इत्यूचे उक्तवती ॥' क. पाठः. २. 'तं क' क. पाठः.

**अपाजुषोऽस्मात् पृथुकं बलादथ प्रगृह्य मुष्टौ सकृदाशिते त्वया ।**
**कृतं कृतं नन्वियतेति सम्भ्रमाद् रमा किलोपेत्य करं रुरोध ते ॥ ६ ॥**

**अपाजुष** इति । अपाजुषः श्रीपतये पृथुकप्रसृतिप्रदानलज्जयावाङ्मुखाद् बलात्कारेण पृथुकं प्रगृह्य त्वया मुष्टौ सकृदाशिते सति रमा श्रीः सम्भ्रमादुपेत्येयता प्रसादेन कृतं कृतम् अलमलं ननु इतोऽधिकत्वत्प्रसादोचितसम्पत्सम्पादनेऽहमसमर्थेति ते करं रुरोध किल ॥ ६ ॥

**भक्तेषु भक्तेन स मानितस्त्वया पुरीं वसन्नेकनिशां महासुखम् ।**
**बतापरेद्युर्द्रविणं विना ययौ विचित्ररूपस्तव खल्वनुग्रहः ॥ ७ ॥**

**भक्तेष्विति** । भक्तेषु उद्धवादिषु भक्तेन प्रीतियुक्तेन त्वया सः कुचेलः मानितः पूजितः, बतेति खेदे, अपरेद्युः श्वोभूते द्रविणं धनं विना ययौ । विचित्ररूपः समक्षासमक्षादिभेदेन बहुप्रकारः ॥ ७ ॥

**यदि ह्ययाचिष्यमदास्यदच्युतो वदामि भार्यां किमिति व्रजन्नसौ ।**
**त्वदुक्तिलीलास्मितमग्नधीः पुनः क्रमादपश्यन्मणिदीप्रमालयम् ॥ ८ ॥**

**यदीति** । यद्यहमयाचिष्यं, तर्ह्यच्युतोऽदास्यत् । नाहं याचितवान् अच्युतश्च न दत्तवानित्यर्थः । अतो भार्यां किं वदामीति चिन्तयन्नेव व्रजन् तवोक्तौ लीलायां स्मिते च मग्ना धीर्यस्य । मणिभी रत्नैः दीप्रं दीपनशीलम् आलयं निजभवनं क्रमादपश्यत् ॥ ८ ॥

**किं मार्गविभ्रंश इति भ्रमन् क्षणं गृहं प्रविष्टः स ददर्श वल्लभाम् ।**
**सखीपरीतां मणिहेमभूषितां बुबोध च त्वत्करुणां महाद्भुताम् ॥ ९ ॥**

**किमिति** । किं मार्गविभ्रंशः पुनरपि द्वारकामागतवानहमिति क्षणकालं भ्रमन् गृहं प्रविष्टः वल्लभां दृष्ट्वा महाद्भुतां त्वत्करुणामात्मसम्पदं तद्धेतुकां बुबोध च ॥ ९ ॥

---

1. 'या पृथुकमु' क. ग. पाठः.

स रत्नशालासु वसन्नपि स्वयं समुन्नमद्भक्तिभरोऽमृतं ययौ ।
त्वमेवमापूरितभक्तवाञ्छितो मरुत्पुराधीश ! हरस्व मे गदान् ॥ १० ॥

**स** इति । सः स्वयं रत्नशालासु कामोद्दीपनविभावेषु वसन्नपि समुन्नमद्भक्तिभरः क्रमात् प्रवृद्धभक्त्यतिशयः अमृतं मोक्षं ययौ ॥ १० ॥

इति कुचेलोपाख्यानं सप्ताशीतितमं दशकम् ।

---

प्रागेवाचार्यपुत्राहृतिनिशमनया स्वीयषट्सूनुवीक्षां
काङ्क्षन्त्या मातुरुक्त्या सुतलभुवि बलिं प्राप्य तेनार्चितस्त्वम् ।
धातुः शापाद्धिरण्यान्वितकशिपुभवान् शौरिजान् कंसभग्ना-
नानीयैनान् प्रदर्श्य स्वपदमनयथाः पूर्वपुत्रान् मरीचेः ॥ १ ॥

**प्रागेवेति** । मृतं पुत्रमानीयाचार्यदक्षिणां कृतवानिति निशमनया श्रवणेन कंसहतस्वीयषट्सूनुवीक्षां प्रागेव अतिचिरं काङ्क्षन्त्या मातुर्देवक्या उक्त्या महाबलिं प्राप्य पूर्वं मरीचेः पुत्रान् स्मरोद्गीथपरिष्वङ्गपतङ्गक्षुद्रभुग्घृण्याख्यान् पुनश्च धातुर्ब्रह्मणः शापाद् हिरण्यकशिपुभवान् शौरिजान् वसुदेवपुत्रान् मात्रे प्रदर्श्य स्वपदं स्वर्गम् अनयथाः प्रापयामासिथ ॥ १ ॥

श्रुतदेव इति श्रुतं द्विजेन्द्रं बहुलाश्वं नृपतिं च भक्तिपूर्णम् ।
युगपत् त्वमनुग्रहीतुकामो मिथिलां प्रापिथ तापसैः समेतः ॥ २ ॥

**श्रुतदेव** इति । श्रुतं विश्रुतम् ॥ २ ॥

गच्छन् द्विमूर्तिरुभयोर्युगपन्निकेत-
मेकेन भूरिविभवैर्विहितोपचारः ।
अन्येन तद्दिनभृतैश्च फलौदनाद्यै-
स्तुल्यं प्रसेदिथ ददाथ च मुक्तिमाभ्याम् ॥ ३ ॥

---

१. 'भ' क. पाठः.

गच्छन्निति । द्विमूर्तिः अङ्गीकृतशरीरद्वयः। एकेन बहुलाश्वेन भूरिभिर्विभवैः उपकरणैः विहितः कृतः उपचारः पूजा यस्य ॥ ३ ॥

अथ द्विजस्य मृतपुत्रानयनेनार्जुनस्य गर्वापनयनपूर्वकमात्मनि तत्त्वबुद्ध्यापादनप्रकारमाह—

भूयोऽथ द्वारवत्यां द्विजतनयमृतिं तत्प्रलापानपि त्वं
को वा दैवं निरुन्ध्यादिति किल कथयन् विश्ववोढाप्यसोढाः ।
जिष्णोर्गर्वं विनेतुं त्वयि मनुजधिया कुण्ठितां चास्य बुद्धिं
तत्त्वारूढां विधातुं परमतमपदप्रेक्षणेनेति मन्ये ॥ ४ ॥

भूय इति। दैवं स्वकर्मफलं को निरुन्ध्याद् अन्यथाकर्तुं कः समर्थ इति कथयन् त्वं तस्य द्विजस्य प्रलापानपि विश्ववोढा जगदीश्वरोऽपि असोढाः मर्षितवान् । परमतमस्य पदस्य वैकुण्ठपदस्य प्रेक्षणेन अस्य जिष्णोः गर्वं विनेतुम् अपनेतुम् । मनुजधिया त्वयि कुण्ठितां निश्चयरहितां तत्त्वारूढां विधातुम् इदमिति मन्ये ॥ ४ ॥

नष्टा अष्टास्य पुत्राः पुनरपि तव तूपेक्षया कष्टवादः
स्पष्टो जातो जनानामथ तदवसरे द्वारकामार पार्थः ।
मैत्र्या तत्रोषितोऽसौ नवमसुतमृतौ विप्रवर्यप्ररोदं
श्रुत्वा चक्रे प्रतिज्ञामनुपहृतसुतः सन्निवेक्ष्ये कृशानुम् ॥ ५ ॥

नष्ट इति। अस्य द्विजवरस्य अष्ट पुत्रा नष्टाः। तदा तु तवोपेक्षया द्विजसुतरक्षणौदासीन्याद् जनानां कष्टवादो लोकापवादो जातः। तदवसरे पार्थो द्वारकाम् आर प्राप। मैत्र्या सख्येन तत्रोषितः उवास। अनुपहृतसुतः अदत्तजनिष्यमाणकुमारश्चेद् अहं कृशानुम् अग्निं सन्निवेक्ष्ये प्रविशामि ॥ ५ ॥

मानी स त्वामपृष्ट्वा द्विजनिलयगतो बाणजालैर्महास्त्रै
रुन्धानः सूतिगेहं पुनरपि सहसा दृष्टनष्टे कुमारे ।

---

१. 'नसि' क. पाठः. २. 'ष्णवप' क. ग. पाठः.

याम्यामैन्द्रीं तथान्याः सुरवरनगरीर्विद्यया सद्यो
मोद्योगः पतिष्यन् हुतभुजि भवता सस्मितं वारितोऽभूत् ॥ ६ ॥

मानीति । स पार्थः मानी आश्रितरक्षणेऽद्वितीयोऽहमित्यभिमानी । अत एव त्वां परमबन्धुमप्यपृष्ट्वा महास्त्रैः आग्नेयादिभिः सूतिगेहं रुन्धानः कृतशरपञ्जरः दृष्टनष्टे जातमात्र एव सशरीरमदर्शनं गते याम्यां यमनगरीम् ऐन्द्रीम् इन्द्रस्य नगरीम् अन्याः वरुणकुबेरादिसुरवरनगरीः विद्यया योगैश्वर्येण आसाद्य प्राप्य हुतभुजि अग्नौ पतिष्यन् पतितुमारब्धो भवता सस्मितम् । पौरुषस्य दैवसापेक्षत्वम् इदानीं किमवसितमित्यर्जुनस्य भावावेदनं तव स्मितहेतुः ॥ ६ ॥

सार्धं तेन प्रतीचीं दिशमतिजविना स्यन्दनेनाभियातो
लोकालोकं व्यतीतस्तिमिरभरमथो चक्रधाम्ना निरुन्धन् ।
चक्रांशुक्लिष्टदृष्टिं स्थितमथ विजयं पश्य पश्येति वारां
पारे त्वं प्राददर्शः किमपि हि तमसां दूरदूरं पदं ते ॥ ७ ॥

सार्धमिति । अतिजविना वेगातिशयवता । वारां पारे कारणजलमध्यवर्तिनि किमपि अनिर्देश्यं तमसां दूरदूरम् अत्यन्तदूरस्थितम् ॥ ७ ॥

तत्रासीनं भुजङ्गाधिपशयनतले दिव्यभूषायुधाद्यै-
रावीतं पीतचेलं प्रतिनवजलदश्यामलं श्रीमदङ्गम् ।
मूर्तीनामीशितारं परमिह तिसृणामेकमर्थं श्रुतीनां
त्वामेव त्वं परात्मन्! प्रियसखसहितो नेमिथ क्षेमरूपम् ॥ ८ ॥

तत्रेति । तिसृणां मूर्तीनामीशितारं नियन्तारम् अत एव परं जगत्कारणं श्रुतीनामेकमर्थं प्रधानप्रतिपाद्यं क्षेमरूपं पुरुषार्थभूतं त्वामेव त्वं नेमिथ नमश्चकृषे ॥ ८ ॥

युवां मामेव द्वावधिकविवृतान्तर्हिततया
विभिन्नौ सन्द्रष्टुं स्वयमहमहार्षं द्विजसुतान् ।

---

१. 'तिद्रू' क. पाठः.

नयेतं द्रागेनानिति खलु वितीर्णान् पुनरमून्
द्विजायादायादाः प्रणुतमहिमा पाण्डुजनुषा ॥ ९ ॥

युवामिति। युवां कृष्णार्जुनौ मामेव मदंशभूतावेव द्वौ अधिकविवृता-न्तर्हिततया[1] विभिन्नौ। एकः शुद्धसत्त्वोपाधिकतयाधिकविवृतः प्रकटितनिजैश्वर्यः। अन्य उपाध्यन्तर्हितनिजैश्वर्यः। अतो जीवेश्वररूपेण विभिन्नौ द्विधाभूतौ सम्द्रष्टुं स-मीपे द्रष्टुमहं स्वयं द्विजसुतानहार्षम् आनीतवान्। एनान् द्राग् झटिति नयेतं द्विज-वरनिकटं प्रापयेतम् इति वितीर्णान् दत्तान् अमून् द्विजसुतान् आदाय ब्राह्मणायादाः दत्तवान्। पाण्डुजनुषा पार्थेन प्रणुतः स्तुतो महिमा यस्य ॥ ९ ॥

एवं नानाविहारैर्जगदभिरमयन् वृष्णिवंशं प्रपुष्ण-
न्नीजानो यज्ञभेदैरतुलविहृतिभिः प्रीणयन्नेणनेत्राः।
भूभारक्षेपदम्भात् पदकमलजुषां मोक्षणायावतीर्णः
पूर्णं ब्रह्मैव साक्षाद् यदुषु मनुजतारूषितस्त्वं व्यलासीः ॥ १० ॥

एवमिति। भूभारक्षेपमिषेण मनुजतया रूषितो बहिर्लिप्तः ॥ १० ॥

प्रायेण द्वारवत्यामवृतदयि तदा नारदस्त्वद्रसार्द्र-
स्तस्माल्लेभे कदाचित् खलु सुकृतनिधिस्त्वत्पिता तत्त्वबोधम् ।
भक्तानामग्रयायी स च खलु मतिमानुद्धवस्त्वत्त एव
प्राप्तो विज्ञानसारं स किल जनहितायाधुनास्ते बदर्याम् ॥ ११ ॥

प्रायेणेति। श्रीनारदः प्रायेण दक्षशापाच्चिरमेकत्र स्थातुमशक्यतया गता-गतपूर्वकं द्वारवत्यामवृतद् वर्तते स्म। तदा तस्मान्नारदात्। जनहिताय भक्तानां ज्ञानोपदेशाय ॥ ११ ॥

सोऽयं कृष्णावतारो जयति तव विभो! यत्र सौहार्दभीति-
स्नेहद्वेषानुरागप्रभृतिभिरतुलैरश्रमैर्योगभेदैः ।

---

१. 'या ए' क ग. पाठः.

आर्तिं तीर्त्वा समस्तामम‍ृतपदमगुः सर्वतः सर्वलोकाः
स त्वं विश्वार्तिशान्त्यै पवनपुरपते! भक्तिपूर्त्यै च भूयाः ॥ १२ ॥

**सोऽयमिति**। यत्र श्रीकृष्णे सौहार्दादिभिः योगभेदैः श्रीकृष्णे मनोनिवेशनोपायविशेषैः। तत्र सौहार्दात् पाण्डवादयः, भीत्या कंसः, स्नेहाद् यदवः, द्वेषात् शिशुपालादयः, अनुरागाद् गोप्यः। सर्वतः सर्वत्र। सर्वे लोकाः समस्ताम् आध्यात्मिकादिरूपाम् आर्तिं पीडां तीर्त्वा अतिक्रम्य अमृतपदं मोक्षम् अगुः जग्मुः। विश्वार्तिशान्त्यै सकलपीडापहत्यै भक्तेः प्रारब्धायाः पूर्त्यै प्रवृद्धये च भूयाः ॥ १२ ॥

इत्यर्जुनगत्रापिनयनवर्णनम् अष्टाशीतितमं दशकं सह्विकम्।

---

रमाजाने! जाने यदिह तव भक्तेषु विभवो
न *सम्पद्यः सद्यस्तदिह मदकृत्त्वादशमिनाम्।
प्रशान्तिं कृत्वैव प्रदिशसि ततः काममखिलं
प्रशान्तेषु क्षिप्रं न खलु भवदीये च्युतिकथा ॥ १ ॥

**रमाजान** इति। हे रमाजाने! लक्ष्मीपते! तव भक्तेषु विभवः फलं न सद्यः किञ्चिद् भजनमात्र एव सम्पद्यः परिणतो न भवति यत्, तद् मदकृत्त्वाद् विभवस्य मदजनकत्वादिति जाने। अतः अशमिनाम् अशान्तानां प्रशान्तिं कृत्वैव कामम् अभीष्टमखिलं प्रदिशसि। प्रागेव प्रशान्तेषु तु क्षिप्रं प्रदिशसि। अतस्त्वदीये त्वद्भक्ते न खलु च्युतिकथा भ्रंशस्य कथा शब्दोऽपि नास्त्येव ॥ १ ॥

विधिशङ्करादयस्तु न तथेत्याह—

सद्यःप्रसादरुषितान् विधिशङ्करादीन्
केचिद् विभो! निजगुणानुगुणं भजन्तः।

---

* सम्पद्यत इति सम्पद्यः। 'कृभ्वस्तियोगे सम्पद्यकर्तरि' (५. ४. ५०.) इत्यत्र कर्तृशप्रत्ययान्ततया निपातनात् साधुता।

भ्रष्टा भवन्ति बत कष्टमदीर्घदृष्ट्या
स्पष्टं वृकासुर उदाहरणं किलास्मिन् ॥ २ ॥

**सद्य** इति । सद्यः अल्पाभ्यां गुणदोषाभ्यां, सद्यःप्रसादाः सद्योरुषिताश्च विधिशङ्करादयः । केचिद् निजगुणानुगुणं स्वस्ववासनानुसारेण तान् भजन्तः अनन्तरमशान्ततया तद्रोषेणैव भ्रष्टा भवन्ति । कष्टं बतेति खेदे । अदीर्घदृष्ट्या अतिचिरविष्णुभजनमान्द्यादेवान्यभजनमिति भावः । तदुक्तं —

"रागी स पुरुषोऽवश्यं फलं प्रेप्सति शङ्करात् ।
ततः फलं स लभते ततस्तं विस्मरिष्यति ॥"

इति । अस्मिन्नर्थे वृकासुरः स्पष्टम् अनुरूपम् उदाहरणम् ॥ २ ॥

शकुनिजः स हि नारदमेकदा त्वरिततोषमपृच्छदधीश्वरम् ।
स च दिदेश गिरीशमुपासितुं न तु भवन्तमबन्धुमसाधुषु ॥ ३ ॥

**शकुनिज** इति । स हि वृकासुरः त्वरिततोषं सद्यःप्रसादमधीश्वरमपृच्छत् ॥

तपस्तप्त्वा घोरं स खलु कुपितः सप्तमदिने
शिरश्छित्त्वा सद्यः पुरहरमुपस्थाप्य पुरतः ।
अतिक्षुद्रं रौद्रं शिरसि करदानेन निधनं
जगन्नाथाद् वव्रे भवति विमुखानां क्व शुभधीः ॥ ४ ॥

**तप** इति । उपस्थाप्य प्रत्यक्षीकृत्य । अतिक्षुद्रम् असारम् । रौद्रं क्रूरम् । भवति विष्णौ ॥ ४ ॥

मोक्तारं बन्धमुक्तो हरिणपतिरिव प्राद्रवत् सोऽथ रुद्रं
दैत्याद् भीत्या स्म देवो दिशि दिशि वलते पृष्ठतो दत्तदृष्टिः ।
तूष्णीके सर्वलोके तव पदमधिरोक्ष्यन्तमुद्वीक्ष्य शर्वं
दूरादेवाग्रतस्त्वं पटुवटुवपुषा तस्थिषे दानवाय ॥ ५ ॥

---

१. 'त्यो भी' क. घ. ङ. च. पाठः.

**मोक्तारमिति**। स दैत्यः रुद्रमेव प्राद्रवत्। बन्धमुक्तो हरिणपतिर्मृगेन्द्रः मोक्तारमिव। तव पदं वैकुण्ठम्। तस्थिषे दानवाय वृकासुरायात्मानं प्रकाश्य स्थितवान् ॥ ५ ॥

**भद्रं ते शाकुनेय! भ्रमसि किमधुना त्वं पिशाचस्य वाचा**
**सन्देहश्चेन्मदुक्तौ तव किमु न करोष्यङ्गुलीमङ्ग! मौलौ।**
**इत्थं त्वद्वाक्यमूढः शिरसि कृतकरः सोऽपतच्छिन्नपातं**
**भ्रंशो ह्येवं परोपासितुरपि च गतिः शूलिनोऽपि त्वमेव ॥ ६ ॥**

**भद्रमिति**। छिन्नपातमपतत् छिन्नमूलतरुवत् पपात। परोपासितुरप्येवं त्वत्कृतो भ्रंशो भवति। शूलिनोऽपि गतिः शरणं च त्वं विष्णुरेव भवति ॥ ६ ॥

**भृगुं किल सरस्वतीनिकटवासिनस्तापसा-**
**स्त्रिमूर्तिषु समादिशन्नधिकसत्त्वतां वेदितुम्।**
**अयं पुनरनादरादुदितरुद्धरोषे विधौ**
**हरेऽपि च जिहिंसिषौ गिरिजया धृते त्वामगात् ॥ ७ ॥**

**भृगुमिति**। अधिकसत्त्वतां महत्त्वम्। अयं भृगुः ब्रह्मपुत्रः अकृतप्रणा-मस्तदनादरादुदितः पुनश्च रुद्धो रोषो येन तथाविधे सति विधौ हरे रुद्रेऽपि च भ्रातृस्नेहेन परिरम्भणारम्भे तदनादरजनितरुषा जिहिंसिषौ हन्तुमिच्छति सति गिरिजया धृते वारिते च सति वैकुण्ठमगात् ॥ ७ ॥

**सुप्तं रमाङ्कभुवि पङ्कजलोचनं त्वां**
**विप्रे विनिघ्नति पदेन मुदोत्थितस्त्वम्।**
**सर्वं क्षमस्व मुनिवर्य! भवेत् सदा मे**
**त्वत्पादचिह्नमिह भूषणमित्यवादीः ॥ ८ ॥**

**सुप्तमिति**। त्वत्पादचिह्नं श्रीवत्साख्यम् ॥ ८ ॥

---

१. 'किं' घ. पाठः. २. 'यस्य त' क. ग. पाठः.

**निश्चित्य ते च सुदृढं त्वयि बद्धभावाः**
**सारस्वता मुनिवरा दधिरे विमोक्षम् ।**
**त्वामेवमच्युत ! पुनश्च्युतिदोषहीनं**
**सत्त्वोच्चयैकतनुमेव वयं भजामः ॥ ९ ॥**

**निश्चित्येति** । बद्धो भावो भक्तिर्येषाम् । सारस्वताः सरस्वतीतीरवासिनः ॥९॥

**जगत्सृष्ट्यादौ त्वां निगमनिवहैर्वन्दिभिरिव**
**स्तुतं विष्णो ! सच्चित्परमरसनिर्द्वैतवपुषम् ।**
**परात्मानं भूमन् ! पशुपवनिताभाग्यनिवहं**
**परीतापश्रान्त्यै पवनपुरवासिन् ! परिभजे ॥ १० ॥**

**जगदिति** । निगमनिवहैः मूर्तिमतीभिरुपनिषद्भिः जगत्सृष्ट्यादौ सगुणत्वेन स्तुतम् । सच्चिदिति । सच्चिदानन्दाद्वयपरमात्मरूपेण च स्तुतमिति भावः । पशुपवनितानां भाग्यं तत्फलं नितरां वहति प्रापयतीति तथा । यद्वा भाग्यानां निवहं श्रीकृष्णरूपेण परिणतमिति । एवञ्च त्रिमूर्तिषु विष्णोरेव महत्त्वमित्यस्मिन्नर्थे सारस्वता मुनिवरा निगमनिवहाश्च प्रमाणमित्यप्युक्तं वेदितव्यम् ॥ १० ॥

इति वृकासुरवधवर्णनं मूर्तित्रितये भगवतः श्रैष्ठ्यवर्णनं च

**एकोननवतितमं दशकम् ।**

---

ननु त्रिमूर्तिषु महत्त्वं श्रीशङ्करस्यैवेति स्कान्दादौ बहुशः श्रूयत इत्याशङ्क्य परिहरति—

**वृकभृगुमुनिमोहिन्यम्बरीषादिवृत्ते-**
**ष्वयि तव हि महत्त्वं सर्वशर्वादिजैत्रम् ।**
**स्थितमिह परमात्मन् ! निष्कलार्वागभिन्नं**
**किमपि यदवभातं तद्धि रूपं तवैव ॥ १ ॥**

वृकेति। मोहिनी विष्णुमाया। तव विष्णोर्महत्त्वं सर्वेषां शर्वादीनां देवानां जैत्रं न्यूनतापादकम्। तत्र वृकादिचतुर्णां चरितेषु शिवस्य जैत्रं त्वन्महत्त्वम्, इन्द्रयाग-नन्दहरण-बालानयन-अनलपान- वत्सस्तेयादिषु इन्द्रवरुणयमानलब्रह्मादिजैत्रं त्वन्महत्त्वमिति स्थितम् अत्रैव दृढीकृतम्। अत्र हेतुः— परमात्मन्निति। निरुपाधिकपरमात्मत्वमेवोपपादयति—निष्कलेति। निष्कले परमात्मनि ततोऽर्वाक् सकलेषु ब्रह्मविष्णुगिरीशादिषु च यत् किमप्यभिन्नं रूपं परमात्मतत्त्वम् अवभातं, तदेव तव विष्णो रूपं तद्रूपं च तवैव, न तेषाम्[2]। हि यस्मादेवं विष्णोरवस्थाभेदा गिरिशादयः, तस्मात् त्रिमूर्तिषु विष्णोरेव महत्त्वमुक्तमित्यर्थः। तदुक्तं श्रीभागवते—

"सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः॥"

इति ॥ १ ॥ (स्क. १. अ. २. श्लो. २३)

ननु

"एवमेको महादेवो मायया गुणरूपया।
नामरूपक्रियाभेदैर्भिन्नवत् प्रतिभासते ॥"

इति वचनात् शिवस्यैवावस्थाभेदो मूर्तित्रयप्राधान्यं चेत्याशङ्क्य संज्ञाभेद एवायं[3], न संज्ञिनि वस्तुस्वरूप इति परिहरति—

**मूर्तित्रयेश्वरसदाशिवपञ्चकं यत्**
**प्राहुः परात्मवपुरेव सदाशिवोऽस्मिन्।**
**तत्रेश्वरस्तु स विकुण्ठपदस्त्वमेव**
**त्रित्वं पुनर्भजसि सत्यपदे त्रिभागे ॥ २ ॥**

मूर्तित्रयेति। ब्रह्मविष्णुगिरिशेश्वरसदाशिवाख्यमूर्तिभेदेन पञ्चात्मकः शिव इति यत् प्राहुः शैवाः, तत्र शैवानां पक्षे यः सदाशिवशब्दवाच्यः, सोऽस्मिन्

१. 'तुत्वेन सम्बोधयति— हे परमात्मन्!। नि' क. ग. पाठः. २. 'तु ब्रह्मगिरिशादेः। हि' क. ग. पाठः. ३. 'यं विवादो, न' क. ग. पाठः. ४. 'ववा' ख. पाठः.

पक्षे "विष्णुं पञ्चात्मकं वन्दे" इत्युक्ते श्रीभागवतपक्षे परात्मवपुः परमात्मस्वरूपस्त्वं विष्णुरेवेत्यर्थः। एवं विकुण्ठपदो वैकुण्ठवासी त्वमेवेश्वरशब्दवाच्यः। त्रयो भागा ब्रह्मविष्णुशिवलोका यस्मिंस्तत् त्रिभागं तस्मिन् सत्यपदे सत्यलोके त्रयो ब्रह्मविष्णुगिरिशाः तेषां भावस्त्रित्वं, सत्यलोकस्थब्रह्मविष्णुशिवलोकेषु त्रिमूर्तित्वमपि त्वमेव भजसीत्यर्थः। यथा हरिवंशे—

"अहं त्वं सर्वगो देव! त्वमेवाहं जनार्दन!।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते!॥"

इति ॥ २ ॥

ननु यदि विष्णुशिवयोरभेदः, तर्हि कथं विष्णोः प्राधान्यमुच्यते। सत्यम्। यद्यपि तत्त्वदृष्ट्या भेदो नास्ति, तथापि गौणो भेदः उत्कर्षो निकर्षश्चानयोर्भवत्येवेत्याह—

**तत्रापि सात्त्विकतनुं तव विष्णुमाहु-**
**र्धाता तु सत्त्वविरलो रजसैव पूर्णः।**
**सत्त्वोत्कटत्वमपि चास्ति तमोविकार-**
**चेष्टादिकं च तव शङ्करनाम्नि मूर्तौ ॥ ३ ॥**

**तत्रापीति**। तत्र त्रिमूर्तिषु तव सात्त्विकीं शुद्धसत्त्वमयीं **तनुं विष्णुं** केवलविष्णुशब्दवाच्यामाहुरित्यर्थः। तदुक्तं—

"राजसो भगवान् ब्रह्मा सात्त्विको विष्णुरुच्यते।
ईषत्तमोगुणो रुद्रः सृजत्यवति हन्त्यजः॥"

इति ॥ ३॥

ननु "तत्रेश्वरस्तु स विकुण्ठपदस्त्वमेवे"त्युक्तम्। तदयुक्तम्,

"अम्बिकापतिरीशान उपास्यो गुणमूर्तिभिः।
ईश्वरः परमात्मैको मायया स त्रिधा स्थितः॥"

इति वचनादिति चेद्, नेत्याह—

**तं च त्रिमूर्त्यतिगतं परपूरुषं त्वां**
**शर्वात्मनापि खलु सर्वमयत्वहेतोः।**
**शंसन्त्युपासनविधौ तदपि स्वतस्तु**
**त्वद्रूपमित्यतिदृढं बहु नः प्रमाणम् ॥ ४ ॥**

तं चेति। त्रिमूर्त्यतिगतं मूर्तित्रयात् परं[1] तं शैवानामीश्वरशब्दवाच्यं परं ब्रह्माण्डाद् बहिष्ठं पुरुषम् एकांशेन पुरं ब्रह्माण्डं प्रविश्य च स्थितम् अन्तर्गतानेकब्रह्माण्डं त्वां खलूपासनविधौ शैवान् प्रति शर्वात्मना शिवस्वरूपेणापि शंसन्ति पौराणिकाः। सर्वमयत्वहेतोरिति[2] । तव त्रिमूर्त्यधिष्ठानत्वात् तदपि नात्यन्तमयुक्तमित्यर्थः । तदपि तथापि स्वतः परमार्थतस्त्वद्रूपमेव तद्, न ब्रह्म-शिवयोरित्यत्र बहु नः प्रमाणमिति । श्रुतिपुराणवचनप्रत्यक्षादिप्रमाणानि बहूनि सन्तीत्यर्थः। श्रुतिस्तावत् पुरुषसूक्तादौ। 'क्वेदृग्विधाविगणिते'[3]त्यादीनि पुराण-वचनानि । एवंरूपस्यार्जुनादिभिर्दृष्टत्वात् प्रत्यक्षमपि प्रमाणमित्यलम् ॥ ४ ॥

श्रीशङ्करोऽपि[4] भगवान् सकलेषु तावत्
त्वामेव मानयति यो न हि पक्षपाती।
त्वन्निष्ठमेव स हि नामसहस्रकादि
व्याख्यद् भवत्स्तुतिपरश्च गतिं गतोऽन्ते ॥५॥

श्रीशङ्कर इति। किञ्च श्रीशङ्करः भगवत्पादाचार्यः[5]। त्वन्निष्ठं विष्णुपरम्। नामसहस्रकादीति। आदिशब्देन श्रीगीतादि गृह्यते[6]। सोऽपि तदुभयमपि शिवपर-तया व्याख्यातुं शक्यमपि विष्णुपरतयैव व्याख्यातवान्। अन्ते च भवत्स्तुतिपरः श्रीमत्पादादिकेशस्तुतिं कुर्वन् गतिं मोक्षं गतः, न तु शिवस्तुतिपरः ॥५॥

सकलेषु त्वामेव मानयतीति यदुक्तं, तदेवाह—

मूर्तित्रयातिगमुवाच च मन्त्रशास्त्र-
स्यादौ कलायसुषमं सकलेश्वरं त्वाम्।
ध्यानं च निष्कलमसौ प्रणवे खलूक्त्वा
त्वामेव तत्र सकलं निजगाद नान्यम् ॥६॥

---

१. 'रं गतं शै' क. पाठः., 'रतः शै' ख.पाठः. २. 'द्धेतोः त' क.ग. पाठः. ३. 'ताण्डपराणु-चर्यावाताध्वरोमविवरस्य च ते महित्वमि'त्या (श्री. भा. १०. १४. ११) क. ग. पाठः. ४. 'हि' क. घ. ङ. च. पाठः. ५. 'वान्। त्व' क. पाठः., 'वत्पादः। त्व' ग. पाठः. ६. 'ते। 'श्रीशङ्कराचार्यो हि सहस्रनामगीतादिकं शि' क. ग. पाठः.

**मूर्तित्रयेति** । मूर्तित्रयातिगं चतुर्थं परमेश्वरं त्वां कलायसुषमं श्रीकृष्णमुवाच । प्रणवे प्रणवार्थत्वेन तत्र निष्कलध्यानाङ्गत्वेन सकलं त्वामेव निजगाद, नान्यं शिवमित्यर्थः[1] ॥ ६ ॥

पुराणानां विष्णुमहिमपरत्वं पुराणसंग्रहे स्पष्टमित्याह—

**समस्तसारे च पुराणसंग्रहे विसंशयं त्वन्महिमैव वर्ण्यते ।**
**त्रिमूर्तियुक्सत्यपदत्रिभागतः परं पदं ते कथितं न शूलिनः ॥ ७ ॥**

**समस्तेति** । ननु वैकुण्ठलोकः सत्यलोकान्तर्गतः ब्रह्माण्डाद् बहिष्ठस्तु[2] नहि लोक इति चेद् नैवमित्याह—त्रिमूर्तीति । मूर्तित्रययुक्तेभ्यः सत्यलोकस्थलोकत्रयेभ्यः परं ब्रह्माण्डाद् बहिष्ठं यत् पदं लोकः, तत् ते तव वैकुण्ठलोक एवेति पुराणसंग्रहे कथितम् ॥ ७ ॥

**यद् ब्राह्मकल्प इह भागवतद्वितीय-**
**स्कन्धोदितं वपुरनावृतमीश[3]! धात्रे ।**
**तस्यैव नाम हरिशर्वमुखं जगाद**
**श्रीमाधवः शिवपरोऽपि पुराणसारे ॥ ८ ॥**

**यदिति** । यस्मिन् ब्रह्माभूत् स ब्राह्मः कल्पः, तस्मिन् भगवता धात्रे[4] प्रत्यक्षीकृतं यद् वपुः, तस्य वपुष एव हरिशर्वमुखं नाम जगाद श्रीमाधवाचार्यः पुराणसारे । यद्यप्यसौ शिवपरस्तथापि पुराणसारे धात्रे दर्शितस्य वपुषो न शिवमूर्तित्वमुक्तवान्[5], सर्वमयस्तु त्वमेवेति च त्वामेवोक्तवानित्यर्थः ॥ ८ ॥

**ननु**

"गोप्ता विष्णुस्तमोमूर्तिर्व्यापारेण तु सात्त्विकः ।"
"तदधीनो हरिः साक्षाद्"

---

१. 'मृ ॥' क. ग. पाठः. २. 'ष्ठः शिवलो' ख. ग. पाठः. ३. 'पा' क. घ. ङ. च. पाठः. ४. 'त्रे ब्रह्मणे अनावृतं प्र' ग. पाठः. ५. 'न् सर्वमूर्तित्वमेवोक्तवान्, स' क. ग. पाठः.

"विष्णुर्विरिञ्चश्च यत्पादपद्मं शिरसा बिभर्ति"
इत्यादिवचनैर्हरेर्निकृष्टतां व्यासेनैवोक्ता माशङ्क्य तस्यार्थवादत्वेनातत्परत्वमाह 'ये स्वप्रकृत्यनुगुणम्' इति द्वाभ्यां—

ये स्वप्रकृत्यनुगुणं गिरिशं भजन्ते
तेषां फलं हि दृढयैव तदीयभक्त्या।
व्यासो हि तेन कृतवानधिकारिहेतोः
स्कान्दादिकेषु तव हानिवचोऽर्थवादैः ॥९॥

य इति। "यस्येच्छा जायते यस्मिन् तं देवं स समाश्रयेद्" इति न्यायेन स्वप्रकृत्यनुगुणं प्राग्जन्मवासनानुसारेण। तेषां दृढया तदीयभक्त्यैव फलं भविष्यतीति यत् तेन हेतुना व्यासो ह्यधिकारिहेतोः गिरीशभजनाधिकारिणं प्रति अर्थवादैः तव हानिवचो न्यूनतावचनानि कृतवान्। अर्थवादाश्च गिरिश-भजनरुच्युत्पादनार्थाः ॥९॥

ननु रुच्युत्पादनार्थं चेद्, गिरिशं स्तूयादेव, नान्यहानिवचः कुर्यादित्यत्राह—

भूतार्थकीर्तिरनुवादविरुद्धवादौ
त्रेधार्थवादगतयः खलु रोचनार्थाः।
स्कान्दादिकेषु बहवोऽत्र विरुद्धवादा-
स्त्वत्तामसत्वपरिभूत्युपशिक्षणाद्याः ॥१०॥

भूतार्थेति। भूतार्थकीर्तिः यथावस्थितार्थकीर्तनम्, अनुवादोऽविरुद्धगुणारोपः, प्रमाणान्तरविरुद्धार्थकथनं विरुद्धवाद इति त्रेधार्थवादस्य गतयो मार्गाः। त्रयोऽपि रोचनार्था एव। तत्र तेषां मध्ये त्वत्तामसत्वादयो विरुद्धवादाः प्रमाणान्तरविरुद्धवचनानि ते च रोचनार्थाः। विष्णुरपि यत्प्रसादमपेक्षते, अहो गिरि-

---

१. 'ता श्रीवेदव्या' क. ग. पाठः. २. 'णं' व्याख्यासम्मतः पाठः. ३. 'नुसारेण प्रा' क. ग. पाठः. ४. 'व विष्णोर्हा' क. ग. पाठः. ५, 'स्तुवीतैव व्यासः। किमर्थं हानिवचः कृतवान् इत्याशङ्कायामाह—' क. ग. पाठः. ६. 'वलम्बते' क. ग. पाठः.

शस्य प्राधान्यमिति गिरिशभजनरुच्युत्पादका एवैते, न तु विष्णोस्तामसत्वपराजयादिज्ञापनादौ प्रमाणभूताः ॥ १० ॥

उक्तेऽर्थे स्वकपोलकल्पितत्वशङ्कां वारयन् कविः श्रोतृश्रद्धां सम्पादयति—

**यत्किञ्चिदप्यविदुषापि विभो! मयोक्तं**
**तन्मन्त्रशास्त्रवचनाद्यभिदृष्टमेव ।**
**व्यासोक्तिसारमयभागवतोपगीत!**
**क्लेशान् विधूय कुरु भक्तिभरं परात्मन्! ॥ ११ ॥**

**यत्किञ्चिदिति** । व्यासोक्तयः पुराणानि तेषां सारमयं श्रीभागवतं, श्रीवेदव्यासस्य कृतकृत्यतापादकत्वात्, तदुपगीत! तत्प्रतिपाद्य! ॥ ११ ॥ ९९९ ॥

इति आगमादीनां भगवत्येव परमतात्पर्यनिरूपणं नवतितमं दशकं सैकम् ।

इति नारायणीयस्तोत्रव्याख्यायां

भक्तप्रियाख्यायां

दशमस्कन्धपरिच्छेदः ।

---

आदितः श्लोकसङ्ख्या ९३४.

---

१. 'दनार्थी ए' क. ग. पाठः.

## अथैकादशस्कन्धपरिच्छेदः ।

प्रवृत्तिलक्षणा लीला प्राच्यैः पद्यैः प्रकीर्तिता ।
निवृत्तिलक्षणा सेयं हरेर्लीला निरूप्यते ॥

सम्प्रति भक्तानां मुक्तिमार्गप्रदर्शनाय भगवद्गुणान् वर्णयितुमारभमाणः प्रथमं मोक्षोपायमौलिभूतस्य भगवदुपासनस्य माहात्म्यं दर्शयति—

**श्रीकृष्ण! त्वत्पदोपासनमभयतमं बद्धमिथ्यार्थदृष्टे-**
**र्मर्त्यस्यार्तस्य मन्ये व्यपसरति भयं येन सर्वात्मनैव ।**
**यत्तावत् त्वत्प्रणीतानिह भजनविधीनास्थितो मोहमार्गे**
**धावन्नप्यावृताक्षः स्खलति न कुहचिद् देवदेवाखिलात्मन्!** ॥ १ ॥

**श्रीकृष्णेति** । बद्धा रूढपदा मिथ्यार्थे शरीरादौ दृष्टिः अहम्ममाभिमानो यस्य, अत एव मर्त्यस्य जननमरणधर्मिणः, तस्मादार्तस्य आध्यात्मिकादिदुःखपीडितस्य त्वत्पदोपासनमभयतमं न विद्यते भयं यस्मात् तदभयम् अतिशयेनाभयम् अभयतमं[1] भवभयनिवर्तकं मन्ये । अभयतमत्वमाह—येनेति । येन त्वत्पदोपासनेन भयं सर्वात्मनैव निरवशेषमेव व्यपसरति अपगच्छति । उपासनसाधनेषु च भगवद्धर्मोऽकुतोभय इत्याह—यदिति । इह भगवद्भजनमार्गेषु मध्ये त्वत्प्रणीतान् भक्तानुग्रहाय भगवतैव स्वमुखेनैव प्रोक्तान् अत एव भागवताख्यान् भजनविधीन् धर्मान् तावत् सत्सङ्गद्वारा क्रमादास्थित आश्रितः सन् मोहमार्गे अज्ञानद्वारभूतरथ्यापणगणिकालयगोष्ठ्यादिप्रदेशे[2]ष्वास्थितो धावन् किञ्चित् किञ्चिदतिक्रम्यातिक्रम्य अतिशीघ्रमनुतिष्ठन् अपिच आवृताक्षः निमीलितश्रुतिस्मृत्याख्यनयनद्वन्द्वः । अज्ञात्वापीत्यर्थः । यदाहुः—

"श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।
एकेन रहितः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥"

---

१. 'मं जननमरणभय' क. ग. पाठः. २. 'श आस्थि' क. पाठः.

इति। कुहाचित् कुत्रापि न स्खलति अनुष्ठानवैकल्यादिना न प्रत्यवायी स्यात्। नापि फलस्यानित्यतया पुनरपि संसारी स्यादित्यर्थः। इति यत्, तदभयतमं मन्य इति पूर्वेणान्वयः॥ १ ॥

भगवद्धर्मानाह—

**भूमन्! कायेन वाचा मुहुरपि मनसा त्वद्बलप्रेरितात्मा**
**यद्यत् कुर्वे समस्तं तदिह परतरे त्वय्यसावर्पयामि।**
**जात्यापीह श्वपाकस्त्वयि निहितमनःकर्मवागिन्द्रियार्थ-**
**प्राणो विश्वं पुनीते न तु विमुखमनास्त्वत्पदाद् विप्रवर्यः॥२॥**

**भूमन्निति**। कायेन शिरःपाण्यादिना वाचा वागिन्द्रियेण मनसा अन्तरिन्द्रियेण। अपिशब्दात् सर्वेन्द्रियैरित्यर्थः। तव अन्तर्यामिणः बलेन वासनारूपेण प्रेरित आत्मा मनो यस्य स तथा मुहुः यद्यत् कुर्वे इति। अयमर्थः— न केवलं विहितं कर्मैवेति नियमः, किन्तु स्वभावानुसारि लौकिकमपि कर्म श्रीकृष्णे समर्पितं चेद् भगवद्धर्मो भवत्येवेति। असावहं तत् समस्तं परतरे परमात्मनि त्वयि श्रीकृष्णे अर्पयामि श्रीकृष्णायेदमिति समर्पयामि। अयं चाशयः—यथा राज्ञा प्रेरितस्य राजपुरुषस्य कर्म राज्ञः प्रीतये भवति, तथा सर्वात्मनेश्वरेण प्रेरितस्य मम सकलमपि कर्म श्रीकृष्णप्रीतये स्यादिति। अथवा तत्समर्पणमन्त्रपूर्वकं समर्पयामीति। एवं भगवद्धर्मानुष्ठातुर्माहात्म्यमाह—जात्येति। मनः सङ्कल्पविकल्पात्मकं मानसं कर्म। कर्म कायिकम्। वाग् वाचिकम्। इन्द्रियाणि ज्ञानकर्मलक्षणानि। अर्थास्तद्विषयाः। प्राणाः पञ्च। विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरवाङ्मनःप्रधानं, तदङ्गतया चेतरेन्द्रियकर्मेति त्रयाणां पृथगुपादानम्। त्वयि ईश्वरे निहिताः समर्पिताः मनःकर्मवागिन्द्रियार्थप्राणा येन तथाभूतः सन् जात्या श्वपाकोऽपि विश्वं पुनीते। किमुच्यते स्वात्मानं पुनीत इति। त्वत्पदाद् विमुखं स्मरणादिरहितं मनो यस्य स तथा। एवम्भूतस्तु विप्रवर्यः सन्नपि नासौ परं चात्मनं वा शोधयितुं समर्थ इत्यर्थः॥ २ ॥

---

१. 'ये इति' ख. पाठः.　　२. 'च' क. ग. पाठः.

ननु विषयविक्षिप्तचेतसां कुतो मनःकर्मवागादीनामीश्वरे समर्पणं संभवतीत्याशङ्क्य न तावद् विषयो नाम वास्तवोऽस्ति किन्तु मनोविलासमात्रम्। अतो मनोनिरोधपूर्वकं सर्वं समर्पयेदित्यभिप्रायेणाह —

**भीतिर्नाम द्वितीयाद् भवति ननु मनःकल्पितं च द्वितीयं**
**तेनैक्याभ्यासशीलो हृदयमिह यथाशक्ति बुद्ध्या निरुन्ध्याम्।**
**मायाविद्धे तु तस्मिन् पुनरपि न तथा भाति मायाधिनाथं**
**तत्[1] त्वां भक्त्या महत्या सततमनुभजन्नीश! भीतिं विजह्याम्॥३॥**

भीतिरिति। द्वितीयाद् आत्मात्मीयत्वेनाभिमन्यमानाच्छरीरादेः। नाम प्रसिद्धौ। देहात्मवादिनामन्येषामपि देहस्यैव जन्मादि, नात्मनः, तस्य नित्यत्वादिति प्रसिद्धम्। मनःकल्पितं मनसा सङ्कल्पविकल्पात्मिकयान्तःकरणवृत्त्या कल्पितम् आरोपितम्। ऐक्याभ्यासशीलः यथा मृदादेरुत्पन्नस्य घटादेर्मृदाद्यात्मैकत्वं[2], तथा ब्रह्मण उत्पन्नत्वाद् ब्रह्मैवेदं सर्वं न ततः पृथक् किञ्चिदस्तीति चिन्तनशीलः सन् हृदयं बुद्ध्या निश्चयात्मिकयान्तःकरणवृत्त्या[3] यथाशक्ति यावद्बुद्धिबलम् इह चिन्तितेऽर्थे निरुन्ध्यां नियच्छेयम्। तस्मिन् हृदये मायाविद्धे मायाकार्यकामक्रोधादिराञ्जिते सति पुनरपि निगृहीतेऽपि हृदये तथा न भाति नैक्यज्ञानमवतिष्ठते। तत् तस्माद् मायाधिनाथं मायास्वामिनं त्वां महत्या अनपायिन्या भक्त्या प्रेमलक्षणया सततमनुभजन् यथावसरं सेवमानः भीतिं संसारभयं विजह्यां विशेषेण सर्वात्मना त्यजेयम्॥ ३ ॥

भक्त्यानुभजान्नित्युक्ते भक्तेरुत्पत्तिहेत्वपेक्षायामाह —

**भक्तेरुत्पत्तिवृद्धी तव चरणजुषां सङ्गमेनैव पुंसा-**
**मासाद्ये पुण्यभाजां श्रिय इव जगति श्रीमतां सङ्गमेन।**
**तत्सङ्गो देव! भूयान्मम खलु सततं तन्मुखादुन्मिषद्भि-**
**स्त्वन्माहात्म्यप्रकारैर्भवति च सुदृढा भक्तिरुद्धूतपापा॥ ४॥**

---

१. 'तं त्वां' ग. घ. पाठः. २. 'त्मत्वं' क. ग. पाठः. ३. 'कान्तः' क. ग. पाठः.

**भक्तेरिति**। उत्पत्तिश्च वृद्धिश्च उत्पत्तिवृद्धी तवेश्वरस्य चरणौ जुषन्ते सेवन्ते इति चरणजुषो भक्ताः, तेषां सङ्गमेन संसर्गेणैव पुंसां शरीरिणाम् आसाद्ये लब्धुं शक्ये, नान्योऽत्रोपाय इत्यर्थः। 'सत्सेवया विना कस्य विष्णुभक्तिः प्रजायत' इति वचनात्। तर्हि सत्सङ्गमः कथं स्यादित्यत आह—पुण्यभाजामिति। अनेकजन्मार्जितपुण्यसञ्चयानामेव सत्सङ्गमः स्यादिति भावः। अत्रानुरूपं दृष्टान्तमाह—श्रिय इवेति। यथा श्रियो धनधान्यादेरुत्पत्तिवृद्धी श्रीमतां[1] सङ्गमेनैवोत्पाद्ये, तथेत्यर्थः। हे देव! श्रीकृष्ण! मम खलु सततं तत्सङ्गः तेषां भक्तानां सङ्गः संसर्गः भूयात्। तन्मुखात् तेषां तव चरणजुषां मुखाद् उन्मिषद्भिः मिथस्त्वच्चरितप्रस्तावे[2]प्रादुर्भूतैः न तु तैरुपदिष्टैः। अनेन च तेषां भगवच्चरितवर्णनशीलत्वं व्यज्यते। त्वन्माहात्म्यप्रकारैः तव विष्णोर्माहात्म्यस्य प्रकारैः श्रवणकीर्तनस्मरणाद्या[3]श्रिततया मार्गभेदैः भवति श्रीकृष्णे सुदृढा अनपायिनी उद्धूतपापा यथा दूरतोऽपसारितातिमिरनिकर एव तरणिरुदेति, तद्वद् दूरोत्सारितदुरितनिचया प्रेमलक्षणा भक्तिश्च मम सततं भूयादित्यनुषज्यते ॥ ४ ॥

अथ सत्सङ्गमात्रेण स्वस्य साधनभक्तिद्वारा साध्यभक्त्युत्पत्तिप्रकारमुत्पश्यन् प्रथमं स्वस्य भक्तिमार्गेऽधिकारप्राप्तिमाह—

**श्रेयोमार्गेषु भक्तावधिकबहुमतिर्जन्मकर्माणि भूयो**
**गायन् क्षेमाणि नामान्यपि तदुभयतः प्रद्रुतं प्रद्रुतात्मा।**
**उद्यद्धासः कदाचित् कुहचिदपि रुदन् क्वापि गर्जन् प्रगाय-**
**न्नुन्मादीव प्रनृत्यन्नयि कुरु करुणां लोकबाह्यश्चरेयम् ॥ ५ ॥**

**श्रेयोमार्गेष्विति**। श्रेयसः पुरुषार्थस्य मार्गेषु प्राप्तिसाधनेषु कर्मज्ञानतपोदानव्रतादिषु मध्ये भक्तौ भक्तिमार्गे अधिका बहुमतिः श्रद्धा यस्य सोऽधिकबहुमतिः। सोऽयं भक्तिमार्गेऽधिक्रियत इति भावः। यदुक्तं—

"यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥"

---

१. 'धनिनां स' क. ग. पाठः.　२. 'वे प्रा' क. ग. पाठः.　३. 'णस्मरणनामकीर्तनाद्या' क. ग. पाठः.

इति। जन्मकर्माणि अवतारतच्चरितानि तन्निबन्धनानि नामानि च क्षेमाणि पुरुषार्थरूपाणि तदुपायभूतानीत्यर्थः। एतच्च जन्मादित्रयविशेषणम्। भूयः पुनः पुनर्गायन् कीर्तयन्। एतच्च स्मरणादीनामप्युपलक्षणम्। एवं साधन-भक्त्यनुष्ठानेन सञ्जातप्रेमलक्षणभक्तेः संसारधर्मातीतां गतिमाह—तदुभयत इति। जन्मकर्मकीर्तनान्नामकीर्तनाच्च हेतोरित्यर्थः। प्रद्रुतमतिशीघ्रं प्रद्रुतः द्रवीभूत आत्मा मनो यस्य स प्रद्रुतात्मा कदाचिद् उच्चद्धासः भक्तपराजितं भगवन्त-माकलय्य सहस्तताडनं हसतीत्यर्थः। कुहचिद् क्वचिद् रुदन्नपि एतावन्तं काल-मुपेक्षितोऽस्मीति रोदिति, अथवा भगवति चित्तस्यानेकाग्रताखेदात्। यद्वा तद्रूपसाक्षात्काराद्धर्षाश्रूणि[1] मुञ्चन्निति। क्वापि कदाचिद् गर्जन् अत्यौत्सुक्यादुच्चै-श्शब्दं कुर्वन् अतिहर्षेण प्रगायन् क्वचिच्च जितं जितमिति प्रनृत्यन् प्रकर्षेण सहस्ततालं सशिरःकम्पं नर्तनं कुर्वन्। किं तर्हि भक्तोऽयमिति परान् प्रति[2] प्रकाशयितुमेतदिति चेद्, नेत्याह—उन्मादीवेति। ग्रहगृहीत इवेत्यर्थः। अयि भगवन्! मयि करुणां कुरु, येनाहमेवं लोकबाह्यश्चरेयम्[3] अलौकिको भूत्वा चरेयम् ॥ ५ ॥

**भूतान्येतानि भूतात्मकमपि सकलं पक्षिमत्स्यान् मृगादीन्**
**मर्त्यान् मित्राणि शत्रूनपि यमितमतिस्त्वन्मयान्यानमानि ।**
**त्वत्सेवायां हि सिध्येन्मम तव कृपया भक्तिदार्ढ्यं विराग-**
**स्त्वत्तत्त्वस्यावबोधोऽपि च भुवनपते! यत्नभेदं विनैव ॥ ६ ॥**

**भूतानीति**। किञ्च भूतानि पृथिव्यादीनि पञ्चैतानि[4]। भूतात्मकं पाञ्च-भौतिकं सकलं चराचरात्मकमपि पक्षिमत्स्यान् मृगादीन् जलस्थलाद्याश्रितान् मर्त्यान् मित्राणि शत्रूनपि बन्धुशत्रूदासीनांश्च त्वन्मयानि त्वद्रूपाणीति यमित-मतिः एतानि सर्वाणि श्रीहरे रूपाणीति अनुसन्दधानः सन् आनमानि प्रणामं करवाणि। ननूक्तलक्षणा भक्तिर्योगिनामपि बहुजन्मसाध्या कथं भजनमात्रेणैकस्मिन् जन्मनि भवेदित्याशङ्क्याह—त्वत्सेवायां हि सिध्येदिति। सर्वकर्मणां समर्पणं,

---

१. 'र्षादश्रू' क. पाठः. २. 'ति बोधयि' क. पाठः. ३. 'ह्यः अ' क. ग. पाठः.
४. 'नि दृष्टश्रुतानि। भू' क. ग. पाठः.

जन्मकर्मणां नाम्नां च कीर्तनं, सर्वत्रेश्वरदृष्ट्या प्रणामश्चेह त्वत्सेवोच्यते। तस्यां सत्यां तव कृपावश्यंभाविनी। तया मम भक्तेरीश्वरप्रेम्णो दार्ढ्यं स्थैर्यं, ततो विरागो विषयविरक्तिः, ततस्त्वत्तत्त्वस्येश्वरयाथार्थ्यस्यावबोधः सम्यगनुभवः, एतत् त्रितयमपि च सिध्येत्। यत्नभेदं विनैवेति। त्वत्कृपायामेव मया यत्नः कार्यः। तस्यां जातायाम् एतत् त्रयं युगपदेव सिध्येदित्यर्थः ॥ ६ ॥

किञ्चैवमीश्वरकृपया भक्तिविरक्तिज्ञानेषु जातेषु भक्तकुलोत्तंसतां प्राप्नुयामित्याह—

**नो मुह्यन् क्षुत्तृडाद्यैर्भवसरणिभवैस्त्वन्निलीनाशयत्वा-**
**च्चिन्तासातत्यशाली निमिषलवमपि त्वत्पदादप्रकम्पः।**
**इष्टानिष्टेषु तुष्टिव्यसनविरहितो मायिकत्वावबोधा-**
**ज्ज्योत्स्नाभिस्त्वन्नखेन्दोरधिकशिशिरितेनात्मना सञ्चरेयम् ॥७॥**

**नो मुह्यन्निति।** नो मुह्यन् परवशतामगच्छन्। क्षुत्तृडाद्यैः भयतर्षकृच्छ्रादिभिः भवसरणिभवैः अनादिसंसारमार्गोत्थैः। त्वन्निलीनाशयत्वात् त्वयि ईश्वरे समाहितचित्तवृत्तित्वात्। किञ्च, चिन्ताया उपासनायाः सातत्यं सततमनुष्ठानं तदस्यास्तीति तथा। निमिषलवमपि निमेषकालस्यार्धमपि कालं त्वत्पदाद् भगवत्पादारविन्दभजनाद् अप्रकम्पः प्रमादरहितः इष्टानिष्टेषु सत्सु तुष्टिव्यसनविरहितः इष्टेषु पुत्रजन्मादिषु तुष्टिविरहितः अनिष्टेषु पुत्रमरणादिषु व्यसनविरहितः। मायिकत्वावबोधाद् शरीरादेर्भोग्यस्य मायानिर्मितत्वानुसन्धानात्। ज्योत्स्नाभिः शीतलाभिर्दीप्तिभिः। त्वन्नखेन्दोः त्वत्पादनखचन्द्रस्य। अधिकशिशिरितेन सन्तापराहित्यादतिशयेन सञ्जातानन्देन आत्मना मनसा उपलक्षितः सन् सञ्चरेयं वर्तेय ॥ ७॥

**भूतेष्वेषु त्वदैक्यस्मृतिसमधिगतौ नाधिकारोऽधुना चेत्**
**त्वत्प्रेम त्वत्कमैत्री जडमतिषु कृपा द्विट्सु भूयादुपेक्षा।**
**अर्चायां वा समर्चाकुतुकमुरुतरश्रद्धया वर्धतां मे**
**त्वत्संसेवी तथापि द्रुतमुपलभते भक्तलोकोत्तमत्वम् ॥८॥**

---

१. 'र्थ्यस्या' क. ग. पाठः. २. 'नु' घ. ङ. च. पाठः.

**भूतेष्विति।** एषु भूतेषूत्कृष्टेषु निकृष्टेषु मशकादिष्वपि जगदाश्रयस्याप्रच्युतैश्वर्यस्य तवेश्वरस्यैव जीवरूपेणावस्थानाद् यदैक्यं तस्य स्मृतिरनुसन्धानं तस्य समधिगतिः प्राप्तिः सर्वभूतेष्वन्तर्बहिश्च परिपूर्णतया भगवद्दृष्टिर्भागवतोत्तमधर्मः तत्प्राप्तौ ममाधुनाधिकारो न चेत् त्वयि ईश्वरे प्रेम, त्वत्केषु त्वदीयपुरुषेषु भक्तेष्विति यावद्, मैत्री सख्यं, जडमतिषु मूढेषु कृपा, द्विट्सु शत्रुषूपेक्षा च भूयात्। अत्रेश्वरादिषु भेददृष्टेरपि सद्भावादेते मध्यमभागवतधर्माः। तत्राप्यधिकारो न चेद् अर्चायां प्रतिमायां या समर्चा पूजा तस्यां कुतुकम् आग्रहः उरुतरया ईश्वरगुरुशास्त्रविषयया श्रद्धया विश्वासेन। तथा त्वत्संसेवी[1] अधमभक्तः। सोऽपि द्रुतम् अस्मिन् जन्मन्येव। उपलभते प्राप्नोति। अधमोऽपि क्रमादुत्तमभक्तो भविष्यतीत्यतोऽधमत्वमपि प्रार्थ्यत इति भावः॥ ८॥

'मायाविद्रे तु'(श्लो. ३) इत्युक्तेर्मायास्वरूपजिज्ञासायामाह —

**आवृत्य त्वत्स्वरूपं क्षितिजलमरुदाद्यात्मना विक्षिपन्ती**
**जीवान् भूयिष्ठकर्मावलिविवशगतीन् दुःखजाले क्षिपन्ती।**
**त्वन्माया माभिभून्मामयि भुवनपते! कल्पते तत्प्रशान्त्यै**
**त्वत्पादे भक्तिरेवेत्यवददयि विभो! सिद्धयोगी‡ प्रबुद्धः॥९॥**

**आवृत्येति।** त्वत्स्वरूपं तव स्वीयं रूपं ब्रह्म आवृत्य आवरणशक्त्याच्छाद्य। क्षितिजलमरुदादीत्यादिशब्देन स्थूलसूक्ष्मात्मकं भूतपञ्चकं चतुर्विधस्थूलशरीराणि ब्रह्माण्डं च गृह्यते। तत्तदात्मना[2] स्वरूपेण विक्षिपन्ती विक्षेपशक्त्याविर्भावयन्ती जीवान् शरीरिणः भूयिष्ठकर्मावलिविवशगतीन् भूयिष्ठानि काम्यनिषिद्धभेदेन बहुप्रकाराणि कर्माणि तेषाम् आवलिः समूहः तया तज्जन्यादृष्टवासना-

---

१. 'वी प्राकृतभ' क. पाठः. २. 'तदात्मना तत्स्व' क. ग. पाठः.

---

‡ "इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥"
(श्री. भा. स्क. ११ः अ. ३. श्लो. ३३) इति प्रबुद्धोक्तिः।

भ्यामिति भावः । विवशा अस्वतन्त्रा गतिः उच्चावचशरीरप्राप्तिर्येषां ते तथा । दुःखजाले संसारार्णवे क्षिपन्ती पातयन्ती त्वन्माया त्वदधीना माया मां त्वत्सेवकमपि माभिभूद् मद्बुद्धिमाक्रम्य त्वत्स्मृतिं मापनैषीत् । अयि भुवनपते! श्रीकृष्ण! तां वारयेति भावः । त्वत्पादे भक्तिरेव तत्प्रशान्त्यै तस्या मायायाः प्रहाणाय कल्पते उपायो भवति, नान्योऽस्त्युपाय इत्यवदत् । सिद्धयोगी सिद्धो जीवन्मुक्तः योगी चेति सिद्धयोगी नवयोगिष्वन्यतमः । योगिषु मध्ये ज्ञातृज्ञेयज्ञानरहितत्वात् प्रबुद्ध इति संज्ञा । स हि विदेहाय राज्ञे "तैन्माययातो बुध आभजेत् तं भक्त्यैकयेशम्" (श्री. भा. स्क. ११. अ. २. श्लो. ३७) इति मायातारकत्वेन भक्तिमेवावोचत् ॥ ९ ॥

अथ वैराग्यविवेकद्वारा गुरूपसत्तिलब्धभाक्तिज्ञानसमुच्चयेन मायाजयप्रकारमाह —

**दुःखान्यालोक्य जन्तुष्वलमुदितविवेकोऽहमाचार्यवर्या-**
**ल्लब्ध्वा त्वद्रूपतत्त्वं गुणचरितकथाद्युद्भवद्भक्तिभूमा ।**
**मायामेनां तरित्वा परमसुखमये त्वत्पदे मोदिताहे**
**तस्यायं पूर्वरङ्गः पवनपुरपते! नाशयाशेषरोगान् ॥ १० ॥**

**दुःखानी**ति । जन्तुषु सदैव दुःखपरिहाराय सुखप्राप्तये च प्रयतमानेषु शरीरिषु तत एव जातानि दुःखान्यालोक्य अलम् अतिशयेन उदितविवेकः यथेह पुत्रमित्रधनादयः सुखसाधनत्वेनाभिमन्यमानाः दुःखमेव जनयन्ति कर्मनिर्मितत्वाद्, एवं स्वर्गेऽपीत्युत्पन्नविविक्तज्ञानः सन् अहमाचार्येषु ज्ञानविज्ञानसम्पन्नेषु वर्यः परोपदेशकुशलः तस्मात् त्वद्रूपस्य ईश्वरस्वरूपस्य तत्त्वं सम्यग्ज्ञानं लब्ध्वा अवाप्य गुणचरितानां गुणानां भक्तवात्सल्यादिभगवद्गुणानां तच्चरितानां च कथा कथनम् । आदिशब्देन कीर्तनादि गृह्यते । गुणचरितकथादिभिः उद्भवन् भक्तेर्भूमा बाहुल्यम् अनपायित्वं यस्य स तथा । एनामित्युक्तिर्मायाकार्यस्य रागादेरनुभूय-

---

१. 'त्तश्चासौ यो' क. ग. पाठः.

---

* इयं तु कविनाम्नः सिद्धयोगिन उक्तिः ।

मानत्वाद् । तांस्त्वा अतिक्रम्य परमसुखमये निरतिशयानन्दस्वरूपे त्वत्पदे पद्यत इति पदं ब्रह्म त्वत्स्वरूपे ब्रह्मणीत्यर्थः । अथवा परमसुखमये निरतिशयानन्दजनके त्वत्पदाब्जे मोदिताहे प्रसन्नो भवितास्मि भक्तजनैः सह भागवतधर्माभ्यासेन सेविष्य इति भावः । तस्य मोदस्य अयं मायाजयः पूर्वरङ्गः कारणत्वेन प्रथममनुष्ठेयः । यदाह बोप्पदेवः— 'मायाजयोऽपरा भक्तिर्ज्ञानकर्मसमुच्चयाद्' इति । यद्वा तस्य मायातरणादेर्मदनुष्ठेयस्यार्थस्य अयं मयासकृत् प्राथ्र्यमानो मद्रोगनाशः पूर्वरङ्गः नाटकप्रयोगे नान्द्यादिवत् प्रथममवश्यं निर्वर्त्यः । स च त्वत्करुणैकायत्त इति त्वामेव प्रार्थयामीत्याशयेन प्रार्थयते— पवनपुरपते! इति ॥ १० ॥

इति भक्तेरेव निःश्रेयसावाप्तिहेतुत्ववर्णनं, भक्तिस्वरूपतत्कार्यवर्णनं च

**एकनवतितमं दशकम् ।**

---

ननु सर्वकर्मणां भगवद्धर्मत्वापादनाय विना फलानुसन्धानमीश्वरसमर्पणेनानुष्ठानमुक्तम् । तदनुपपन्नं, स्वर्गाद्यर्थमेव ज्योतिष्टोमादीनां विहितत्वात् फलकामस्यैव च तत्राधिकारादित्याशङ्क्य वेदस्य परोक्षवादत्वात् तात्पर्यं दुर्ज्ञेयमित्यभिप्रायेण परिहरति —

**वेदैः सर्वाणि कर्माण्यफलपरतया वर्णितानीति बुद्ध्वा**
**तानि त्वय्यर्पितान्येव हि समनुचरन् यानि नैष्कर्म्यमीश! ।**
**मा भूद् वेदैर्निषिद्धे कुहचिदपि मनःकर्मवाचां प्रवृत्ति-**
**र्दुर्वर्जं चेदवाप्तं तदपि खलु भवत्यर्पये चित्प्रकाशे ॥ १ ॥**

वेदैरिति । वेदैः विधिवाक्यैः सर्वाणि ज्योतिष्टोमादीनि कर्माणि अफलपरतया वर्णितानि न फलसाधनत्वेन विहितानि, किन्तु नैष्कर्म्यार्थं विहितानि । फलश्रुतिस्तु रोचनार्था । यथा माता बालमौषधं पाययन्ती गुडशर्करादिभिः प्रलोभयन्ती पाययति, ददाति च गुडशर्करादि । नैतावतौषधपानस्य तल्लाभः प्रयोजनम्, अपि तु रोगनिवृत्तिः, तथा वेदोऽप्यवान्तरफलैः प्रलोभयन् कर्ममोक्षायैव कर्म विदधातीति बुद्ध्वा तानि फलपरत्वेन श्रुतान्यपि । एवकारेण फलाभिसन्धिर्व्यावर्त्यते । ननु यदि नैष्कर्म्यं कर्मणां फलं, तर्हि प्रथममेव कर्म त्यज्यतामित्याश-

ज्ञायाम् एवं सति विकर्मलक्षणेनाधर्मेण पततीत्यभिप्रायेणाह — समनुचरन्निति। नैष्कर्म्यं कर्मनिवृत्तिसाध्यं ज्ञानं यानि प्राप्नुयामित्यर्थः। वेदैरिति स्मृत्यादेरप्युपलक्षणम्। निषिद्धे अभक्ष्यभक्षणादौ कुहचिदपि[1] अल्पदुष्कृतेष्वपि कर्मसु मनःकर्मवाचां प्रवृत्तिः मा भूत्। दुर्वर्जे[2] वर्जयितुमशक्यं यद् निषिद्धकर्म, तच्चेदवासम् अनुष्ठितं तर्हि तदपि भवति चित्प्रकाशे ब्रह्मणि अर्पये मन्त्रपुरस्सरं समर्पयामीत्यर्थः॥ १॥

वैदिकं कर्मयोगमुक्त्वा तान्त्रिकमाह —

**यस्त्वन्यः कर्मयोगस्तव भजनमयस्तत्र चाभीष्टमूर्तिं**
**हृद्यां सत्त्वैकरूपां दृषदि हृदि[3] मृदि क्वापि वा भावयित्वा।**
**पुष्पैर्गन्धैर्निवेद्यैरपि च विरचितैः शक्तितो भक्तिपूतै-**
**र्नित्यं वर्यां सपर्यां विदधदयि विभो! त्वत्प्रसादं भजेयम्॥ २॥**

यस्त्विति। अन्यः वैदिकादन्यस्तान्त्रिकः तव भजनमयः त्वत्पूजारूपः आशु त्वत्प्रसादजनकः। अभीष्टां श्रीनारायणवासुदेवादिरूपां मूर्तिं हृद्याम् अतिमनोहरवेषविशिष्टां सत्त्वैकरूपां शुद्धसत्त्वमयीं दृषदि शिलामय्यां मृदि लेप्यायां हृदि मनोमय्यां क्वापि कांस्यरजतसुवर्णादिप्रतिमायां वा। यथोक्तं—

"शैली दारुमयी लौही लेप्या लेख्या च सैकती।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता॥"
(श्री. भा. स्क. ११. अ. २७. श्लो. १२)

इति। भावयित्वा तव मूर्तिं सङ्कल्प्य विरचितैः सम्पादितैः शक्तितः यथाशक्ति "पत्रं पुष्पं फलम्"(गी. ९. २६) इत्यादिवचनात्। भक्तिपूतैः पुष्पादिभिः नित्यं नियमेन त्रिकालं वा वर्यां 'पुंसि जायालयः पूजे'त्युक्तरीत्या ईश्वरे स्वशरीरारम्भकार्यकारणलक्षणप्रकृतिलयात्मकतया श्रेष्ठां सपर्यां पूजां विदधत् कुर्वन्॥ २॥

---

१. 'पि कुत्रापि अ' क. ग. पाठः. २. 'ति त्वयि चि' क. पाठः. ३. 'मृदि हृदि' व्याख्यानुसारी पाठः.

सम्प्रति भक्तिदार्ढ्याया भक्तानामनिष्टां गतिं वर्णयति 'स्त्रीशूद्रा' इति द्वाभ्यां —

**स्त्रीशूद्रास्त्वत्कथादिश्रवणविरहिता आसतां ते दयार्हा-**
**स्त्वत्पादासन्नयातान् द्विजकुलजनुषो हन्त शोचाम्यशान्तान् ।**
**वृत्त्यर्थं ते यजन्तो बहुकथितमपि त्वामनाकर्णयन्तो**
**दृप्ता विद्याभिजात्यैः किमु न विदधते तादृशं मा कृथा माम् ॥३॥**

**स्त्रीशूद्रा** इति । आदिशब्देन नामादि गृह्यते । श्रवणं कीर्तनादेरप्युपलक्षणम् । त्वत्कथाश्रवणत्वन्नामकीर्तनत्वत्स्मरणादिविरहिता इत्यर्थः । ¹एतच्चाज्ञानाद्, नानधिकारात् । 'भक्तिश्चेच्छूद्रयोषितामि'ति वचनात् । अत एव ते दयार्हाः सद्भिर्दयया सुखं बोधनीयाः । ते तावत् तिष्ठन्त्विति भावः । त्वत्पादासन्नयातान् उपनयनादिसंस्कारैरर्थावबोधपर्यन्तेनाध्ययनेन च त्वत्पादभजनाधिकारं प्राप्तान् द्विजानां त्रैवर्णिकानां कुले जनुर्जन्म येषां तान् अशान्तान् विषयपरान् हन्त शोचामि । ज्ञानलवदुर्विदग्धतया बोधयितुमशक्या एते इति मम खेद इति भावः । वृत्त्यर्थम् उदरभरणार्थं यजन्तः पशुहिंसां कुर्वन्तः बहुकथितमपि श्रुत्यादिषु सगुणनिर्गुणभेदेन प्रतिपादितमपि त्वाम् ईश्वरम् अनाकर्णयन्तः शृण्वन्तोऽप्यश्रद्धानतया श्रवणफलमनासादयन्तः । अत्र हेतुमाह — दृप्ता विद्याभिजात्यैः । 'विद्यामदो धनमदस्तृतीयोऽभिजनो मद' इत्युक्तमदत्रययुक्ताः किमु न विदधते किं न कुर्वन्ति । आभिचारसज्जननिन्दाद्यपि कुर्वन्त्येवेत्यर्थः । मां तादृशम् आत्महनं मा कृथाः ॥३॥

सन्निन्दामेव प्रपञ्चयति —

**पापोऽयं कृष्ण! रामेत्यभिलपति निजं गूहितुं दुश्चरित्रं**
**निर्लज्जस्यास्य वाचा बहुतरकथनीयानि मे विघ्नितानि ।**
**भ्राता मे वन्ध्यशीलो भजति किल सदा विष्णुमित्थं बुधांस्ते**
**निन्दन्त्युच्चैर्हसन्ति त्वयि निहितरतींस्तादृशं मा कृथा माम् ॥४॥**

**पाप** इति । अयं पापः परद्रव्यापहारी । तत् कथमवगम्यते, कृष्ण! रामेत्य-

---

१. 'एतच्च तच्चाज्ञानानाधि' क. पाठः. २. 'क्था हि ते' क. पाठः.

भिलपति । तच्च निजं स्वेनानुष्ठितं दुश्चरित्रं मोषणादि गूहितुं साधुरयं तादृशं न करोतीत्यस्मान् प्रतिबोध्यापह्नोतुम् । अस्य निर्लज्जस्य हरिभक्तेरन्यत् सारं नास्तीत्याद्यस्मत्सन्निधौ लज्जां निर्जित्य जल्पतोऽस्य वाचा हेतुना मे बहुतराणि कथनीयानि बन्धुभिर्निरूपणीयानि कार्यजातानि विघ्नितानि । ननु तस्मिन् कर्मणि भ्राता किं न नियुज्यत इति चेत् तत्राह—भ्राता मे वन्ध्यशील इति । वन्ध्यं निष्फलं शीलं यस्य स तथा । तेन ममोपकारो नास्तीति भावः । सदा विष्णुं भजति किल पुष्पाञ्जलिनमस्कारनामकीर्तनादि करोति । तत् किल विष्णुभजनम् । तेन तस्य मम वा किं स्यात् । इत्थं ते अशान्ताः बुधान् भक्तान् निन्दन्ति । त्वयि ईश्वरे निहिता स्थिरीकृता रतिः प्रेमलक्षणा भक्तिर्यैस्तान् उच्चैर्हसन्ति त्वद्दास्यादिप्रार्थनामन्यैः सह परिहसन्ति । एतेषां कदाचिदपि संसारनिवृत्त्यसंभवाद् मां तादृशं मा कुथाः ॥ ४ ॥

युगानुरूपं सेवाप्रकारमाह—

**श्वेतच्छायं कृते त्वां मुनिवरवपुषं प्रीणयन्ते तपोभि-**
**स्त्रेतायां स्रुक्स्रुवाद्यङ्कितमरुणतनुं यज्ञरूपं यजन्ते ।**
**सेवन्ते तन्त्रमार्गैर्विलसदरिगदं द्वापरे श्यामलाङ्गं**
**नीलं सङ्कीर्तनाद्यैरिह कलिसमये मानुषास्त्वां भजन्ते ॥ ५ ॥**

**श्वेतच्छायमिति ।** श्वेतच्छायं शुक्लवर्णं कृते कृतयुगे मुनिवरवपुषम् । अत्र मुनिशब्देन ब्रह्मचारी विवक्ष्यते, जटावल्कलकृष्णाजिनोपवीताक्षमालादण्डकमण्डल्वादीन् बिभ्रतमित्यर्थः । त्वां चतुर्बाहुं तपोभिः ध्यानमार्गैः प्रीणयन्ते प्रसादयन्ति । मानुषा इति सर्वत्रानुषज्यते । त्रेतायां त्रेतायुगे स्रुक्स्रुवाद्यङ्कितं स्रुग् जुहूः स्रुवश्च तदादिभिः कराग्रस्थितैः अङ्कितम् उपलक्षितं यजन्ते । वैदिकैः कर्मभिरिति शेषः । द्वापरे तन्त्रमार्गैः पूजाप्रकारैः सेवन्ते पूजयन्ति । विलसदरिगदं विलसन्त्यौ

---

१. 'त्यस्म' क. पाठः. २. 'णि तर्हि भ्रा' क. ग. पाठः. ३. 'वः । किञ्च स' क. ग. पाठः. ४. 'मसङ्कीर्त' क. पाठः. ५. 'नायाम' क. ग. पाठः. ६. 'त्त्यभा' क. ग. पाठः. ७. 'गैः प्र' ख. पाठः. ८. 'तम् अरुणतनुं य' क. ग. पाठः.

अरिगदे यस्य तम्। एतच्चान्यायुधानामप्युपलक्षणम्। श्यामलाङ्गम् अतसीकुसुमच्छायम्। इह कलिसमये नीलं कृष्णवर्णम्। सङ्कीर्तनं नामोच्चारणम्[१] आद्यं प्रधानं येषां तैः भजन्ते सेवन्ते ॥ ५ ॥

तत्र कलौ सेवासौकर्यमाह पञ्चभिः—

**सोऽयं कालेयकालो जयति मुररिपो! यत्र सङ्कीर्तनाद्यै-**
**र्निर्यत्नैरेव मार्गैरखिलद! नचिरात् त्वत्प्रसादं भजन्ते।**
**जातास्त्रेताकृतादावपि हि किल कलौ सम्भवं कामयन्ते**
**दैवात् तत्रैव जातान् विषयविषरसैर्मा विभो! वञ्चयास्मान् ॥ ६ ॥**

**सोऽयमिति।** स पूर्वोक्तः अयं वर्तमानः कलेरयं कालेयः कालो जयति इतरयुगेभ्य उत्कृष्टो भवति। यत्र कलियुगे निर्यत्नैः यत्नविरहितैः सङ्कीर्तनाद्यैर्मार्गैरुपायैरेव नचिरात् शीघ्रं त्वत्प्रसादं भजन्ते लभन्ते। ननु कृतादिषु जाता अप्येवंवादिनः, नेत्याह—जाता इति। हिशब्दसहितः किलशब्दोऽस्यार्थस्य पुराणादिप्रसिद्धिं द्योतयति। दैवात् सुकृतपरिपाकेन तत्र कलावेव जातानस्मान् विषयविषरसैः विषया एव विषरसा विषद्रवाः, यस्मात् तदुपयोगे मोहं गच्छेयुः। तैर्मा वञ्चय ॥ ६ ॥

**भक्तास्तावत् कलौ स्युर्द्रमिलभुवि ततो भूरिशस्तत्र चोच्चैः**
**कावेरीं ताम्रपर्णीमनु किल कृतमालां च पुण्यां प्रतीचीम्।**
**हा मामप्येतदन्तर्भवमपि च विभो! किञ्चिदञ्चद्रसं त्व-**
**य्याशापाशैर्निबध्य भ्रमय न भगवन्! पूरय त्वन्निषेवाम् ॥ ७ ॥**

**भक्ता इति।** तावत् प्रथममेव कलौ भक्ताः भूरिशः तत्र तत्र बहवः स्युः[२], ततस्तत्र कलावपि द्रमिलभुवि भूरिशः। तत्र च द्रमिलविषयेऽपि पुण्यां कावेर्यादिनदीमनु तत्तीरेषु उच्चैः ततोऽप्यधिकाः स्युः[३]। कावेर्यादीनां जलं ये पिबन्ति, तेऽतीव

---

१. 'सङ्कीर्तनम्' क. पाठः. २. 'स्युः। तत्र' ख. ग. पाठः. ३. 'कं स्युः' ख. पाठः.

भक्ता भवन्तीति भावः। एतदन्तर्भवं द्रमिलविषयान्तःपातिनम्[1] अपिच त्वयि किञ्चिद्दृश्वद्रसम् ईषदारब्धभक्तिं मां न भ्रमय ॥७॥

दृष्ट्वा धर्मद्रुहं तं कलिमपकरुणं प्राङ् महीक्षित् परीक्षि-
द्धन्तुं व्याकृष्टखड्गोऽपि न विनिहतवान् सारवेदी गुणांशात्।
त्वत्सेवाद्याशु सिध्येदसदिह न तथा त्वत्परे चैष भीरु-
र्यत्तु प्रागेव रोगादिभिरपहरते तत्र हा शिक्षयैनम् ॥८॥

दृष्ट्वेति। प्राक् पुरा परीक्षिन्नाम महीक्षिद् राजा धर्मद्रुहं वृषरूपिणं धर्मं दण्डेन प्रहरन्तं तं[2] कलिं दृष्ट्वा हन्तुं व्याकृष्टखड्गोऽपि गुणांशाद्[3] न विनिहतवान्। ननु गुणांशे सत्यपि धर्मद्रुहं किं न निहतवानित्यत्राह—सारवेदीति। अल्पत्वेऽपि गुणस्य सारांशत्वं जानन्नित्यर्थः। तदेवाह—त्वत्सेवादीति। अर्चननामकीर्तनादि आशु इह जन्मन्येव सिध्येद् भक्तिद्वारा मुक्तिमुत्पादयेत्। असद् दुष्कर्म तु इह कलौ न तथा नाशु सिध्येत्। किञ्च, त्वत्परे त्वद्भक्तविषये चैष कलिर्भीरुः ईश्वरविमुखेष्वेव कलिः प्रभवतीति भावः। किञ्च, प्रागेव त्वत्सेवाद्यारम्भात् पूर्वमेव रोगादिभिरपहरते त्वद्भजनान्निवर्तयतीति[4] तु यत् हा मम तु तदेवापतितम्[5]। तत्र अपहरणे एनं कलिं शिक्षय। यथा त्वत्सेवायामुद्युक्तात् कलिर्दूरतोऽपसरति, तथैनं कुर्विति भावः ॥८॥

गङ्गा गीता च गायत्र्यपि च तुलसिका गोपिकाचन्दनं तत्
सालग्रामाभिपूजा परपुरुष! तथैकादशी नामवर्णाः।
एतान्यष्टाप्ययत्नान्ययि[6] कलिसमये त्वत्प्रसादप्रवृद्ध्या
क्षिप्रं मुक्तिप्रदानीत्यभिदधुरृषयस्तेषु मां सज्जयेथाः ॥९॥

गङ्गेति। त्वत्प्रसादप्रवृद्ध्या तद्द्वारेण मुक्तिप्रदान्येतानीत्यत्र स्मृतिप्रमाणत्वमाह—अभिदधुरृषय इति ॥९॥

---

१. 'म् अपि त्व' ख. पाठः. २. 'तम् उक्तगुणं क' क. ग. पाठः. ३. 'हेतुभूताद् न' क. ग. पाठः. ४. 'ति य' क. पाठः. ५. 'य ॥' क. ख. पाठः. ६. 'अष्टावेतान्ययं' क. पाठः.

ननु त्रिभिः ऋणैर्जातस्य तदनपाकरणे कथं मुक्तिः स्यादित्यत आह—

देवर्षीणां पितॄणामपि न पुनर्ऋणी किङ्करो वा स भूमन्!
योऽसौ सर्वात्मना त्वां शरणमुपगतः सर्वकृत्यानि हित्वा।
तस्योत्पन्नं विकर्माप्यखिलमपनुदस्येव चित्तस्थितस्त्वं
तन्मे पापोत्थतापान् पवनपुरपते! रुन्धि भक्तिं प्रणीयाः ॥ १० ॥

देवर्षीणामिति। देवानाम् ऋषीणां पितॄणामपि, यथा अभक्त ऋणी अधमर्णो भवति। अत एव तदपाकरणाय यज्ञाध्ययनपुत्रोत्पादनादि तेन कर्तव्यमिति तेषां किङ्करश्च भवति। तथाच स्मृतिः "हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्"(याज्ञ. अ. २. श्लो.४३) इति। स भक्तः पुनर्ऋणी किङ्करो वा न भवति। तत्र हेतुमाह — योऽसाविति। यः पुरुषः सर्वात्मना सर्वभावेन त्वां शरणमुपगतः सर्वकृत्यानि विहितसकलकर्माणि हित्वा। ननु तर्हि सर्वात्मना निषिद्धकर्मणोऽपरिहार्यत्वात् प्रायश्चित्तादिकर्म कर्तव्यं, नेत्याह—तस्येति। विकर्म निषिद्धकर्मणः फलं तस्य त्वां शरणं गतस्य तावन्न संभवति। यदि प्रमादादिना भवेत्, तर्हि तदपीत्यपिशब्दार्थः। अखिलं निरवशेषम् अपनुदसि नाशयसि। ननु नास्य पापक्षयार्थं भगवदुपासनम्, अत आह—चित्तस्थितस्त्वमिति। न हि वस्तुशक्तिरर्थितामपेक्षते कार्योत्पादनाय, यथा ह्यौषधं फलार्थिनामफलार्थिनामप्यविशेषेणारोग्यादि जनयति तथेति भावः। तत् तस्माद् यस्माच्चित्तस्थः पापमपनुदसि, पापोत्थान् पापकर्मजनितान् तापान् दुरितानि रुन्धि वारय। भक्तिं प्रणीयाः अनपायिनीं कुर्याः ॥ १० ॥

इति कर्ममिश्रभक्तिस्वरूपवर्णनं द्विनवतितमं दशकम्।

---

१. 'वातोत्थ' घ. पाठः. २. 'नु स' ख. पाठः. ३. 'सि। ना' ग. पाठः.

एवं विंशत्या श्लोकैः कर्ममिश्रां भक्तिं निरूप्य अनन्तरं ज्ञानमिश्रां निरूपयिष्यन् प्रथमं तदधिकारप्राप्तिमाह—

**बन्धुस्नेहं विजह्यां तव हि करुणया त्वय्युपावेशितात्मा**
**सर्वं त्यक्त्वा चरेयं सकलमपि जगद् वीक्ष्य मायाविलासम् ।**
**नानात्वाद् भ्रान्तिजन्यात् सति खलु गुणदोषावबोधे विधिर्वा**
**व्यासेधो वा कथं तौ त्वयि निहितमतेर्वीतवैषम्यबुद्धेः ॥ १ ॥**

**बन्धुस्नेहमिति** । बन्धुषु पुत्रमित्रकलत्रादिषु स्नेहं यतस्त्वन्मायाकृतम् अतस्तव कृपया विजह्यां त्यजेयम् । हिशब्दस्तद्धाने साधनान्तरराहित्यं दर्शयति । ततस्त्वत्कृपयैव त्वयि उपावेशितात्मा समाहितचित्तः सन् जगद् मायाविलासं त्वन्मायाकल्पितं वीक्ष्य अवगम्य त्वदुपासनातोऽन्यत् सर्वं कर्म विधिनिषेधभेदमपि त्यक्त्वा चरेयमिति गृहाद्यनपेक्षा द्योत्यते । ननु विहितस्य कर्मणोऽननुष्ठानं न युक्तं, पापोत्पत्तौ प्रायश्चित्तमपि कार्यमेवेत्याशङ्क्य कर्मणामविद्वदधिकारित्वेन विदुषस्तदकरणे न दोष इत्याह—नानात्वादिति । मनुष्योऽहमिति देहे अहमभिमानो भ्रान्तिः । तज्जन्यं नानात्वं वर्णाश्रमादिभेदः । तत्सत्यताङ्गीकार एव गुणदोषौ नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद् गुणः, हिंसादि दोषः, पापक्षयसाधनत्वात् कृच्छ्रचान्द्रायणादि गुणः इत्यादिगुणदोषावबोधे सत्येव विधिर्व्यासेधो निषेधो वा भवेत् । त्वयि निहितमतेः ब्रह्मैवेदं सर्वमिति निश्चितबुद्धेः अत एव वीतवैषम्यबुद्धेः त्यक्तनानात्वभ्रमस्य मम तु कथं तौ विधिनिषेधौ स्याताम् । अतो विधिनिषेधानधिकारात् सर्वं त्यक्त्वा चरेयमित्यर्थः । एवञ्च विधिनिषेधातीतो ज्ञानमिश्रायां भक्तावधिकारीत्यपि दर्शितम् । तदुक्तं मुक्ताफले "ज्ञानमिश्रैका भिक्षूणाम्" इति ॥ १ ॥

एतत् सर्वं पुरुषशरीरेणैव साध्यमिति वक्तुं तिर्यगादिदेहेभ्यः पुरुषतनुरुत्कृष्टेति पुरुषत्वं स्तौति—

---

१. 'त् त्व' ख. पाठः. २. 'क्षता द्यो' क. ग. पाठः. ३. 'म क' क. पाठः.

क्षुत्तृष्णालोपमात्रे सततकृतधियो जन्तवः सन्त्यनन्ता-
स्तेभ्यो विज्ञानवत्त्वात् पुरुष इह वरस्तज्जनिर्दुर्लभैव ।
तत्राप्यात्मात्मनः स्यात् सुहृदपि च रिपुर्यस्त्वयि न्यस्तचेता-
स्तापोच्छित्तेरुपायं स्मरति स हि सुहृत् स्वात्मवैरी ततोऽन्यः ॥२॥

क्षुत्तृष्णेति । क्षुत्तृष्णयोः अशनायापिपासयोः लोपः तृणकबलनजलपानादि एतावन्मात्रे सततं कृतधियो निश्चितबुद्धयः जन्तवः पश्वादयः अनन्ताः बहवः सन्ति । तेभ्यः विज्ञानवत्त्वाद् आत्मदर्शनसामर्थ्येन इह भूमौ पुरुषो मनुष्यः वरः श्रेष्ठः । तज्जनिर्मनुष्यजन्म । तत्रापि मनुष्येष्वपि आत्मैवात्मनः सुहृद् उपकारी रिपुः अपकारी च । विवेकमाह[2]—यस्त्वयि न्यस्तचेताः अत एव तापोच्छित्तेः मोक्षस्य उपायं साधनं स्मरति जानाति, तथाविधश्चेदात्मा स्वयमेव आत्मनः स्वस्य सुहृद् बन्धुः स्यात् । ततोऽन्यः नैवंविधः स आत्मवैरी आत्महा ॥२॥

नन्वात्मैवात्मनो गुरुरित्युक्तं तदसङ्गतमित्याशङ्क्य यद् यस्याज्ञाननाशहेतुः स तस्य गुरुरितीह विवक्षितत्वात् स्थिरचराणामपि तद्धेतुत्वाद् गुरुत्वमूरीकरणीयं, किं पुनरात्मन इति परिहरन् पृथिव्यादिभ्यो गुरुभ्यः शिक्षणीयानि क्षमादीन्यात्मनः प्रार्थयते—

त्वत्कारुण्ये प्रवृत्ते क इव न हि गुरुर्लोकवृत्तेऽपि भूमन्[3] !
सर्वाक्रान्तापि भूमिर्न हि चलति ततः सत्क्षमां शिक्षयेयम् ।
गृह्णीयामीश ! तत्तद्विषयपरिचयेऽप्यप्रसक्तिं समीराद्
व्याप्तत्वं चात्मनो मे गगनगुरुवशाद् भातु निर्लेपता च ॥ ३ ॥

---

१. 'नेच्छापि' ग. पाठः. २. 'शेषमा' क. पाठः. ३. विभूमन्निति व्याख्यासम्मतः पाठः.

**त्वत्कारुण्य** इति । क इव नहि गुरुः, न केवलमात्मैव, पृथिव्यादिपदार्था अपि गुरव एवेति भावः । किमेभ्यः शिक्षणीयं, तदाह—लोकवृत्त इति । लोकाः स्थिरचरादयः तेषां वृत्तं क्षमानिस्सङ्गत्वालेपकत्वादिस्वभावः । तत्रैते गुरव इत्यर्थः । हे विभूमन्! विष्णो! भूमिः सर्वैः खलैराक्रान्तापि न चलति हि । ततः भूमेः सत्क्षमां स्वमार्गादचलनरूपां शिक्षयेयं कर्तव्यतयावगच्छेयम् । तत्तद्विषयैर्गुणवद्भिर्दोषवद्भिश्च परिचये सम्पर्के सत्यप्यप्रसक्तिम् असङ्गत्वं समीराद् गृह्णीयां शिक्षयेयम् । आत्मनः शरीरपरिच्छिन्नतया प्रतीयमानस्य व्याप्तत्वं सर्वशरीरेष्वन्तर्बहिश्च व्याप्तत्वम् । मे गगनगुरुवशादिति । गगनं हि घटादिपरिच्छिन्नतया प्रतीयमानमपि बहिरन्तश्च व्याप्तम् । किञ्च, निर्लेपता शरीरस्थत्वेऽपि तत्स्पर्शरहितो निर्लेपः, तस्य भावो निर्लेपता । सा च गगनगुरुवशादेव मे भातु । यथा गगनं मेघादिभिर्न स्पृश्यते तथेति ॥ ३ ॥

जलानलशशिरविभ्यः शिक्षणीयमाह—

**स्वच्छः स्यां पावनोऽहं मधुर उदकवद् वह्निवन्मा स्म गृह्णां**
**सर्वान्नीनोऽपि दोषं तरुषु तमिव मां सर्वभूतेष्ववेयाम् ।**
**पुष्टिर्नष्टिः कलानां शशिन इव तनोर्नात्मनोऽस्तीति विद्यां**
**तोयादिव्यस्तमार्तण्डवदपि च तनुष्वेकतां त्वत्प्रसादात् ॥ ४ ॥**

**स्वच्छ** इति । अहमुदकवत् स्वच्छो निर्मलः पावनः दर्शनमात्रेण पापशोधकः मधुरो मधुरालापी च स्याम् । सर्वान्नीनः सर्वभक्षोऽपि वह्निवद् दोषं[1] मा स्म गृह्णां पापं नादद्याम्§ । अग्नेर्ग्राह्यान्तरमाह—तरुष्विति । तरुषु काष्ठेषु तमग्निमिव यथा काष्ठेषु प्रविष्टोऽग्निः काष्ठसमानरूपो ह्रस्वदीर्घस्थूलसूक्ष्मादिरूपोऽवगम्यते, तथा माम्[2] आत्मानमपि सर्वभूतेषु सुरनरातिर्यगादिशरीरेषु तदुपाधिवशात् तत्तत्समानरूपोऽवगम्यत इति अवेयाम् अवगच्छेयम् । शशिनः शिक्षणीयमाह—

१. 'षं पा' ख. पाठः. २. 'ममात्मापि स' क. पाठः.

§ आदद्यामित्यस्य स्थाने 'आददीय' इति साधु ।

पुष्टिरिति । पूर्वपक्षप्रतिपदमारभ्य क्रमाद् दूरे[1]स्थितस्यादित्यमण्डलस्य पञ्चदशः पञ्चदशो भागो जलमये चन्द्रमण्डले प्रतिबिम्बितो दृश्यते । ते प्रतिबिम्बाश्चन्द्रस्य कला इत्युच्यन्ते । यथा तासामेव पुष्टिं नष्टिं च विद्यां, न शशिनः, तद्वत् तनोरेव जन्मास्तित्वविपरिणामविवृद्ध्यपक्षयविनाशरूपाः षड् भावविकाराः, न त्वात्मन इति विद्यामित्यर्थः । आदित्यदृष्टान्तेनावगन्तव्यमाह—तोयादीति । यथैको[2] मार्तण्डोऽनेकेषु घटोदकादिषु व्यस्तोऽनेको दृश्यते, तद्वत् तनुषु सर्वशरीरेषु आत्मन उपाधिभेदेन भेदप्रतीतावप्येकतामपि[3] च विद्याम् । त्वत्प्रसादादिति सर्वत्र[4] योज्यम् ॥

**स्नेहाद् व्याधास्तपुत्रप्रणयमृतकपोतायितो मा स्म भूवं**
**प्राप्तं प्राश्नन् सहेय[5] क्षुधमपि शयुवत् सिन्धुवत् स्यामगाधः ।**
**मा पप्तं योषिदादौ शिखिनि शलभवद् भृङ्गवत् सारभागी**
**भूयासं किन्तु तद्वद् धनचयनवशान्माहमीश प्रणेशम्* ॥ ५ ॥**

**स्नेहादिति** । स्नेहः सन्तापहेतुरिति कपोताद् ग्राह्यमित्याह—स्नेहादिति । व्याधेन लुब्धकेन अस्तेषु निगृहीतेषु पुत्रेषु प्रणयेन मृतो यः कपोतः स इवाचरतीति तथा । कश्चिद् वनेचरो नीडान्तिके सञ्चरतः पक्षिणो जालमातत्य प्रतिपालयामास । तत्र प्रथममजानन्तः कपोतशिशवो जालेनावृताः । तान् दृष्ट्वा कपोती च दुःखेनापतत् । कपोतश्च पुत्रभार्याविलपनविचेष्टनादिदर्शनजनितदुःखप्रणयकरुणान्धधीः स्वयमपि विलपन्नपायमगमत् । एवं मा भूवमिति भावः । अजगरादुपदेष्टव्यमाह—प्राप्तमिति । शयुः अजगरः तद्वत् प्राप्तं प्राश्नन् यथालब्धेन शरीरनिर्वाहमात्रं कुर्वन् क्षुधं सहेय सोढुं शक्तो

---

१. 'रदेशस्थि' क. ग. पाठः. २. 'कोऽपि मा' ग. पाठः. ३. 'पि वि' क. ग. पाठः. ४. 'र्ववाक्यशेषः' क. ग. पाठः. ५. 'यं' क. पाठः.

---

* नशेर्लुङि पुषादित्वादङ् । 'नशिमन्योरलिट्येत्वमि'ति भाष्यवार्तिकादत एत्वम् । छन्दोग्रहणं तु वाक्यभेदेनामिपचोरिव सम्बध्यते, 'अनेशद् मेनकाम्' इत्यादिलक्ष्यानुरोधादिति वृत्त्यनुसारेणेदम् ।

भवेयम् । अनेन च प्रारब्धकर्मफलस्यावश्यभोग्यत्वात् सुखदुःखप्राप्तिपरिहारार्थः प्रयासोऽपि वृथाकालक्षेपैकफल इत्यपि दर्शितम् । अगाधो गम्भीरः एवम्भूत इति परिकलयितुमशक्यः । रूपविलासमोहितो नश्यतीति शलभाच्छिक्षणीयमित्याह—मा पप्तमिति । योषिति प्रमदायां हावभावादिभिः[1], आदिशब्दात् कटककटिसूत्रहारदुकूलादावतिमनोहरे वस्तुनि परमार्थतो दुःखहेतावुपभोग्यधिया मा पप्तं यथाग्नौ तद्वर्ण[3]लोभितः पतङ्गः पतति तद्वत् । किञ्च, यथा भृङ्गः पुष्पेषु सारभूतं मधु भजति, एवं सर्वशास्त्रेषु सारं श्रीनारायणस्मरणरूपमर्थमेव भजेयम् । शिक्षणीयान्तरमाह—किन्त्विति । किन्तु विशेषोऽस्ति । तद्वद् भृङ्गवत् । यथा भृङ्गो विशिष्टगन्धलोभेनैकस्मिन्नेव पद्मे वसन्नस्तमये मुकुलिते तस्मिन् बध्यते, तद्वदहमप्यर्थार्जनाद्यभिनिवेशेनैकत्र सक्तो न नाशं गच्छेयमित्यर्थः ॥ ५ ॥

**मा बध्यासं तरुण्या गज इव वशया नार्जयेयं धनौघं**
**हर्तान्यस्तं हि माध्वीहर इव मृगवन्मा मुहं ग्राम्यगीतैः ।**
**नात्यासज्जेय भोज्ये झष इव बडिशे पिङ्गलावन्निराशः**
**सुप्यां भर्तव्ययोगात् कुरर इव विभो! सामिषोऽन्यैर्न हन्यै ॥ ६ ॥**

मेति । स्त्रीणामङ्गसङ्गो बन्धहेतुरिति गजाच्छिक्षणीयमित्याह—मा बध्यासमिति । वशया करिण्या । गजो हि करिणीं प्रदर्श्य निखातपिहितगर्ते निपात्य बध्यते[4] । करिणीजठरे बद्धचर्मान्तर्भूतपुरुषेणेति वा । त्यागभोगहीनं धनं न सञ्चिनुयादिति माध्वीहराच्छिक्षणीयमित्याह—नार्जयेयमिति । तं धनौघम् अन्यश्चोरादिः हर्ता हरिष्यति । माध्वीहरो हि तरुकोटरादिषु मक्षिकाभिः सञ्चितं मधु हरति, तद्वत् । गीतादिशब्दसक्तिर्नाशहेतुरिति मृगाच्छिक्षणीयमित्याह—मृगवदिति । मृगो हि मृगयोर्गीतेन मोहितस्तेन निगृह्यते, तद्वत् । ग्राम्यगीतैरिति । भगवद्गीतेष्वेवासक्तिर्भवेदिति भावः । रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षणीयमित्याह—नातीति । झषो मत्स्यः बडिशे आमिषावृतलोहकण्टके । आशा दुःखहेतुः नैराश्यं सुखहेतुरिति पिङ्गलायाः शिक्षणीयमित्याह—पिङ्गलावदिति । पिङ्गला नाम स्वैरिणी अर्थाशया

---

१. 'वविलासैः आ' क. पाठः. २. 'नि दुः' ख. पाठः. ३. 'र्णप्रलो' क. पाठः.
४. 'ते । त्या' क. ग. पाठः. ५. 'त्यत्र मृगो गुरुरित्या' क. ग. पाठः.

प्रथममागतान् स्वल्पार्थदान् पुरुषाननादृत्य अपिनामान्यो भूरिप्रदो मामुपेष्यतीति दुराशया दूयमानमनाः निशीथेऽपि जाग्रती पुनश्च निर्वेदासिना धनादौ दुराशापाशां[1]श्छित्त्वा सुखं सुष्वाप । एवं निराशो भूत्वा । सुप्यामिति सुखं लभेयेत्येव विवक्ष्यते । कस्यचिदपि ममत्वेन स्वीकारो दुःखहेतुरित्यत्र कुररो नाम पक्षी गुरुरित्याह—भर्तव्येति । आमिषं गृहीत्वापतन्तं कुररमन्ये पक्षिणो जघ्नुः । तद्वद् भर्तव्ययोगाद् ममत्वेन रक्षणीयद्रव्यसम्बन्धाद् अन्यैः बलिभिः न हन्यै न हतो भवेयम् ॥ ६ ॥

**वर्तेय त्यक्तमानः सुखमतिशिशुवन्निस्सहायश्चरेयं**
**कन्याया एकशेषो वलय इव विभो! वर्जितान्योन्यघोषः ।**
**त्वच्चित्तो नावबुध्यै परमिषुकृदिव क्ष्माभृदायानघोषं**
**गेहेष्वन्यप्रणीतेष्वहिरिव निवसान्युन्दुरोर्मन्दिरेषु ॥ ७ ॥**

वर्तेयेति । मानावमानपरित्यागः सुखहेतुरित्यर्भकाच्छिक्षयेयमित्याह—वर्तेयेति । बहुभिः सह सञ्चारे गोष्ठीकलहादिना श्रीहरिस्मरणकीर्तनादौ प्रमादो भवेदिति कन्यायाः शिक्षयेयमित्याह—निस्सहाय इति । काचित् कन्यकात्मवरणायागतान् पुरुषान् भोजयितुं स्वयं शाल्यवहननं कुर्वती प्रकोष्ठस्थशङ्खवलयस्वनजुगुप्सया शङ्खवलयमेकावशिष्टमकरोत् । स इव वर्जितान्योन्यघोषः त्यक्तेतरेतरव्यर्थप्रलापादिः । ईश्वरे समाधावितिकर्तव्यतां शरकाराच्छिक्षयेयमित्याह—त्वच्चित्त इति । यथेषुकृद् इष्वृजूकरणे दत्तचित्ततया क्ष्माभृदायाने भेर्यादिघोषं न बुबुधे, तद्वत् त्वच्चित्तोऽहमपि परम् अन्यं नावबुध्यै । विषयवासनया मनो न विक्षिपेद्, नापि सुषुप्ताविव सर्वथा लीयेतेति भावः । गृहारम्भोऽनर्थायेति सर्पाच्छिक्षयेयमित्याह—गेहेष्विति । अहिर्यथोन्दुरोर्मूषिकस्य मन्दिरेषु कुहरेषु वसति, स इव निवसानि ॥ ७ ॥

**त्वय्येव त्वत्कृतं त्वं क्षपयसि जगदित्यूर्णनाभात् प्रतीयां**
**त्वच्चिन्ता त्वत्स्वरूपं कुरुत इति दृढं शिक्षये पेशकारात् ।**

---

१. 'शाश्छि' ग. पाठः.

**विड्भस्मात्मा च देहो भवति गुरुवरो यो विवेकं विरक्तिं**
**धत्ते सञ्चिन्त्यमानो मम तु बहुरुजापीडितोऽयं विशेषात् ॥ ८ ॥**

**त्वयीति**। ईश्वरस्य जगत्कारणत्वमूर्णनाभाच्छिक्षणीयमित्याह—त्वयीति । त्वत्कृतं त्वया निमित्तोपादानकारणभूतेन सृष्टं त्वय्येव क्षपयासि संहरसि। ऊर्णनाभः लूता। स हि निमित्तोपादानभूतेन स्वात्मना सृष्टं तन्तुवितानं स्वस्मिन्नेव स्वयं संहरति। भगवद्ध्यानं तत्सारूप्यमापादयतीति पेशकाराच्छिक्षयेयमित्याह—त्वच्चिन्तेति। त्वत्स्वरूपं त्वत्सारूप्यम् । दृढं निश्चितम् । पेशः क्षुद्रकुटी, तां करोतीति पेशकारो भ्रमरविशेषः। तेन क्षुद्रकुटीं प्रवेशितो निरुद्धः कीटो भयेन तमेव ध्यायन् तत्सारूप्यं गच्छति । स्वशरीराच्छिक्षणीयमाह—विडिति । देहो मम गुरुवरो भवति। कुतः, सञ्चिन्त्यमानो विरक्तिं विवेकं च धत्ते करोति । दुर्लभत्वोपकारित्वे चिन्त्यमाने आत्मानात्मविवेकहेतुः अनित्यत्वपारक्यत्वदुःखोदर्कत्वेषु चिन्त्यमानेषु विरक्तिहेतुश्च भवतीति भावः । विरक्तिविवेकहेतुत्वमाह—विड्भस्मात्मेति । यदि श्वादिभिर्भक्षितः, तर्हि विष्ठात्मा भवति। यद्यग्निना दग्धः, तर्हि भस्मात्मा भवति । अतः परकीयोऽनित्यश्चायम् । आत्मा तु सच्चिदानन्दस्वरूपस्तद्व्यतिरिक्त इति भावः । किञ्च, मम तु अयं देहः बहुरुजापीडितः विविधाभिर्वेदनाभिः परवशीकृतः सन् विशेषाद् विवेकं विरक्तिं च धत्त इति पूर्वेणान्वयः ॥ ८ ॥

ननु विवेकहेतुत्वेनोपकारिणि देहे मोहः कथं न सम्भवेदित्याशङ्क्य देहमोहे दोषमाविष्कुर्वन् भगवन्तं प्रार्थयते—

**ही ही मे देहमोहं त्यज पवनपुराधीश! यत्प्रेमहेतो-**
**र्गेहे वित्ते कलत्रादिषु च विवशितास्त्वत्पदं विस्मरन्ति ।**
**सोऽयं वह्नेः शुनो वा परमिह परतः साम्प्रतं चाक्षिकर्ण-**
**त्वग्जिह्वाद्या विकर्षन्त्यवशमतइतः कोऽपि न त्वत्पदाब्जे ॥ ९ ॥**

**ही हीति**। ही ही एवम्भूतेऽपि देहे मम महान् मोह इत्येतदाश्चर्यम् । तं देहमोहं देहविषयसुखसाधनत्वभ्रान्तिं त्यज । तत्र दोषमाह—यत्प्रेमहेतोरिति यस्मिन् देहे प्रेम्णा हेतुना गेहादिषु विवशिताः तद्योगक्षेमैकचित्ताः । किञ्च, सो-

ऽयं देहः इह सकलजन्तुष्वपि परतः अवसाने परं केवलं वह्नेर्दहनाय शुनो भक्षणाय वा भवति। साम्प्रतं च जीवत्यपि सति। अक्षिकर्णत्वग्जिह्वाद्या इति तदधिष्ठातारोऽर्कादिदेवा गृह्यन्ते, अक्ष्यादीनां तदधीनप्रवृत्तित्वात्। आदिशब्देन वाक्पाण्यादि गृह्यते। एनम् अतइतः स्वस्वविषयेषु रूपादिषु कर्षन्ति। एषु कोऽपि त्वत्पदाब्जे भगवत्पादारविन्दविषये न कर्षति ॥९॥

ननु प्रारब्धकर्मफलस्यावश्यं भोग्यत्वात् तद्भोगस्य च देहगेहासक्त्यायत्तत्वात् तत्त्यागोऽशक्य इति चेत् तर्हि प्रकारान्तरेण मम जन्मसाफल्यं कुर्विति प्रार्थयते—

**दुर्वारो देहमोहो यदि पुनरधुना तर्हि निश्शेषरोगान्**
**हृत्वा भक्तिं द्रढिष्ठां कुरु तव पदपङ्केरुहे पङ्कजाक्ष! ।**
**नूनं नानाभवान्ते समधिगतमिमं मुक्तिदं विप्रदेहं**
**क्षुद्रे हा हन्त मा मा क्षिप विषयरसे पाहि मां मारुतेश! ॥ १० ॥**

दुर्वार इति। यदि पुनर्देहमोहो दुर्वारः, तर्हि अधुना अस्मिन् जन्मन्येव निश्शेषान् बाह्यान् वातादिरोगान् आन्तरान् रागादिरोगान्। द्राढिष्ठाम् अनपायिनीम्[३]। अतिदुर्लभस्यास्य विप्रदेहस्य सफलीकरणेन मां पाहीत्याह— नूनमिति ॥१०॥

**इति पञ्चविंशतेर्गुरुभ्यः शिक्षणीयस्य वर्णनं त्रिनवतितमं दशकम्।**

---

एवं पञ्चविंशत्या गुरुभिरुत्पन्नविवेकज्ञानस्य तत्त्वज्ञानोत्पत्तिप्रकारं दर्शयति—

**शुद्धा निष्कामधर्मैः प्रवरगुरुगिरा तत् स्वरूपं परं ते**
**शुद्धं देहेन्द्रियादिव्यपगतमखिलं व्याप्तमावेदयन्ते।**

---

१. 'श्यभो' क. ग. पाठः. २. 'हृ' क. पाठः. ३. 'नीं कुरु। अ' ग. पाठः.
४. 'स्य वि' ख. पाठः.

**नानात्वस्थौल्यकार्श्यादि तु गुणजवपुस्सङ्गतोऽध्यासितं ते**
**वह्नेर्दारुप्रभेदेष्विव महदणुतादीप्तताशान्ततादि ॥ १ ॥**

**शुद्धा** इति। निष्कामधर्मैः फलकामनामन्तरेणानुष्ठितैर्वर्णाश्रमधर्मैः शुद्धाः रागादिदोषरहिताः, शमदमादिसाधनचतुष्टयसम्पन्ना इति यावत्। प्रवरस्य वेदतदर्थनिष्णाततया श्रेष्ठस्य गुरोः अज्ञाननिरोधनचतुरस्य गिरा प्रवचनात्मिकया ते तवेश्वरस्य तद् निष्कलस्वरूपम् आवेदयन्ते अवगच्छन्ति। कीदृशं, देहेन्द्रियादिभ्यो व्यपगतं व्यतिरिक्तम्[2] अत एव शुद्धं मायातत्कार्योपरागरहितं परं परब्रह्माख्यम् अखिलं व्याप्तं सर्वाश्रयं सर्वानुस्यूतं च। नन्वेवंखिलव्याप्तत्वं कृशोऽहं स्थूलोऽहमित्यादिप्रतीतेः प्रतीतिविरुद्धमित्याशङ्क्याह—नानात्वेति। तवात्मनो नानात्वादि तु गुणजवपुस्सङ्गतः मायामयशरीरोपाधित्वेन अध्यासितं कल्पितम्। अत औपाधिकत्वेन नानात्वादयो नात्मधर्मा इत्यर्थः। अत्रानुरूपं दृष्टान्तमाह— वह्नेरिति। दारुप्रभेदेषु काष्ठेषु स्थितस्य वह्नेर्यथा महदणुतादि। महत्त्वमणुत्वं दीप्तत्वमुत्पन्नत्वं शान्तत्वं नष्टत्वम्। आदिशब्देन नानात्वादि गृह्यते। एते दारुधर्मा अपि यथाग्नेर्दारुणोऽविविक्तत्वादग्निधर्मतया प्रतीयन्ते, तथात्मनः शरीरस्यापि विविच्य ज्ञानाभावान्नानात्वादयो जरामरणादयोऽप्यात्मधर्मा इव प्रतीयन्ते न परमार्थत इति भावः ॥ १ ॥

एतच्च ज्ञानमाचार्याल्लब्धमेवाज्ञानतत्कार्यनिरसनक्षममिति स्फुटीकर्तुं विद्योत्पत्तिं रूपकेण निरूपयति—

**आचार्याख्याधरस्थारणिसमनुमिलच्छिष्यरूपोत्तरार-**
**ण्यावेधोद्भासितेन स्फुटतरपरिबोधाग्निना दह्यमाने।**
**कर्मालीवासनातत्कृततनुभुवनभ्रान्तिकान्तारपूरे**
**दाह्याभावेन विद्याशिखिनि च विरते त्वन्मयी खल्ववस्था ॥ २ ॥**

**आचार्याख्येति**। आचार्याख्यो योऽधरस्थारणिः अधोगतमथनकाष्ठविशेषः, समनुमिलन् उपनयनद्वारा[3] आचार्यसन्निधिं प्राप्तो यः शिष्यः, तद्रूपो य उत्तरा-

---

१. 'न्वात्मनो नानात्वशरीरत्वपरिमाणत्वक्षणिकत्वादिधर्मान् केचिदाचक्षते। कथं सच्चिदानन्दादिस्वरूपत्वेन ज्ञातव्यमित्याह' ग. पाठः. २. 'व्यतिरिक्त' ख. पाठः. ३. 'रास' ख. ग. पाठः.

राणिः, तयोरावेधः प्रवचनरूपेण मथनदण्डेन संघट्टनं, तेनोद्भासितेन प्रकाशितेन स्फुटतरपरिबोधः सम्यग्ज्ञानं तद्रूपेणाग्निना कर्मालीवासनाः सजातीयकर्मोत्पादकाः संस्काराः, तत्कृता तनुभुवनभ्रान्तिः शरीरादिप्रपञ्चविषयमज्ञानं, तद्रूपे कान्तारपूरे वनसमूहे दह्यमाने सति दाह्याभावेन इन्धननाशेन विद्या ब्रह्मज्ञानं, तच्चाज्ञान-तत्कार्यनाशे सति स्वयमपि तदन्तःपातितया नश्यतीत्यग्निसाम्यात्, तद्रूपे शिखिनि अग्नौ च विरते कार्यकारणाव्यवधानात् त्वन्मयी खल्ववस्था त्वद्रूपेणैवा-वस्थानम्। सच्चिदानन्दरूपो भवतीति भावः ॥ २॥

एवं श्लोकद्वयेन सर्वतो विरक्तस्य तत्त्वज्ञानेन संसारदुःखोच्छेदः परमानन्दा-वाप्तिश्चेत्युक्तम् । तदेव दृढीकर्तुं मतान्तरं निरस्यति—

**एवं त्वत्प्राप्तितोऽन्यो नहि खलु निखिलक्लेशहानेरुपायो**
**नैकान्तात्यन्तिकास्ते कृषिवदगदषाड्गुण्यषट्कर्मयोगाः ।**
**दुर्वैकल्यैरकल्या अपि निगमपथास्तत्फलान्यप्यवाप्ता**
**मत्तास्त्वां विस्मरन्तः प्रसजति पतने यान्त्यनन्तान् विषादान् ॥ ३ ॥**

**एवमिति** । ननु नानाविधैर्मणिमन्त्रौषधरसायनप्रयोगैः षण्णयैश्चतुरुपायैः स्वर्गादीष्टसाधनैर्ज्योतिष्टोमादिभिरध्यापनादिभिश्च कर्मभिरेव देहिनां निखिलक्लेश-हानेः सम्भवात् किमर्थमतिदुष्करं निवृत्तिमार्गाश्रयणमित्याशङ्कायामाह—नैकान्तेति । अगदाः औषधान्यायुर्वेदोक्ता आरोग्याद्युपायाः, षड्गुणा एव षाड्गुण्यं दण्डनी-त्युक्ताः सन्धिविग्रहादयोऽर्थार्जनोपायाः, षट्कर्माणि अध्ययनाध्यापनादीनि, वेदोक्ता योगा उपायाः ये, ते नैकान्ताः न कृत्स्नदुःखनिवर्तकाः दुःखामिश्रसुखहेतु-त्वाद्, न चात्यन्तिकाः न दुःखपुनरावृत्तिनिवर्तकाः अनित्यफलत्वात्, कृषिवत् । नन्विह पुत्रमित्रधनधान्यारोग्यादिपरिपन्थिनिरासफलकानि परत्र स्वर्गादिसाधना-न्यपि वैदिककर्माणि विद्यन्ते, तत्राह—दुर्वैकल्यैरिति । निगमपथाः वेदमार्गाः दुर्वै-कल्यैः अपरिहरणीयैर्द्रव्यकर्मकालकर्तृदोषरूपैर्वैगुण्यैः अकल्या अशक्यानुष्ठाना अ-पि केवलं नैकान्तात्यन्तिका एवेत्यपिशब्दार्थः । किञ्च, कथञ्चिन्निर्वैकल्यास्ततफलानि

---

१. 'कर्म' क. पाठः.

स्वर्गादिफलानि प्राप्ताः मत्ताः विमाने स्त्रीभिः सह नन्दनादिषु क्रीडन्तः प्रमत्ताः कर्मक्षयेण पतने अधःपतने प्रसजति सति अनन्तान् विषादान् दुःखानि यान्ति ॥ ३ ॥

ननु वेदोक्तोपासनादिकर्मभिः सत्यलोकं प्राप्ताः क्लेशरहिता ब्रह्मणा सह मोदन्त इत्याशङ्कायामाह—

**त्वल्लोकादन्यलोकः क्व नु भयरहितो यत् परार्धद्वयान्ते**
**त्वद्भीतः सत्यलोकेऽपि न सुखवसतिः पद्मभूः पद्मनाभ ! ।**
**एवम्भावे त्वधर्मार्जितबहुतमसां का कथा नारकाणां**
**तन्मे त्वं छिन्धि बन्धं वरद ! कृपणबन्धो ! कृपापूरसिन्धो ! ॥ ४ ॥**

**त्वल्लोकादिति** । त्वल्लोकाद् वैकुण्ठाद् अन्यलोकः सत्यलोकादिः भयरहितो विनाशभयरहितः क्व नु नास्तीत्यर्थः । अत्र हेतुः—परार्धद्वयम् अन्तोऽवधिर्यस्य स तथा तादृशे सत्यलोके स पद्मभूरपि त्वत् कालस्वरूपादीश्वराद् भीतः अतो न सुखवसतिः सुखरूपा विनाशभयरहिता वसतिर्वासो यस्य स तथा । पद्मभूरिति ब्रह्मण उत्पत्तिविनाशौ द्योतयति । एवम्भावे एवं सति विद्याकर्मभ्यां प्राप्तैश्वर्यस्य ब्रह्मणोऽपि दुःखात्यन्तिकनिवृत्त्यभावे सति अधर्मैरार्जितं बहुतमो दुरितं येषां तेषां नारकाणां नरकपतितानां संसारिणां क्लेशहानेः का कथा । तत् तस्माद् बन्धं शरीराद्यहम्ममाभिमानं छिन्धि, मोक्षं प्रयच्छेत्यर्थः ॥ ४ ॥

ननु जीवो नाम नेश्वरादन्यः । कुतस्तस्य बन्धमोक्षावित्याशङ्क्य परिहरति—

**याथार्थ्यात् त्वन्मयस्यैव हि मम न विभो ! वस्तुतो बन्धमोक्षौ**
**मायाविद्यातनुभ्यां तव तु विरचितौ स्वप्नबोधोपमौ तौ ।**
**बद्धे जीवद्विमुक्तिं गतवति च भिदा तावती तावदेको**
**भुङ्क्ते देहद्रुमस्थो विषयफलरसान् नापरो निर्व्यथात्मा ॥ ५ ॥**

---

१. 'तत्वाद् न' ख. पाठः.　२. 'वं स' ख. पाठः.　३. 'के' क. ग. पाठः.
४. 'रसफलं ना' व्याख्यानुसारी पाठः.

**याथार्थ्यादि**ति। परमार्थतस्त्वन्मयस्य[1] ईश्वरादभिन्नस्यैव मम जीवस्य न वस्तुतो बन्धमोक्षौ, तथापि तव ईश्वरस्य मायाविद्यातनुभ्यां विद्याविद्यारूपशक्तिद्वयेन विरचितौ तौ बन्धमोक्षौ। अविद्यया बन्धो विद्यया च मोक्ष इति भावः। तौ च स्वप्नबोधोपमौ यथा स्वप्नद्रष्टुः स्वप्नदृष्टेन देहेन बन्धः प्रबुध्य च तन्मोक्षः, तद्वद् अविदुषो देहबन्धः विदुषो मोक्षश्च। तथाच स्वप्नवन्मायामयत्वेऽपि बन्धस्य दुःखहेतुत्वाद् ज्ञानेन बन्धच्छेदः प्रार्थनीय इति भावः। तदेव बद्धमुक्तयोर्वैलक्षण्य-माह—बद्ध इति। बद्धे संसारिणि जीवद्विमुक्तिं गतवति जीवन्मुक्ते च तावत् तावती वक्ष्यमाणरूपा। एको बद्धः देह एव द्रुमः, द्रुमवदनित्यत्वादिधर्मत्वात्, तत्स्थः तस्मादपृथग्भूतः सन् विषयरसफलं विषयानुभवरूपं कर्मफलं भुङ्क्ते। अपरः जीवन्मुक्तः न विषयरसफलं भुङ्क्ते। तथापि ज्ञानशक्त्या निर्व्यथात्मा पीडारहितः ॥ ५ ॥

ननु तर्हि जीवन्मुक्तत्वमेव प्रार्थ्यतामित्याशङ्क्य तदनधिकारमाकलय्य भक्तिं प्रार्थयते—

**जीवन्मुक्तत्वमेवंविधमिति वचसा किं फलं दूरदूरे**
**तन्नामाशुद्धबुद्धेर्न च लघु मनसः शोधनं भक्तितोऽन्यत् ।**
**तन्मे विष्णो! कृषीष्ठास्त्वयि कृतसकलप्रार्पणं भक्तिभारं**
**येन स्यां मङ्क्षु किञ्चिद्गुरुवचनमिलत्त्वत्प्रबोधस्त्वदात्मा ॥ ६ ॥**

**जीवन्मुक्तत्वमि**ति। वचसा किं फलं, न तत्प्राप्तिः स्यात्। अशुद्ध-बुद्धेः रागादिदुष्टान्तःकरणस्य तद् जीवन्मुक्तित्वं दूरे नाम। तर्ह्यन्तःकरणशुद्ध्यु-पाया अन्वेष्टव्या इत्याशङ्क्य किमुपायान्तरेण भक्तिरेव लघुरुपाय इत्याह—न चेति। न च भक्तितोऽन्यद् मनसः शोधनं शुद्ध्युपायः तीर्थस्नानादि लघु अतिशीघ्रम् अप्रयत्नं च भवति। तत् तस्मात् त्वयि भक्तिभारम् अनपायिनीं भक्तिं कृषीष्ठाः। कृतम् अनुष्ठितं सकलानां शरीरतत्सम्बन्धिनां प्रार्पणं मन्त्रपुरस्सर समर्पणं यस्मिन् भक्तिभारे। किञ्चिद्गुरुवचनेति भक्तौ सत्यां स्वयमेव ज्ञानोत्पत्तिरिति दर्शयति। मङ्क्षु शीघ्रं गुरुवचनमात्रनिमित्तेन मिलता सञ्जातेन त्वत्प्रबोधेन ब्रह्मज्ञानेन त्वदात्मा मुक्तो भवामीत्यर्थः ॥ ६ ॥

---

१. 'स्येश्वरस्यै' क. ग. पाठः. २. 'धत्व' व्याख्यासम्मतः पाठः.

अभक्तानां शास्त्रश्रमोऽपि पाण्डित्यमात्रफल इत्याह—

**शब्दब्रह्मण्यपीह प्रयतितमनसस्त्वां न जानन्ति केचित्**
**कष्टं वन्ध्यश्रमास्ते चिरतरमिह गां बिभ्रते निष्प्रसूतिम्।**
**यस्यां विश्वाभिरामाः सकलमलहरा दिव्यलीलावताराः**
**सच्चित्सान्द्रं च रूपं तव न निगदितं तां न वाचं भ्रियासम् ॥७॥**

**शब्दब्रह्मणी**ति। मीमांसाद्युपाङ्गोपबृंहिते साङ्गे वेदे प्रयतितमनसः कृतश्रमा अपि इह केचित् तत्प्रधानप्रतिपाद्यं त्वां परं ब्रह्म न जानन्ति नोपासनादि कुर्वन्ति। कष्टम्। ते वन्ध्यश्रमाः व्यर्थपरिश्रमाः। ते चिरतरं दीर्घकालं निष्प्रसूतिं भक्तिज्ञानफलोत्पादनरहितां गां वाचं जल्पवितण्डाख्यां बिभ्रते। अथवा प्रसवहीनतया निर्दोहां गां धेनुं बिभ्रते पुष्णन्ति। अहं तु यस्यां वाचि विश्वान् सर्वजनान् अभिरमयन्तीति विश्वाभिरामाः सकलानां मलानां दुरितानां रागादीनां च निवर्तकाः दिव्याः शुद्धसत्त्वमयाः श्रीरामकृष्णाद्यवतारा न निगदिताः, सच्चित्सान्द्रं रूपं परं ब्रह्म न निगदितं न प्रतिपादितं, तां सगुणनिर्गुणेश्वरप्रतिपादनविधुरां वाचं न भ्रियासं न व्यवहरेयम् ॥७॥

अथ सत्सङ्गमद्वारा भक्तिं प्रार्थयते त्रिभिः—

**यो यावान् यादृशो वा त्वमिति किमपि नैवावगच्छामि भूम-**
**न्नेवञ्चानन्यभावस्त्वदनुभजनमेवाद्रिये चैद्यवैरिन्!।**
**त्वल्लिङ्गानां त्वदङ्घ्रिप्रियजनसदसां दर्शनस्पर्शनादि-**
**र्भूयान्मे त्वत्प्रपूजानतिनुतिगुणकर्मानुकीर्त्यादरोऽपि ॥८॥**

**य** इति। यः यत्स्वरूपः यावान् यादृङ्महिमा यादृशः यद्धर्मो वा त्वमिति किमपि नैवावगच्छामि। हे भूमन्! ईश्वर! एवञ्च सति अनन्यभावः त्वदेकचित्तः सन् त्वदनुभजनं त्वत्सेवामेवाद्रिये। कथमज्ञात्वा मद्भजनमित्यत आह—चैद्यवैरिन्निति। शिशुपालवैरिन्! गोपालबालकतया श्रुतत्वादेतावदवगच्छामीति भावः। त्वल्लिङ्गानां त्वत्प्रतिमानां त्वदङ्घ्रिप्रिया भक्तजनाः, तेषां सदसां सभानाम्। दर्शनस्पर्शनादिरिति नमस्कारादि गृह्यते। यद्वा सत्सङ्ग-

विशेषणत्वात् पुँल्लिङ्गत्वम् । प्रकृष्टा समग्रोपचारयुक्ता पूजा प्रपूजा, नतिर्नमस्कारः, नुतिः स्तवनं, गुणैः सत्त्वादिभिः कृतानां सृष्ट्यादिकर्मणामनुकीर्तिः, आसु आदरोऽपि मे भूयात् ॥ ८॥

**यद्यल्लभ्येत तत्तत् तव समुपहृतं देव! दासोऽस्मि तेऽहं**
**त्वद्गेहोन्मार्जनाद्यं भवतु मम मुहुः कर्म निर्मायमेव ।**
**सूर्याग्निब्राह्मणात्मादिषु लसितचतुर्बाहुमाराधये त्वां**
**त्वत्प्रेमार्द्रत्वरूपो मम सततमभिष्यन्दतां भक्तियोगः ॥ ९॥**

**यद्यदिति** । समुपहृतं समर्पितम् । त्वद्गेहेषु क्षेत्रादिषु उन्मार्जनं रजसोऽपाकरणम् आद्यं यस्य सेचनपुष्पोपहारादेः निर्मायं दाम्भिकतारहितं कर्म मम मुहुर्भवतु । पूजाधिष्ठानान्याह—सूर्येति[1] । आदिशब्देन गवादि गृह्यते । एष्वधिष्ठानेषु लसितचतुर्बाहुमाराधये सौरसूक्तहविरातिथ्यविषयभोगयवसादिभिः पूजयामि । त्वत्प्रेम्णा आर्द्रो द्रुतहृदयः, तस्य भावस्तत्त्वं, तद्रूपो भक्तियोगो मम सततमभिष्यन्दतां त्वद्विषये प्रवाहरूपेण प्रवर्ततामित्यर्थः ॥ ९॥

**ऐक्यं ते दानहोमव्रतनियमतपस्साङ्ख्ययोगैर्दुरापं**
**त्वत्सङ्गेनैव गोप्यः किल सुकृतितमाः प्रापुरानन्दसान्द्रम् ।**
**भक्तेष्वन्येषु भूयस्स्वपि बहुमनुषे भक्तिमेव त्वमासां**
**तन्मे त्वद्भक्तिमेव द्रढय हर गदान् कृष्ण! वातालयेश! ॥१०॥**

**ऐक्यमिति** । दानादिभिर्योगिनामपि दुरापं ते तव ऐक्यं मोक्षं गोप्यस्त्वत्सङ्गेनैव प्रापुः किल । अतस्ताः सुकृतितमाः । आनन्दसान्द्रम् आनन्दैकरसम् । अन्येषु भूयस्सु बहुष्वपि भक्तेषु उद्धवादिषु सत्स्वपि त्वम् आसां गोपिकानां भक्तिमेव बहुमनुषे । तत् तस्माद् मे त्वयि प्रेमलक्षणां भक्तिमेव द्रढय अनपायिनीं कुरु ॥ १० ॥

इति तत्त्वज्ञानोत्पत्तिप्रकारवर्णनं, बन्धमोक्षस्वरूपवर्णनम्, अभक्तनिन्दापूर्वकं भक्तिप्रार्थनावर्णनं च

**चतुर्नवतितमं दशकम्** ।

---

१. 'ति । आत्मान्तर्यामी । आ' क. ग. पाठः.

ननु भक्त्या जीवेश्वरैक्ये सति संसारनिवृत्तिरित्युक्तम्। तदनुपपन्नं, तयोर्भिन्नत्वे सत्यैक्यायोगाद्, अभिन्नत्वे तयोर्जीवस्य संसारानुपपत्तेरित्याशङ्क्य ईश्वरस्यैव मायामयशरीरसम्बन्धात् संसारित्वं तदपाये स्वस्वरूपेणावस्थानं च भवतीति परिहरति—

**आदौ हैरण्यगर्भी तनुमविकलजीवात्मिकामास्थितस्त्वं**
**जीवत्वं प्राप्य मायागुणगणखचितो वर्तसे विश्वयोने!।**
**तत्रोद्वृद्धेन सत्त्वेन तु गुणयुगलं भक्तिभावं गतेन-**
**च्छित्वा सत्त्वं च हित्वा पुनरनुपहितो वर्तिताहे त्वमेव ॥ १ ॥**

**आदाविति।** आदौ ब्रह्मप्रलयावसाने तव सिसृक्षायां सत्यां त्वं हिरण्यगर्भस्येयं हैरण्यगर्भी, तां तनुमास्थितः तदभिमान्यभूः। कीदृशीम्, अविकलजीवात्मिकां। अत्र जीवशब्देन सूक्ष्मशरीरमुच्यते। सूक्ष्मशरीरसमष्टिरूपामित्यर्थः। किमर्थमित्यपेक्षायां तद्धेतुत्वेन सम्बोधयति— विश्वयोने! इति। विश्वस्य विराट्च्छरीरस्य प्रपञ्चस्य योनिः कारणम्। सूक्ष्मशरीराद्धि स्थूलशरीरोत्पत्तिः। एवञ्च जगत्सृष्ट्यर्थं हिरण्यगर्भो ब्रह्माभूरिति भावः। एवम्भूतस्त्वमेव तद्व्यष्टिरूपं जीवत्वं प्राप्य मायागुणानां मायाकार्याणां महदहङ्कारभूतेन्द्रियप्राणपञ्चकरूपाणां तत्त्वानां गणेन, तत्सङ्घातात्मकेन शरीरेणेत्यर्थः, खचितः सम्बद्धो वर्तसे त्वमेव शरीराभिमानितया संसारी भवसि। अतो मम त्वद्रूपत्वात् त्वदैक्यम् युज्यत इति भावः। एवं संसारिणो जीवस्य रजस्तमोवृद्धौ संसारानिवृत्तिः। सत्त्ववृद्धौ विशेषमाह—तत्र त्विति। तत्र मायागुणेषु तु सत्त्ववृद्धौ विशेषोऽस्तीत्यर्थः। सात्त्विकपदार्थसेवया उद्वृद्धेन अत एव भक्तिभावं गतेन भक्तिरूपेण परिणतेनेत्यर्थः। गुणयुगलं रजस्तमश्च तत्कार्यभूतं शरीरादिकं च छित्वा मायामयत्वेन ज्ञानमुत्पाद्यापाकृत्य कृतकार्यतया साधनरूपं सत्त्वं च हित्वा पुनः कार्यकारणाव्यवधानाद् अनुपहितः परिपूर्णस्त्वमेवाहं वर्तिताहे त्वदेकीभावमनुभवितास्मीति भावः ॥ १ ॥

ननु तर्हि सत्त्ववृद्धिरेव प्रार्थ्यतां, किं भक्त्येत्याशङ्कायामाह—

**सत्त्वोन्मेषात् कदाचित् खलु विषयरसे दोषबोधेऽपि भूमन्!**
**भूयोऽप्येषु प्रवृत्तिः सतमसि रजसि प्रोद्धते दुर्निवारा।**
**चित्तं तावद् गुणाश्च ग्रथितमिह मिथस्तानि सर्वाणि रोद्धुं**
**तुर्ये त्वय्येकभक्तिः शरणमिति भवान् हंसरूपी न्यगादीत् ॥ २ ॥**

**सत्त्वोन्मेषादि**ति। सत्त्वस्य उन्मेषो वृद्धिः, ततः खलु विषयरसे विषयास्वादे दोषबोधे सत्यपि भूयोऽप्येषु विषयेषु प्रवृत्तिर्दुर्निवारा भवति। तत्र हेतुः—सतमसि रजसि प्रोद्धत इति। रजस्तमोभ्यां सत्त्वस्याभिभवादिति भावः। यावदेवं, तावद् गुणा विषयाश्चित्तं च मिथो ग्रथितं भवति। चित्तं हि रागादिवशाद् विषयेषु प्रविशति। ते चानुभूता विषया वासनारूपेण चित्ते च प्रविशन्ति। ततो मिथो ग्रथितं भवतीत्यर्थः। तानि सर्वाणि गुणचित्तरजस्तमांसि रोद्धुं त्यक्तुं तुर्ये अवस्थात्रयातीते तत्साक्षिणि त्वयि ईश्वरे भक्तिरेव शरणम्। हंसरूपीति। क्षीरनीरविवेकचतुरो हंसः, तद्वदात्मानात्मविवेकचतुरतया परमहंसः परिव्राट्, तद्रूपी भूत्वा भवान् ब्रह्मणः पुरतः सनकादिभ्यो न्यगादीद् उपदिदेश ॥

ननु किं भक्तितुल्यं श्रेयस्साधनमस्ति, नेत्याह—

**सन्ति श्रेयांसि भूयांस्यपि रुचिभिदया कर्मिणां निर्मितानि**
**क्षुद्रानन्दाश्च सान्ता बहुविधगतयः कृष्ण! तेभ्यो भवेयुः।**
**त्वं चाचख्याथ सख्ये ननु महिततमां श्रेयसां भक्तिमेकां**
**त्वद्भक्त्यानन्दतुल्यः खलु विषयजुषां सम्मदः केन वा स्यात् ॥ ३ ॥**

**सन्ती**ति। श्रेयांसि श्रेयस्साधनानि कर्मिणां रागादिना कर्माधिकारिणां रुचिभिदया अधिकारभेदेन निर्मितानि बृहस्पतिव्यासपतञ्जलिप्रभृतिभि[2]राचार्यैः प्रोक्तानि। तेभ्यः श्रेयस्साधनेभ्यः बहुविधाः स्वर्गादिरूपाः गतयः फलानि भवेयुः। किन्तु ताः क्षुद्रानन्दाः दुःखमिश्रतया स्वल्पसुखाः सान्ताः

---

१. 'त्तं' क. ग. पाठः. २. 'मुखैरा' क. पाठः.

अनित्याश्च। त्वं तु श्रेयसां मध्ये भक्तिम् एकां केवलाम् अव्यभिचारिणीं वा महिततमाम् अतिशयेन पूजनीयां सख्ये उद्धवाय आचख्याथ आख्यातवान्। विषयजुषाम् इन्द्रियाणि प्रीणयतां त्वद्भक्त्या य आनन्दस्तत्तुल्यः सम्मदः सुखं केन वा स्याद्, न केनापीत्यर्थः ॥ ३ ॥

तदेवाह—

**त्वद्भक्त्या तुष्टबुद्धेः सुखमिह चरतो विच्युताशस्य चाशाः**
**सर्वाः स्युः सौख्यमय्यः सलिलकुहरगस्येव तोयैकमय्यः।**
**सोऽयं खल्विन्द्रलोकं कमलजभवनं योगसिद्धीश्च हृद्या**
**नाकाङ्क्षत्येतदास्तां स्वयमनुपतिते मोक्षसौख्येऽप्यनीहः** ॥ ४ ॥

**त्वद्भक्त्येति**। त्वद्भक्त्या प्रेमलक्षणया तुष्टबुद्धेः भक्त्यैवालं किमन्यैरिति जातालंबुद्धेः अत एव विच्युताशस्य विषयतृष्णारहितस्य अत एव इह सर्वत्र सुखं चरतः आशाः दिशः सर्वाः सौख्यमय्यः स्युः। अनुभूयमानं सर्वं सुखात्मकमेवेति भावः। यथा सलिलकुहरं महाह्रदः, तद्गस्य मत्स्यादेः सर्वा दिशस्तोयैकमय्यो भवन्ति, एवं त्वद्भक्त्यानन्दनिमग्नस्य भक्तस्यापि सर्वा दिशः सौख्यमय्य एवेत्यर्थः। किञ्च, सोऽयं भक्तः खलु इन्द्रादिलोकं हृद्या मनोहराः योगसिद्धीः उपासनैफलभूताः परकायप्रवेशाष्टैश्वर्यदूरश्रवणदर्शनाद्याः नाकाङ्क्षती-त्येतदास्ताम्, असौ मोक्षसौख्येऽप्यनीहो निराग्रहः। किं तर्हि दुष्करतादृष्टेः, न। स्वयमनुपतिते भक्तिमहिम्ना स्वयमेव प्रादुर्भूते ॥ ४ ॥

आस्तान्तावदुत्तमभक्तकथा यतः प्राकृता अपि भक्ताः कृतार्था इत्याह—

**त्वद्भक्तो बाध्यमानोऽपि च विषयरसैरिन्द्रियाशान्तिहेतो-**
**र्भक्त्यैवाक्रम्यमाणैः पुनरपि खलु तैर्दुर्बलैर्नाभिजय्यः।**
**सप्तार्चिर्दीपितार्चिर्दहति किल यथा भूरिदारुप्रपञ्चं**
**त्वद्भक्त्योघे तथैव प्रदहति दुरितं दुर्मदः क्वेन्द्रियाणाम्** ॥ ५ ॥

**त्वद्भक्त** इति। इन्द्रियाशान्तेः अवशीकृतेन्द्रियत्वाद्धेतोः विषयरसैर्बाध्यमानः आकृष्यमाणोऽपि तैर्नाभिजय्यः न वशीकर्तुं शक्यः। अत्र हेतुः—दुर्बलैरिति।

---

१. 'द्या यो' ख. पाठः. २. 'ना' ख. पाठः.

तत्र हेतुः—भक्त्या बलवत्या आक्रम्यमाणैः अभिभूयमानैरिति । पुनरपि भक्तौ जातायामित्यर्थः । यथा सप्तार्चिः अग्निः भूरिदारुप्रपञ्चं महान्तं काष्ठसञ्चयं दहति, तथैव त्वद्भक्तेरोघे प्रवाहे दुरितं दहति सति भक्तेः पुरतः इन्द्रियाणां क्व दुर्मदो गर्वः । अनेनेन्द्रियाणां भक्तिप्रातिकूल्याशक्तेर्दुरितस्य मूलच्छेदो दर्शितः ॥ ५ ॥

भक्त्यभावेऽन्यत् साधनं व्यर्थमित्याह—

**चित्तार्द्रीभावमुच्चैर्वपुषि च पुलकं हर्षबाष्पं च हित्वा**
**चित्तं शुध्येत् कथं वा किमु बहुतपसा विद्यया वीतभक्तेः ।**
**त्वद्गाथास्वादसिद्धाञ्जनसततमरीमृज्यमानोऽयमात्मा**
**चक्षुर्वत् तत्त्वसूक्ष्मं भजति न तु तथाभ्यस्तया तर्ककोट्या ॥ ६ ॥**

**चित्तार्द्रीभावमिति** । चित्तार्द्रीभावादि हित्वा स्फुटप्रतीयमानैश्चिह्नैर्गम्यमानया भक्त्या विना कथं चित्तं शुध्येदित्यर्थः । ननु ब्रह्मज्ञानादेवाज्ञानकल्पितसंसारनिवृत्तिस्तत्स्वरूपावाप्तिश्च, किमत्र भक्तिः करोतीत्याशङ्कायामाह—त्वद्गाथेति । त्वत्पुण्यगाथानामास्वादः श्रवणं कथनं वा, तदेव सिद्धाञ्जनं, तेन सततमरीमृज्यमानः पुनः पुनः शोध्यमानः अयमात्मा चित्तं तत्त्वम् अनारोपितं यत् सूक्ष्मं वस्तु परं तत्त्वं, तद् भजति विषयीकरोति । अभ्यस्तया आवर्तितया तर्ककोट्या युक्तिसमूहेन तथा न भजति। भक्तेरवान्तरव्यापार एव ज्ञानम् । अतस्तत्प्रयासो व्यर्थ एवेति भावः ॥ ६ ॥

एवं शुद्धचित्तस्य ध्यानयोग्यतामाह—

**ध्यानं ते शीलयेयं समतनुसुखबद्धासनो नासिकाग्र-**
**न्यस्ताक्षः पूरकाद्यैर्जितपवनपथश्चित्तपद्मं त्ववाञ्चम् ।**
**ऊर्ध्वाग्रं भावयित्वा रविविधुशिखिनः संविचिन्त्योपरिष्टात्**
**तत्रस्थं भावये त्वां सजलजलधरश्यामलं कोमलाङ्गम् ॥ ७ ॥**

---

१. 'मपीत्य' क. ग. पाठः.

**ध्यानमि**ति । समतनुः समकायशिरोग्रीवः सुखबद्धासनः । नास्ति स्वस्तिकादिनियमः । अक्ष्णोर्निमीलने मनोलयः, उन्मीलने मनोविक्षेपः, तदुभयाभावाय मुकुलीकरणेऽक्ष्णोर्नासिकाग्रन्यस्तता स्वयमेव स्यात् । पूरकरेचककुम्भकभेदैः प्राणायामैः जितः कफादिदोषनिरसनेन शोधितः पवनपथः वायुसञ्चरणस्थानं नाडीविवरं येन स तथा चित्तपद्मं हृदयाम्बुजम् अवाञ्चम् अधोमुखम् ऊर्ध्वाग्रं भावयित्वा तत्कर्णिकायां रविशशिशिखिनः उपरिष्टाद् उत्तरोत्तरं संविचिन्त्य तत्रस्थं वह्निमध्यस्थम् ॥ ७ ॥

**आनीलश्लक्ष्णकेशं ज्वलितमकरसत्कुण्डलं मन्दहास-**
**स्यन्दार्द्रं कौस्तुभश्रीपरिगतवनमालोरुहाराभिरामम् ।**
**श्रीवत्साङ्कं सुबाहुं मृदुलसदुदरं काञ्चनच्छायचेलं**
**चारुस्निग्धोरुमम्भोरुहललितपदं भावयेयं भवन्तम् ॥ ८ ॥**

**आनीले**ति । अतिशयेन नीलाः श्लक्ष्णाः श्लिष्टाः केशा यस्य, ज्वलिते मकराकारे सती कुण्डले यस्य, मन्दहासस्य स्यन्दो द्रवः तेन आर्द्रं स्निग्धं, कौस्तुभश्रीभिः परिगतया व्याप्तया वनमालया उरुहारैः हारपटलैः अभिरामं, वक्षोदक्षिणभागे श्रीवत्साख्योऽङ्को यस्य, शोभना दीर्घपीवरा बाहवो यस्य, मृदु लसत् शोभमानमुदरं यस्य, काञ्चनच्छायचेलं परिहितपीताम्बरं, चारू स्निग्धौ मांसलावूरू यस्य, तं भवन्तं भावये चिन्तयामि ॥ ८ ॥

अथ क्रमात् समाधिभूमिकारोहणप्रकारमाह—

**सर्वाङ्गेष्वङ्ग ! रङ्गत्कुतुकमतिमुहुर्धारयन्नीश ! चित्तं**
**तत्राप्येकत्र युञ्जे वदनसरसिजे सुन्दरे मन्दहासे ।**
**तत्रालीनं तु चेतः परमसुखचिदद्वैतरूपे वितन्व-**
**न्नन्यन्नो चिन्तयेयं मुहुरिति समुपारूढयोगो भवेयम् ॥ ९ ॥**

**सर्वाङ्गेष्वि**ति । रङ्गत्कुतुकं प्राप्तकौतुकं चित्तं सर्वाङ्गेषु अतिमुहुः पुनः पुनः धारयन् तत्र अवयवेष्वपि मध्ये एकत्र एकस्मिन्नवयवे युञ्जे । तत् कुत्र, वदनसरसिजे । मन्दहास इति वदनसरसिजविशेषणम् । मन्दः हासो यस्मिन् तत्र श्रीमुखे आलीनं

सुस्थिरं तु चित्तं परमसुखचिदद्वैतरूपे सच्चिदानन्दस्वरूपे ब्रह्मणि वितन्वन् ब्रह्माकारं कुर्वन् अन्यद् ध्यातृध्येयविभागादि नो चिन्तयेयम् । मुहुः यावज्जीवं ब्रह्मैक्यं पुनः पुनः इति अनेन प्रकारेण समुपारूढयोगः भगवदुपासनशीलः भवेयम् ॥ ९ ॥

इत्थं त्वद्ध्यानयोगे सति पुनरणिमाद्यष्टसंसिद्धयस्ता
दूरश्रुत्यादयोऽपि ह्यहमहमिकया सम्पतेयुर्मुरारे ! ।
त्वत्सम्प्राप्तौ विलम्बावहमखिलमिदं नाद्रिये कामयेऽहं
त्वामेवानन्दपूर्णं पवनपुरपते ! पाहि मां सर्वतापात् ॥ १० ॥

इत्थमिति । इत्थम् उक्तप्रकारेण त्वद्ध्यानमेव योगः पुरुषार्थस्योपायः तस्मिन् सति ताः सत्त्वोत्कर्षजाः अष्टौ संसिद्धयः अष्टैश्वर्याणि दूरश्रवण-दर्शन-त्रिकालज्ञत्वादिक्षुद्रसिद्धयोऽपि अहमहमिकया सम्पतेयुः । इदमखिलं त्वत्सम्प्राप्तौ विलम्बावहमित्यहं नाद्रिये । किं तु अहम् आनन्दपूर्णं मोक्षरूपं त्वामेव कामये । मां सर्वतापात् संसारात् पाहि । पुनरप्यष्टैश्वर्यादिभिः संसारार्णवे निक्षिप्य मा मां भ्रामयेति भावः ॥ १० ॥

इति भक्त्या विशुद्धचित्तस्यैव भगवत्स्वरूपध्यानयोग्यतावर्णनं

पञ्चनवतितमं दशकम् ।

---

अथोक्तध्यान[1]योग्यतासिद्ध्यै विश्वमूर्तीशोपासनाय भगवद्विभूतिं[2] निरूपयति—

त्वं हि ब्रह्मैव साक्षात् परमुरुमहिमन्नक्षराणामकार-
स्तारो मन्त्रेषु राज्ञां मनुरसि मुनिषु त्वं भृगुर्नारदोऽपि ।
प्रह्लादो दानवानां पशुषु च सुरभिः पक्षिणां वैनतेयो
नागानामस्य[3]नन्तः सुरसरिदपि च स्रोतसां विश्वमूर्ते ! ॥ १ ॥

---

१. 'नाधिकारिता' ख. पाठः. २. 'तीर्नि' ख. ग. पाठः. ३. 'प्य' क. पाठः.

त्वं हीति। हे उरुमहिमन्! विश्वमूर्ते! त्वं हि साक्षात् परं ब्रह्मैव[1]। सर्वत्र षष्ठीसप्तम्यौ निर्धारणे[2]। अक्षराणां मध्येऽकारः, मन्त्रेषु तारः प्रणवः, त्वमिति योजनीयम्। मुनिष्विति। ब्रह्मर्षिषु भृगुः देवर्षिषु नारदः॥ १॥

**ब्रह्मण्यानां बलिस्त्वं क्रतुषु च जपयज्ञोऽसि वीरेषु पार्थो**
**भक्तानामुद्धवस्त्वं बलमसि बलिनां धाम तेजस्विनां त्वम्।**
**नास्त्यन्तस्त्वद्विभूतेर्विकसदतिशयं वस्तु सर्वं त्वमेव**
**त्वं जीवस्त्वं प्रधानं यदिह भवदृते तन्न किञ्चित् प्रपञ्चे॥२॥**

ब्रह्मण्यानामिति। ब्रह्मण्यानां ब्राह्मणभक्तानाम्। बलिनां तेजस्विनामिति सम्बन्धे षष्ठी। यतस्त्वद्विभूतेरन्तो नास्ति अत एतदवधारयामि। विकसदतिशयं स्फुटप्रतीयमानातिशययुक्तं यद् वस्तु तत् सर्वं त्वमेव। किञ्च, त्वं जीवः, त्वं प्रधानं, प्रकृतिपुरुषौ त्वमेव। अतः प्रकृतिपुरुषात्मके[3] इह अस्मिन् प्रपञ्चे तत् तादृशं किञ्चिदपि नास्ति, यद् भवदृते त्वद्व्यतिरेकेण प्रतीयते। त्वमेवेदं सर्वमित्यर्थः॥२॥

उक्तोपासनादावनधिकारिणामीश्वरार्पणेन स्वधर्मानुष्ठानाद् वैराग्यद्वारा मुक्तिरित्याह—

**धर्मं वर्णाश्रमाणां श्रुतिपथविहितं त्वत्परत्वेन भक्त्या**
**कुर्वन्तोऽन्तर्विरागे विकसति शनकैः सन्त्यजन्तो लभन्ते।**
**सत्तास्फूर्तिप्रियत्वात्मकमखिलपदार्थेषु भिन्नेष्वभिन्नं**
**निर्मूलं विश्वमूलं परममहमिति त्वद्विबोधं विशुद्धम्॥ ३॥**

धर्ममिति। वर्णानामाश्रमाणां च पृथक् पृथक् श्रुतिपथविहितं[4] नित्यनैमित्तिकादिरूपं भक्त्या त्वत्परत्वेन ईश्वरार्पिततया कुर्वन्तः शनैरन्तर्विरागे विकसति प्रादुर्भूते सति सन्त्यजन्तः विहितानि कर्माणि विधिना त्यजन्तः परमहंसा भूत्वा विशुद्धं विषयाकारशून्यं त्वद्विबोधं त्वत्स्वरूपभूतं विबोधं परं ब्रह्म परममहं परं ब्रह्मैवाहम्[5] इति

---

१. 'व। अ' क. ग. पाठः. २. 'णे। मु' ख. पाठः. ३. 'के अ' ख. पाठः, ४, 'तिवि' क. पाठः. ५. 'ह्मैवा' ख. पाठः.

अनेन प्रकारेण लभन्ते प्राप्नुवन्ति। ब्रह्मणस्तटस्थलक्षणमाह—विश्वमूलमिति। जगज्जन्मादिकारणमित्यर्थः। तदुपपादयति—अखिलपदार्थेष्विति। भिन्नेषु स्वभावतः पृथग्भूतेषु अखिलपदार्थेषु स्वसृष्टेषु कार्येषु अभिन्नं कारणरूपेणैकत्वेन स्थितं, कटककुण्डलादौ सुवर्णवत्। ननु तद्वत्सच्चिदानन्दं ब्रह्म स्वसृष्टेषु कार्येषु न दृश्यत इति चेद् दृश्यत एवेत्याह—सत्तेति। येयं भिन्नेषु घटपटादिषु घटः सन् पटः सन्नित्येकरूपा सत्ता प्रतीयते, या च भिन्नेष्वभिन्ना घटोऽयं पटोऽयमिति स्फूर्तिर्ज्ञानमेकरूपं प्रतीयते, यच्च भिन्नेषु स्रक्चन्दनादिषु अभिन्नं प्रियत्वम् आनुकूल्यं सुखमिति यावत्, तानि सत्तास्फूर्तिप्रियत्वानि आत्मा स्वरूपं यस्य तदेव ब्रह्मेत्यर्थः। अत्र च भिन्नेष्वभिन्नमित्यनेन कार्यकारणानन्यत्वोक्तेरद्वितीयत्वमप्युक्तम्। अतः सत्तास्फूर्तिप्रियत्वात्मकमिति च सच्चिदानन्दाद्वयं ब्रह्मेति स्वरूपलक्षणमपि दर्शितम्। निर्मूलं निष्कारणं नित्यम्। अतस्तत् प्राप्तानां न पुनरावृत्तिरित्यपि सूचितम्॥ ३॥

ननु भक्त्यैव कृतार्था इत्युक्तं प्राक् 'सन्ति श्रेयांसि'(दश. ९५. श्लो. ३)इत्यादिना। किमिदानीं कर्मज्ञानयोगोपादानमित्याशङ्क्याधिकारिभेदादित्याह—

**ज्ञानं कर्मापि भक्तिस्त्रितयमिह भवत्प्रापकं तत्र तावद्**

**निर्विण्णानामशेषे[2] विषय इह भवेद् ज्ञानयोगेऽधिकारः।**

**सक्तानां कर्मयोगस्त्वयि हि[3] विनिहितो ये तु नात्यन्तसक्ता**

**नाप्यत्यन्तं विरक्तास्त्वयि च धृतरसा भक्तियोगो ह्यमीषाम्॥४॥**

ज्ञानमिति। भवत्प्रापकं मोक्षसाधनम्। तत्र तेषु त्रिषु मध्ये। अशेषे विषये इहामुत्र स्रक्चन्दनादौ अमृतादौ इह शरीरे च निर्विण्णानां विरक्तानां ज्ञानयोगेऽधिकारो भवेत्। सक्तानामनिर्विण्णानां हि त्वयि विनिहितः ईश्वरे समर्पितः कर्मयोगः। ये तु मध्यस्थाः त्वयि ईश्वरे धृतरसा यदृच्छया त्वत्कथादौ जातश्रद्धाश्चेत्यर्थः। तेषाममीषां भक्तियोगः॥ ४॥

---

१. 'त' ख. पाठः. २. 'षे खलु विषयरसे ज्ञा' क. पाठः. ३. 'तु' क. पाठः.

एतच्च त्रितयं मनुष्यशरीरसाध्यमिति तत्प्राप्तौ न कालक्षेपः कर्तव्य इत्याभिप्रायेणाह—

**ज्ञानं त्वद्भक्ततां वा लघु सुकृतवशान्मर्त्यलोके लभन्ते**
**तस्मात् तत्रैव जन्म स्पृहयति भगवन्! नाकगो नारको वा ।**
**आविष्टं मां तु दैवाद् भवजलनिधिपोतायिते मर्त्यदेहे**
**त्वं कृत्वा कर्णधारं गुरुमनुगुणवातायितस्तारयेथाः ॥ ५ ॥**

**ज्ञानमिति**। त्वद्भक्ततां वा लघु अनायासेन। दैवात् सुकृतेन भवजलनिधौ पोतवदाचरिते आविष्टं प्रविष्टं तु तरणोपायविधुरं मां गुरुमुपदेष्टारं कर्णधारं नाविकं कृत्वा त्वं वातालयेशः स्वयमनुगुणवातवदाचरन् तारयेथाः पारं नय ॥५॥

तत्र साधनेषु भक्तिरेव सुगममार्ग इत्याह—

**अव्यक्तं मार्गयन्तः श्रुतिभिरपि नयैः केवलज्ञानलुब्धाः**
**क्लिश्यन्तेऽतीव सिद्धिं बहुतरजनुषामन्त एवाप्नुवन्ति ।**
**दूरस्थः कर्मयोगोऽपि च परमफले नन्वयं भक्तियोग-**
**स्त्वामूलादेव हृद्यस्त्वरितमयि! भवत्प्रापको वर्धतां मे ॥ ६ ॥**

**अव्यक्तमिति**। केवलज्ञाने लुब्धाः केवलं ज्ञानलुब्धा वा श्रुतिभिरुपनिषद्भिः नयैः मीमांसोक्तयुक्तिभिरपि अव्यक्तं ब्रह्म मार्गयन्तः विचारयन्तः अतीव क्लिश्यन्ते। बहुतरजनुषामन्त एव सिद्धिं फलमाप्नुवन्ति। कर्मयोगोऽपि च परमफले परमपुरुषार्थे मोक्षे दूरस्थः कालान्तर एव फलप्रदः क्लेशरूपश्च। पितृलोकसत्यलोकावाप्त्यादिरूपेण त्ववान्तरफलेन दूरस्थः। भक्तियोगस्त्वामूलात् श्रवणकीर्तनादिक्रमेणारम्भात् प्रभृत्येव हृद्यः त्वरितं भवत्प्रापकश्च। अयि भगवन्! मम स एव वर्धताम् ॥ ६ ॥

उक्तमर्थं सदाचारप्रमाणेन द्रढयति—

**ज्ञानायैवातियत्नं मुनिरपवदते ब्रह्मतत्त्वं तु शृण्वन्**
**गाढं त्वत्पादभक्तिं शरणमयति यस्तस्य मुक्तिः कराग्रे ।**

**त्वद्ध्यानेऽपीह तुल्या पुनरसुकरता चित्तचाञ्चल्यहेतो-**
**रभ्यासादाशु शक्यं तदपि वशयितुं त्वत्कृपाचारुताभ्याम् ॥ ७ ॥**

**ज्ञानायैवेति** । ज्ञानायैव केवलं ज्ञानमेव प्राप्तुम् अतियत्नं बहुग्रन्थाभ्यासं मुनिर्वेदव्यासः अपवदते पुराणेषु तत्र तत्र प्रतिषेधति । किं तु ब्रह्मतत्त्वं सिद्धान्तसारमात्रं शृण्वन् युक्त्यानुसन्दधानः गाढम् अतिशयेन त्वत्पादे भक्तिं यः शरणमयति तस्य मुक्तिः कराग्रे । जीवन्नेव मुक्त इति भावः । इह यमादिसहिते त्वद्ध्यानेऽपि चित्तस्य चाञ्चल्याद्धेतोरसुकरता दुरनुष्ठेयता तुल्या । तदपि दुष्करमपि ध्यानं त्वत्कृपया त्वच्चारुतया श्रीमूर्तेः सौन्दर्येण चाभ्यासादाशु वशयितुं वशीकर्तुं शक्यमित्यर्थः ॥ ७ ॥

**निर्विण्णः कर्ममार्गे खलु विषमतमे त्वत्कथादौ च गाढं**
**जातश्रद्धोऽपि कामानयि भुवनपते! नैव शक्नोमि हातुम् ।**
**तद् भूयो निश्चयेन त्वयि निहितमना दोषबुद्ध्या भजंस्तान्**
**पुष्णीयां भक्तिमेव त्वयि हृदयगते मङ्क्षु नङ्क्ष्यन्ति सङ्गाः ॥ ८ ॥**

**निर्विण्ण** इति । किञ्च, विषमतमे दुःखभूयिष्ठे कर्ममार्गे स्वर्गादौ निर्विण्णः विरक्तः त्वत्कथादौ जातश्रद्धश्च यद्यपि भवति, तथापि कामान् काम्यमानान् पुत्रमित्रवित्तादीन् नैव हातुं शक्नोमि । तत् तस्माद् भूयः पुनः पुनः निश्चयेन त्वयि निहितमना भूत्वा दोषबुद्ध्या तान् कामान् भजन् सेवमानः भक्तिमेव पुष्णीयाम् । एवं भक्त्या भजनेन त्वयि हृदयगते सङ्गा विषयश्रद्धाः मङ्क्षु झटिति नङ्क्ष्यन्ति नाशं गमिष्यन्ति ॥ ८ ॥

भगवद्भजने मनोनिग्रहस्यावश्यकत्वाद् भिक्षुपुरूरवसोर्निदर्शनेन चित्तशान्तिं प्रार्थयते द्वाभ्यां—

**कश्चित् क्लेशार्जितार्थक्षयविमलमतिर्नुद्यमानो जनौघैः**
**प्रागेवं प्राह विप्रो न खलु मम जनः कालकर्मग्रहा वा ।**

१. 'नुम' ख. पाठः.

**चेतो मे दुःखहेतुस्तदिह गुणगणं भावयत् सर्वकारी-**
**त्युक्त्वा शान्तो गतस्त्वां मम च कुरु विभो! तादृशीं चित्तशान्तिम् ॥**

**कश्चिदि**ति । प्राक् पुरा काश्चिद् विप्रः महता क्लेशेनार्जितस्यार्थस्य क्षयेण चोरादिभ्यो जातेन नाशेन सन्तप्यमानो निर्विण्णः सन् विमलमतिः प्रव्रजन् पुनरपि[1] नुद्यमानः पीड्यमानः सन्नेवं प्राह— अहं तावद् जनैः पीडित इव प्रतीये । न खलु मम जनो दुःखहेतुः, अस्य ममात्मनश्चैकत्वात् । न च कालः, तस्येश्वरात्मकत्वाद्, ममात्मनश्चेश्वरांशत्वात्, स्वांशस्य सतः पीडायोगाच्च । न च कर्म दुःखहेतुः, अचेतनस्य देहस्य चित्स्वरूपस्यात्मनश्च कर्मायोगात् । न ग्रहा दुःखनिमित्तं, यतो जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्थैर्ग्रहैः जानिमतो देहस्यैव पीडा न ममात्मनः । किन्त्वात्मत्वेनाभिमन्यमानं चेत एव मे दुःखहेतुः । तच्चित्तम् इह आत्मनि स्वगतं कर्तृत्वभोक्तृत्वादिरूपं गुणगणं भावयद् आरोपयत् सत् सर्वकारि सुरनरनारकीयादिशरीरभोग्यभोगस्थानादि सर्वं करोतीति सर्वकारीत्युक्त्वा शान्तः सन् त्वां गतः मुक्तो बभूव । मम च ममापि तादृशीं चित्तशान्तिं कुरु ।

"परस्य संसृतिश्चित्त्वादचित्त्वाद् मनसोऽपि न ।
मनोभिमानिनश्चित्त्वादचित्त्वाच्च परस्य सा ॥"

इति सिद्धान्तः ॥ ९ ॥

**ऐलः प्रागुर्वशीं प्रत्यतिविवशमनाः सेवमानश्चिरं तां**
**गाढं निर्विद्य भूयो युवतिसुखमिदं क्षुद्रमेवेति गायन् ।**
**त्वद्भक्तिं प्राप्य पूर्णः सुखतरमचरत् तद्वदुद्धूय सङ्गं**
**भक्तोत्तंसं क्रिया मां पवनपुरपते! हन्त मे रुन्धि रोगान् ॥१०॥**

**ऐल** इति । ऐलः प्रागुर्वशीमित्यादि स्पष्टम् । प्राक् पुरूरवाः स्वयमागतामुर्वशीं सेवमानः पुनः समयभङ्गेन स्वर्लोकं गतां तां यज्ञैः प्राप्य चिरं सेवमानो निर्विद्य शान्तचित्तोऽभूदिति वेदपुराणप्रसिद्धिः ॥ १० ॥

इति भगवद्विभूतिवर्णनं कर्मज्ञानभक्तिमार्गाधिकारिवर्णनं चित्तोपशमप्रार्थनावर्णनं च षण्णवतितमं दशकम् ।

---

१. 'पि जनौधैर्नुद्य' क. ग. पाठः. २. 'त' ग. घ. ङ. च. पाठः.

अथ गुणत्रयवृत्तिजयेन द्वन्द्वोपरमाय त्रैगुण्यविभागमाह—

**त्रैगुण्याद् भिन्नरूपं भवति हि भुवने हीनमध्योत्तमं य-**
**ज्ज्ञानं श्रद्धा च कर्ता वसतिरपि सुखं कर्म चाहारभेदाः ।**
**त्वत्क्षेत्रत्वन्निषेवादि तु यदिह पुनस्त्वत्परं तत्तु सर्वं**
**प्राहुर्नैर्गुण्यनिष्ठं तदनुभजनतो मङ्क्षु सिद्धो भवेयम् ॥ १ ॥**

**त्रैगुण्यादि**ति । इह भुवने ज्ञानादि यद् वस्तु तत् सर्वं त्रिगुणमयत्वाद् भिन्नरूपम् अत एव हीनमध्योत्तमं च भवति । तत्र सर्वभूतेष्वात्मन एकत्वज्ञानं सात्त्विकं, पृथक्त्वेन ज्ञानं राजसं, बालादितुल्यं ज्ञानं तामसम् । श्रद्धा चाध्यात्मिकधर्माधर्मविषयतया त्रिधा । कर्ता च वैराग्यरागाज्ञानभेदेन त्रिविधः । वनग्रामद्यूतसदनभेदेन वसतिरपि त्रिधा । आत्मानुभवसुखं विषयसुखं निद्राद्युत्थ-सुखमिति तच्च त्रिविधम् । ईश्वरार्पितकाम्यनिषिद्धभेदेन कर्मापि त्रिविधम् । शुद्धमिन्द्रियप्रेष्ठमशुचि चेत्याहारद्रव्यमपि त्रिविधम् । एतत् सर्वमीश्वरविषयतया निर्गुणं भवतीत्याह—त्वत्क्षेत्रेति । इह पुनस्त्वत्क्षेत्रत्वान्निषेवादि तु यत् तत् त्वत्परं न फलपरं चेद् भवति, तर्हि तत् सर्वं नैर्गुण्यनिष्ठं निर्गुणं प्राहुः । तदनुभजनतो मङ्क्षु झटिति मुक्तो भवेयम् ॥ १ ॥

सम्प्रति 'श्रीकृष्ण! त्वत्पदोपासनम्' (दश. ९०. श्लो. १) इति प्रस्तुतं भागवतं धर्ममुपसंहरति द्वाभ्यां—

**त्वय्येव न्यस्तचित्तः सुखमयि विचरन् सर्वचेष्टास्त्वदर्थं**
**त्वद्भक्तैः सेव्यमानानपि चरितचरानाश्रयन् पुण्यदेशान् ।**
**दस्यौ विप्रे मृगादिष्वपि च सममतिर्मुच्यमानावमान-**
**स्पर्धासूयादिदोषः सततमखिलभूतेषु सम्पूजये त्वाम् ॥ २ ॥**

**त्वय्येवे**ति । सर्वा विहिता अविहिताश्च चेष्टाः कर्माणि त्वदर्थं कुर्वन्निति शेषः । त्वद्भक्तैः सम्प्रति सेव्यमानान् चरितचरान् तैरेव पूर्वं सेवितान् । अथवा त्वद्भक्तैः सेव्यमानान् देशान्, तैश्चरितचरान् पुण्यान् पुण्यकर्माणीति विभज्य योजना । दस्यौ नीचे विप्रे उत्तमे मृगादिष्वपि । आदिशब्देन चण्डा-

लादिष्वपि सममतिः सन् । अत्रोपायमाह — मुच्यमानेति । ऐकात्म्यज्ञानबलेन मुच्यमाना अवमानस्पर्धासूयादयो देहाभिमानकृता दोषा यस्यैवम्भूतः सन् त्वाम् अखिलभूतेषु सततं संपूजये । अथवा सममतित्वस्यावान्तरफलमाह — मुच्यमानेति । अवमानादिदोषनाश एवावान्तरफलम् ॥ २ ॥

एवं समदृष्ट्योपासनस्यावधिमाह —

**त्वद्भावो यावदेषु स्फुरति न विशदं तावदेवं ह्युपास्तिं**
**कुर्वन्नैकात्म्यबोधे झटिति विकसति त्वन्मयोऽहं चरेयम् ।**
**त्वद्धर्मस्यास्य तावत् किमपि न भगवन्! प्रस्तुतस्य प्रणाश-**
**स्तस्मात् सर्वात्मनैव प्रदिश मम विभो! भक्तिमार्गं मनोज्ञम् ॥ ३ ॥**

**त्वद्भाव** इति । एषु दस्युविप्रादिषु सर्वजन्तुष्वपि त्वद्भावः तवान्तर्यामिरूपेणावस्थानं यावत्कालपर्यन्तं न विशदं स्फुरति न सम्यगनुभवपदवीमवतरति, तावत्कालपर्यन्तम् एवं हि पूर्वोक्तप्रकारेणैव उपास्तिं कुर्वन् त्यक्तलज्जश्च चण्डालादिभ्योऽप्यन्तर्यामिरूपेणेश्वरोऽत्र वर्तत इति दृष्ट्वा नमस्कारादि कुर्वन्नित्यर्थः । ततश्च झटित्यैकात्म्यबोधे विकसति सर्वभूतेष्वेक एवात्मेति ज्ञानेऽनुभवरूपे सति अहं त्वन्मयश्चरेयम् । हे भगवन्! त्वद्धर्मस्य भागवतधर्मस्यास्य प्रस्तुतस्यारब्धस्य तावद् आदित आरभ्य यावत्समाप्ति किमपि किञ्चिदपि प्रणाशो वैकल्यं न भवति यथा यागादेः । तस्माद् अनुष्ठानादिसौकर्याद् मम मनोज्ञं समीचीनं भक्तिमार्गं प्रेमलक्षणाया भक्तेः साधनरूपं भगवद्धर्मं सर्वात्मना तदपेक्षिताधिकाराज्ञादिसहितं प्रदिश, मां तत्राधिकारिणं कुर्वित्यर्थः ॥ ३ ॥

आरोग्यहीनो न कुत्रापि कर्मण्यधिकारीति तदेव प्रार्थयते —

**तं चैनं भक्तियोगं द्रढयितुमयि! मे साध्यमारोग्यमायु-**
**र्दिष्ट्या तत्रापि सेव्यं तव चरणमहो भेषजायेव दुग्धम् ।**

---

१. 'त्रपर्यं' ख. पाठः.

मार्कण्डेयो हि पूर्वं गणकनिगदितद्वादशाब्दायुरुच्चैः
सेवित्वा वत्सरं त्वां तव भटनिवहैर्द्रावयामास मृत्युम् ॥ ४ ॥

तं चैनमिति। तं पूर्वोक्तम् एनम् उपसंहृतं भक्तियोगं साध्यसाधनरूपं द्रढयितुं किञ्चिदारब्धं स्थिरीकर्तुम् अयि! भगवन्! मे मम आरोग्यं बाह्यान्तररोगराहित्यम् आयुश्च साध्यम्। तत्र आयुरारोग्यनिमित्तमपि तव चरणं मया सेव्यम्। अहो दिष्ट्या साधनस्यापि सुखरूपत्वादहं कृतार्थो जातः। भेषजाय दुग्धमिव यथा सन्निपातज्वरादिनिवृत्तये पयः पातव्यं भवति, तथेत्यर्थः। नन्वायुषः प्रारब्धकर्मनियमितत्वात् तदधिकस्य लाभः प्रार्थनयापि न सम्भाव्यते इत्याशङ्क्य मार्कण्डेयदृष्टान्तेन परिहरति—मार्कण्डेय इति। ननु तस्य चिरायुष्ट्वं प्राक् कल्पितं न तु भगवत्सेवया लब्धमिति चेद्, नेत्याह—गणकेति। गणकेन जातककोविदेन निगदितम् उक्तं द्वादशाब्दायुः यस्य स पुनः 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत' इति न्यायेन संवत्सरं त्वाम् उच्चैस्तीव्रेण समाधियोगेन सेवित्वा द्वादशाब्दान्ते आत्मानं नेतुमागतं पाशदण्डहस्तं मृत्युम् अन्तकं तत्कालोपनतैः तव भटनिवहैः विष्णुदूतैः द्रावयामास पलायनमकारयत् ॥ ४ ॥ ६४ ॥

इति नारायणीयस्तोत्रव्याख्यायां

भक्तप्रियाख्यायाम्

एकादशस्कन्धपरिच्छेदः।

---

आदितः श्लोकसङ्ख्या ९९८.

---

१. 'नं प्रस्तुतं द्र' ख. पाठः. २. 'या न' क. पाठः.

## अथ द्वादशस्कन्धपरिच्छेदः ।

मुक्तानां सच्चिदानन्दब्रह्मरूपतया स्थितिः ।
द्वादशस्था हरेर्लीला सम्प्रति प्रतिपाद्यते ॥

इदानीं मार्कण्डेयकथाप्रसङ्गेन तस्य तपसा विष्णुमायाशिवदर्शनादिचरित्रकथनमिषेणाधिकारिणो योगत्रयेण ब्रह्म प्राप्तस्य ब्रह्ममात्रतयावस्थानं निरूप्यते—

**मार्कण्डेयश्चिरायुः स खलु पुनरपि त्वत्परः पुष्पभद्रा-**
**तीरे निन्ये तपस्यन्नतुलसुखरतिः षट् तु मन्वन्तराणि ।**
**देवेन्द्रः सप्तमस्तं सुरयुवतिमरुन्मन्मथैर्मोहयिष्यन्**
**योगोष्मप्लुष्यमाणैर्न तु पुनरशकत् त्वज्जनं निर्जयेत् कः ॥ ५ ॥**

**मार्कण्डेय** इति । स खलु पुनरपि चिरायुष्ट्वे लब्धेऽपि त्वत्परो भगवद्भजनपरोऽभूत् । अत्र हेतुः—अतुलसुखरतिरिति । निरतिशयसुखरूपे[1] त्वद्भजने रतिः श्रद्धा यस्य सः पुष्पभद्रातीरे हिमवदुत्तरपार्श्वे यस्यास्तीरे चित्रशिला नाम शिला भद्रवटो नाम वटश्चास्ति, तस्याः पुष्पभद्रानामनद्यास्तीरे तपस्यन्नेव षड् मन्वन्तराणि एकसप्ततिचतुर्युगलक्षणानि निन्ये । देवेन्द्रः सप्तम इति मन्वन्तरेष्विन्द्रादीनां व्यत्यासं दर्शयति । सप्तमे मन्वन्तरे यः सप्तमो देवेन्द्रः सोऽयं तपसा स्वधाम जिघृक्षतीति भिया तं मार्कण्डेयं सुरयुवतिभिः अप्सरोभिः मरुता वासन्तेन मारुतेन मन्मथेन च मोहयिष्यन् योगस्य तपस ऊष्मणा प्लुष्यमाणैः दह्यमानैस्तैः सुरयुवत्यादिभिः न तु पुनरशकत् तं मोहयितुमशक्तोऽभूत् । त्वज्जनं त्वद्भक्तं को निर्जयेद् न कोऽपि । अहो मोहो देवेन्द्रस्यापीति भावः ॥ ५ ॥

**प्रीत्या नारायणाख्यस्त्वमथ नरसखः प्राप्तवानस्य पार्श्वं**
**तुष्ट्या तोष्टूयमानः स तु विविधवरैर्लोभितो नानुमेने ।**
**द्रष्टुं मायां त्वदीयां किल पुनरवृणोद् भक्तितृप्तान्तरात्मा**
**मायादुःखानभिज्ञस्तदपि मृगयते नूनमाश्चर्यहेतोः ॥ ६ ॥**

---

१. ‘पे त्वद्भजनमिति तत्रैव र’ क. ग. पाठः.

**प्रीत्येति** । तत्तपसा जातेन प्रसादेन नरसखो नारायणाख्यस्त्वमस्य पार्श्वं प्राप्तवान् । अथ अनन्तरं स तु तुष्ट्वा तोष्टूयमानः पुनः पुनरतिशयेन वा स्तुतिं कुर्वन् त्वया विविधैर्वरैः प्रलोभितो नानुमेने न तान् वरानवृणोत् । अत्र हेतुः— भक्तितृप्तान्तरात्मेति । भक्त्या तव भजनेनैव तृप्तः पूर्णः अन्तरात्मा मनो यस्य । किञ्च, त्वदीयां मायां द्रष्टुमवृणोच्च । को[1] हि नाम दुःखदात्रीं मायां वृणुयात् । अतोऽस्मिन्नसम्भावनीयमेतदिति किलशब्दार्थः[2] । अथवा मायया[3] यद् दुःखं, तद-नभिज्ञो जन्मप्रभृति । अत आश्चर्यहेतोः अननुभूतस्य दर्शने ह्याश्चर्यं[4] भवति, अतः तदपि मायादुःखमपि मृगयते अनुबुभूषति नूनम् इति तर्कयामि ॥ ६ ॥

**याते त्वय्याशु वाताकुलजलदगलत्तोयपूर्णातिघूर्ण-**
**त्सप्तार्णोराशिमग्ने जगति स तु जले सम्भ्रमन् वर्षकोटीः ।**
**दीनः प्रैक्षिष्ट दूरे वटदलशयनं कञ्चिदाश्चर्यबालं**
**त्वामेव श्यामलाङ्गं वदनसरसिजन्यस्तपादाङ्गुलीकम् ॥ ७ ॥**

**यात** इति । त्वयि नरनारायणाख्ये आशु तस्य मायादर्शन[5]प्रार्थनानन्तरमेव याते बदरिकाश्रमं प्रति गते सति । वातेन आकुलेभ्यः इतस्ततश्चलितेभ्यो जल-देभ्यो गलता तोयेन पूर्णैः अत एव अतिघूर्णद्भिः उपर्युपरि प्रसर्पद्भिः सप्तार्णोरा-शिभिः जगति मग्ने सति स तु मार्कण्डेयः वर्षकोटीः जले सम्भ्रमन् दीनो वटदलशयनं कञ्चिदाश्चर्यबालं दूरे प्रैक्षिष्ट ॥ ७ ॥

**दृष्ट्वा त्वां हृष्टरोमा त्वरितमभिगतः स्प्रष्टुकामो मुनीन्द्रः**
**श्वासेनान्तर्निविष्टः पुनरिह सकलं दृष्टवान् विष्टपौघम् ।**
**भूयोऽपि श्वासवातैर्बहिरनुपतितो वीक्षितस्त्वत्कटाक्षै-**
**र्मोदादाश्लेष्टुकामस्त्वयि पिहिततनौ स्वाश्रमे प्राग्वदासीत् ॥ ८ ॥**

**दृष्ट्वेति** । श्वासेनान्तः प्रविष्टो विष्टपौघं चतुर्दशभुवनात्मकं जगद् दृष्टवान् ।

---

१. 'को नाम दुःखदां मा' ख. पाठः. २. 'र्थः । आ' ख. पाठः. ३. 'या' क. पाठः. ४. 'ति यतः, अ' क. पाठः. ५. 'याप्रा' क. पाठः. ६. 'नवरणान' ख. पाठः. ७. 'मुपग' ग, घ. ङ. च. पाठः.

पुनश्च बहिरनुपतितः त्वयि पिहिततनौ अन्तर्हिते सति स्वाश्रमे पुष्पभद्रातीरे प्राग्वद् यथास्थानं स्थितश्चासीत्। अत्र च मायायाः स्वरूपतः प्रदर्शनस्याशक्यत्वाद् भगवता कार्यमुखेन दर्शितेति द्रष्टव्यम् ॥ ८॥

अथ विष्णुभक्त्या सन्तुष्टस्य शिवस्यानुग्रहप्रकारमाह—

**गौर्या सार्धं तदग्रे पुरभिदथ गतस्त्वत्प्रियप्रेक्षणार्थी**
**सिद्धानेवास्य दत्त्वा स्वयमयमजरामृत्युतादीन् गतोऽभूत्।**
**एवं त्वत्सेवयैव स्मररिपुरपि स प्रीयते येन तस्मा-**
**न्मूर्तित्रय्यात्मकस्त्वं ननु सकलनियन्तेति सुव्यक्तमासीत् ॥ ९॥**

**गौर्येति**। तस्य मार्कण्डेयस्य अग्रे पुरतः। अस्य स्वयं सिद्धान् स्वतपःप्रभावेणैव प्राप्तान् अजरामृत्युतादीन्, आदिशब्देन विष्णुभक्तियशोज्ञानविज्ञानपुराणाचार्यतादीन् वरान् दत्त्वा अयं शिवः गतोऽभूत्। अनेन च विष्णोः सर्वेश्वरत्वं सिद्धमित्याह—एवमिति। त्वं विष्णुः सकलनियन्ता सर्वेश्वर इति सुव्यक्तं निश्चितमासीत्। अत्र हेतुः—मूर्तित्रय्यात्मकस्त्वं नन्विति। मूर्तित्रयी ब्रह्मविष्णुगिरीशाः तदात्मकः तत्स्वरूपः। अत्र हेतुः—त्वत्सेवयेति। स स्मररिपुरपि त्वत्सेवयैव प्रीयते येन तस्माद् विष्णोरेव कार्यनिमित्तमवस्थाभेदो मूर्तित्रयमित्यभिप्रायः ॥ ९॥

ननु शिवस्यावस्थाभेद इति किं न स्यादित्याशङ्क्य स्थानभेदेन विष्णोस्तेभ्यो व्यतिरेक ऐक्येऽपि सम्भवतीत्याह—

**त्र्यंशेऽस्मिन् सत्यलोके विधिहरिपुरभिन्मन्दिराण्यूर्ध्वमूर्ध्वं**
**तेभ्योऽप्यूर्ध्वं तु मायाविकृतिविरहितो भाति वैकुण्ठलोकः।**
**तत्र त्वं कारणाम्भस्यपि पशुपकुले शुद्धसत्त्वैकरूपी**
**सच्चिद्ब्रह्माद्वयात्मा पवनपुरपते! पाहि मां सर्वरोगात् ॥ १०॥**

**त्र्यंश इति**। त्रयो ब्रह्मविष्णुशिवलोकरूपा अंशा लोकाः यस्मिन् स त्र्यंशः, तस्मिन् सत्यलोके ऊर्ध्वमूर्ध्वमिति प्रथमं ब्रह्मलोके विधिमन्दिरं, तदु-

परि विष्णुलोके विष्णुमन्दिरं, तदुपरि शिवलोके[1] शिवमन्दिरमिति। तत्रस्थाः सृष्टिस्थितिसंहारकर्तारस्त्रिमूर्तयः। तेभ्योऽप्यूर्ध्वं तु ब्रह्माण्डाद् बहिः। अत एव मायाविकृतयः महदहङ्कारादयः षोडशविकाराः, तैर्विरहितः शुद्धसत्त्वगुणमयो वैकुण्ठलोको भाति। तत्र वैकुण्ठलोके कारणाम्भसि आवरणोदके पशुपकुले नन्दगेहेऽपि त्वं शुद्धसत्त्वैकरूपी तत्स्वच्छतयावरणाभावात् सच्चिद्ब्रह्माद्वयात्मा सच्चिदानन्दाद्वयब्रह्मवपुरेव त्वम्। अतः सर्वरोगान्मां पाहि मोचयेति ॥ १० ॥

इत्युत्तमभक्तिप्रार्थनावर्णनं मार्कण्डेयस्य प्रलयप्रदर्शनवर्णनं, परमेश्वरप्रसादवर्णनं च

सप्तनवतितमं दशकम्।

---

एवं स्तुत्यस्य विष्णोर्निष्कलत्वं प्रसाध्य तद्रूपेण स्तौति—

**यस्मिन्नेतद् विभातं यत इदमभवद् येन चेदं य एतद्**
**योऽस्मादुत्तीर्णरूपः खलु सकलमिदं भासितं यस्य भासा।**
**यो वाचां दूरदूरे पुनरपि मनसां यस्य देवा मुनीन्द्रा**
**नो विद्युस्तत्त्वरूपं किमु पुनरपरे कृष्ण! तस्मै नमस्ते ॥ १ ॥**

**यस्मिन्निति**। हे कृष्ण! तस्मै सच्चिदानन्दस्वरूपाय ते नमः। ननु स्तूयतां, किं नमस्कारमात्रेणेत्यत्राह—यस्येति। देवा मुनीन्द्रा अपि यस्य तत्त्वरूपं, तदिति सर्वनाम, सर्वं च ब्रह्म, तस्य भावस्तत्त्वं ब्रह्मत्वं, तद्रूपं न विदुः। के पुनरत्र वयं ज्ञातुं स्तोतुं वेति भावः। दुर्ज्ञेयत्वमेवाह—यो वाचामिति। लौकिकानां वैदिकानामपि वचसां दूरदूरे, वाच्यवाचकसम्बन्धाभावात्। पुनर्मनसामपि दूरदूरे। अत्र हेतुः—यस्य भासा चिच्छक्त्या सकलमिदं जगद् भासितं प्रकाशितम्। यत्प्रकाशेन लब्धसत्ताकं मनआदि, तेन तत्प्रकाशनमशक्यमित्यर्थः। तर्हि ज्ञातुमशक्यत्वादसदेवेदमित्यत्राह—यस्मिन्निति। यस्मिन्नधिष्ठाने एतद् जगद् विभातं तिष्ठति। यतो निमित्तोपादानकारणभूतादिदं जगदभवत्। येन इदं जगद्, चकारादैक्यं याति लीयत इत्यर्थः। अतो जगत्कारणत्वाद् एतद् जगद् यः यद्रूपः ईश्वर एव जगदात्मना भाति। अतो जगदात्मना प्रतीतस्य सिद्धौ न प्रमाणान्तरापेक्षेति भावः। नन्वीश्वरस्य जगदात्मत्वे विकारित्वप्रसङ्ग

---

१. 'पुरभिल्लोके पुरभित्पुरसि' क. ग. पाठः.

इति चेद्, नेत्याह—योऽस्मादिति। अस्माद् आत्मन्यविद्याकल्पिताज्जगतः उत्तीर्णं व्यतिरिक्तं रूपं यस्य ॥ १ ॥

एवमीश्वरस्य जगत्कारणत्वमुपपाद्य अनन्तरं जगदनुग्राहकत्वमाह—

**जन्माथो कर्म नाम स्फुटमिह गुणदोषादिकं वा न यस्मिन्**
**लोकानामूतये यः स्वयमनुभजते तानि मायानुसारी।**
**बिभ्रच्छक्तीररूपोऽपि च बहुतररूपो[1]ऽवभात्यद्भुतात्मा**
**तस्मै कैवल्यधाम्ने पररसपरिपूर्णाय विष्णो! नमस्ते ॥ २ ॥**

**जन्मेति**। जन्म श्रीकृष्णाद्यवतारः अथो अनन्तरं कर्म कंसहननादि नाम जन्मकर्मनिमित्तम्। गुणदोषाः निग्रहानुग्रहादयः। आदिशब्देन पुत्रमित्रादयः। एतानि यस्मिन् स्फुटं परमार्थतो न सन्ति, तथापि लोकानामूतये जगदनुग्रहाय मायानुसारी तानि जन्मकर्मादीनि स्वयम् अनन्याधीनस्वभावः सन् अनुभजते अङ्गीकरोति अपिच शक्तीः विद्याविद्याज्ञानैश्वर्यादिलक्षणाः बिभ्रत् स्वयमरूपो निर्गुणोऽपि स्थावरजङ्गमभेदेन सुरनरतिर्यगादिभेदेन च बहुतररूपश्चावभाति, अतोऽद्भुतात्मा आश्चर्यस्वरूपः, तस्मै जगदनुग्राहकाय पररसेन परमानन्देन परिपूर्णाय अत एव कैवल्यधाम्ने मोक्षप्रदाय ॥ २ ॥

ननु बहुतररूपत्वे कथमरूपत्वमित्याशङ्क्य तत्स्वरूपस्य सर्वद्वैतनिषेधावधित्वेनोपपादयति —

**नो तिर्यञ्चं न मर्त्यं न च सुरमसुरं न स्त्रियं नो पुमांसं**
**न द्रव्यं कर्म जातिं गुणमपि सदसद् वापि ते रूपमाहुः।**
**शिष्टं यत् स्यान्निषेधे सति निगमशतैर्लक्षणावृत्तितस्तत्**
**कृच्छ्रेणावेद्यमानं परमसुखमयं भाति तस्मै नमस्ते ॥ ३ ॥**

---

१. 'पो विभा' क. ग. पाठः.

**नो तिर्यञ्चमिति ।** ते तवेश्वरस्य रूपं परब्रह्म नो तिर्यञ्चं न पशुपक्ष्यादिकमाहुः आगमास्तद्विदो वा । न मर्त्यं मनुजं सुरं देवम् असुरं न स्त्रियमिति । स्त्रीपुन्नपुंसकभेदेन त्रिप्रकारं शरीरमुच्यते । द्रव्यं विषयान् । कर्म कर्मेन्द्रियाणि । जातिं ब्राह्मणत्वादि । गुणं ज्ञानेन्द्रियाणि । सद् अन्तःकरणम् । असद् अव्यक्तम् । देवादीनां परिच्छिन्नत्वेन देहादीनां जडत्वेन चैतानि न ते स्वरूपमाहुः, किन्तु निगमेनैवं निषेधे सति यत्तच्छिष्टम् अवधिभूतं स्यात् । अत एव निगमशतैः उपनिषद्भिः कृच्छ्रेण वाच्यवाचकसम्बन्धं विना लक्षणावृत्तित आवेद्यमानं प्रतिपाद्यमानं परमसुखमयं परमानन्दरूपं भाति च । अत्र निषेधवाक्यस्य मुख्यार्थस्य निषेधे[1] बाधितत्वात् तदवधिभूतेऽर्थे या वृत्तिः, सा लक्षणावृत्तिः । तथा प्रतिपाद्यमानं सद् अहं ब्रह्मास्मीति निष्कर्मतया त्वत्स्वरूपभूतं परं ब्रह्म प्रकाशत इत्यर्थः ॥ ३ ॥

अथ निषेधशेषस्याशेषत्वमशेषसाक्षित्वेन प्रतिपादयति—

**मायायां बिम्बितस्त्वं सृजसि महदहङ्कारतन्मात्रभेदै-**
**र्भूतग्रामेन्द्रियाद्यैरपि सकलजगत् स्वप्नसङ्कल्पकल्पम् ।**
**भूयः संहृत्य सर्वं कमठ इव पदान्यात्मना कालशक्त्या**
**गम्भीरे जायमाने तमसि वितिमिरो भासि तस्मै नमस्ते ॥ ४ ॥**

**मायायामिति ।** स्वस्मात् पृथगवस्थितायां मायायां चिच्छक्त्या प्रतिबिम्बितस्त्वं महत्तत्त्वेन अहङ्कारभेदैः राजसतामससात्त्विकैः शब्दस्पर्शरूपरसगन्धा इति पञ्चतन्मात्रभेदैः भूतादिभिः एकादशेन्द्रियैः आदिशब्देन प्राणादिभिरपि सकलं जगत् सृजसि । स्वप्नसङ्कल्पकल्पमिति आगमापायित्वात् स्वप्नसङ्कल्पवदयं जाग्रत्प्रपञ्चो मिथ्येत्यर्थः । भूयः पुनश्च यथा कूर्मश्चिरं विहृत्य भूयः स्वपदानि स्वस्मिन् संहृत्य तूष्णीं भवति, एवं कालशक्त्या सर्वं संहृत्य आत्मना स्वस्वरूपेणैव भासि । एवञ्चादावन्ते चासत्त्वात् प्रपञ्चस्य मध्येऽपि मिथ्यात्वमुक्तम् । ईश्वरस्यादिमध्यान्तेषु[2] प्रपञ्चप्रकाशकत्वेन सत्त्वात् साक्षित्वं नित्यत्वं चोक्तम् । ननु

---

१. 'धबा' क. ग. पाठः. २. 'ध्यावसानेषु' क. ग. पाठः.

सर्वविनाशे ईश्वरस्यापि नाश[1] इति किं न स्यादित्यत्राह—गम्भीर इति । गम्भीरे अप्रतर्क्ये तमसि सुषुप्तौ जायमान इति । अयमभिप्रायः—सर्वसंहारे सुषुप्तौ सति सकलजगन्निदानभूतमज्ञानं तमश्शब्दवाच्यं न लयं[2] गच्छति, अन्यथा जगतः पुनरुत्पत्त्यभावात्, सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शानुपपत्तेश्चेति । एवञ्च तदापि वितिमिरः नित्योदितानस्तमितप्रकाशरूपतयाज्ञानसाक्षित्वेन भासि । द्रष्टृभावे दृश्यासिद्धेरित्यभिप्रायः । य एवम्भूतः, तस्मै नमस्ते ॥४॥

नन्वीश्वरस्य जगत्कारणत्वमसिद्धं वादिविप्रतिपत्तेरित्याशङ्कायां संज्ञाभेद एव विप्रतिपत्तिः न संज्ञिनीत्याह—

**शब्दब्रह्मेति कर्मेत्यणुरिति भगवन्! काल इत्यालपन्ति**
**त्वामेकं विश्वहेतुं सकलमयतया सर्वथा कल्प्यमानम् ।**
**वेदान्तैर्यत् तु गीतं पुरुषपरचिदात्माभिधं तत् तु तत्त्वं**
**प्रेक्षामात्रेण मूलप्रकृतिविकृतिकृत् कृष्ण! तस्मै नमस्ते ॥५॥**

**शब्दब्रह्मे**[3]ति । त्वामेकमेव शब्दब्रह्मेत्यादिभिः शब्दैः विश्वहेतुं जगत्कारणमालपन्ति वादिनः । शब्दब्रह्म जगत्कारणमिति केचिदालपन्ति[4], केचित्[5] कर्म जीवादृष्टमिति, अन्ये परमाणुरिति, अपरे काल इति । एषां शब्दानां त्वमेक एवाभिधेय इति भावः । अत्र हेतुः—सकलमयतया तव सर्वात्मकत्वेन । सर्वथा तत्तद्दर्शनानुसारेण शब्दब्रह्मादिरूपेण तवैव कल्प्यमानत्वादित्यर्थः । सिद्धान्तमाह—वेदान्तैरिति । वेदान्तैस्तु यत् पुरुषपरचिदात्माभिधं तत्त्वं, तत्तु प्रेक्षामात्रेण मूलप्रकृतिविकृतिकृद् गीतमित्यन्वयः । अत्र पुरुषः 'मायायां बिम्बितस्त्वम्' (श्लो. ४) इति प्रागुक्तः, परः मायासम्बन्धरहितः, चिदिति शुद्धचैतन्यम्, आत्मा सर्वानुगतः । पुरुषादिशब्दा अभिधा यस्य तत् तथा । तत्तु तदेव तत्त्वं परं ब्रह्म प्रेक्षामात्रेण मायाप्रेरणमात्रेण मूलप्रकृतिर्माया, तस्या विकृतिः कार्यं जगत्, तत् करोतीति तथा । ननु प्रकृतेः कार्यं कथं ब्रह्म करोतीति[6] । उच्यते । यथा राजा प्रेक्षणमात्रेण सन्निधिं प्राप्तया प्रतीहार्या कर्म करोति, तद्वत् स्वसमवेतक्रिया-

---

१. 'शः किं' ख. पाठः. २. 'य याति' ख. पाठः. ३. 'ति । एके वादिनस्त्वां शब्दब्रह्म' ख. पाठः ४. 'त्याल' ख. पाठः. ५. 'त् जी' ख. पाठः. ६. 'तत्युच्यते । उच्यत एव । य' ख. पाठः.

फलशालित्वलक्षणमुख्यकर्तृत्वं ।विना प्रकृतिमुखेनेश्वरस्य जगत्कर्तृत्वमिति भावः । हे कृष्ण! य एवं, तस्मै ते नमोऽस्तु ॥ ५ ॥

ननु केयं मूलप्रकृतिरित्याशङ्क्य सदसत्त्वाभ्यामनिर्वचनीया विद्याविद्यात्मिकेश्वरस्य शक्तिरित्याह—

**सत्त्वेनासत्तया वा न च खलु सदसत्त्वेन निर्वाच्यरूपा**
**धत्ते यासावविद्या गुणफणिमतिवद् विश्वदृश्यावभासम् ।**
**विद्यात्वं सैव याता श्रुतिवचनलवैर्यत्कृपास्यन्दलाभे**
**संसारारण्यसद्यस्त्रुटनपरशुतामेति तस्मै नमस्ते ॥ ६ ॥**

**सत्त्वेनेति** । यस्येयमविद्या तज्ज्ञाने सति निवर्तते । अतः सतीति वक्तुमशक्या, सत्तास्फूर्त्यनुपपत्तेः । नासती च, एकैव सती असती चेति नितरामनुपपन्ना विरोधात् । अतोऽविद्या सत्त्वेनासत्तया सदसत्त्वेन वा न निर्वाच्यरूपा निष्कृष्य वक्तुमशक्यं स्वरूपं यस्याः सा तथा । तर्हि नास्तीति चेद्, नेत्याह— असाविति । 'अहमज्ञ' इति सर्वानुभवसिद्धतया तदनवकल्पनमशक्यमिति भावः । यासावविद्या गुणफणिमतिवद् रज्जुसर्पभ्रान्तिवद् विश्वदृश्यस्य सकलजगतः अवभासं जीवस्य संसारदुःखनिवासभूतं शरीराद्यहम्ममाभिमानादिरूपं धत्ते करोतीत्यर्थः । यस्येश्वरस्य कृपायाः स्यन्दः प्रवाहः, तस्य लाभे सति सैव अविद्या श्रुतिवचनलवैः वेदान्तवाक्यलेशैः, श्रवणमात्रेणेत्यर्थः, विद्यात्वं याता विद्यारूपिणी भूत्वा संसाररूपस्यारण्यस्य वनस्यातिनिशिततया सद्यः शीघ्रं त्रुटने खण्डने परशुतामेति, तस्मै नमस्ते ॥ ६ ॥

एवं प्रकृत्यधिष्ठितस्य ब्रह्मणो जगत्कारणत्वमुक्तम् । अथ तदनन्यत्वेन जगदात्मत्वमुच्यते—

**भूषासु स्वर्णवद् वा जगति घटशरावादिके मृत्तिकावत्**
**तत्त्वे सञ्चिन्त्यमाने स्फुरति तदधुनाप्यद्वितीयं वपुस्ते ।**
**स्वप्नद्रष्टुः प्रबोधे तिमिरलयविधौ जीर्णरज्जोश्च यद्वद्**
**विद्यालाभे तथैव स्फुटमपि विकसेत् कृष्ण! तस्मै नमस्ते ॥ ७ ॥**

१. 'रश' क. ग. पाठः. २. 'त्मकत्व' क. ग. पाठः.

**भूषास्विति** । ते तद् जगत्कारणभूतम् अद्वितीयं परब्रह्माख्यं वपुः स्वरूपम् (अधुना) अद्यापि जगतः स्थितिकालेऽपि जगति[1] जगद्विषये स्फुरति । नन्विदं ब्रह्मेति कस्यापि नानुभव इत्यत्राह— तत्त्व इति । तत्त्वे परमार्थे सञ्चिन्त्यमाने विचार्यमाणे । ब्रह्म उपादानं, जगत् तत्कार्यं, कार्यकारणयोरनन्यत्वं च शास्त्रे स्थितम् इत्यनुसन्दधतो ब्रह्मैवेदं सर्वमिति स्फुरणं सम्भवत्येवेति भावः । अत्र दृष्टान्तमाह— भूषास्विति । कटककुण्डलादिषु यथा स्वर्णं स्फुरति, यथा वा घटशरावादिके मृत्तिका, स्वर्णादिभिः[2] क्रियमाणेषु कार्येषु कटकादिषु स्वर्णमेवेदमित्यनुभवरूपा प्रतीतिरुदेति, तद्वदित्यर्थः । किञ्च, विद्यालाभे ब्रह्मज्ञाने सति अविद्यास्तमयात् स्फुटं विकसेदपि प्रपञ्चाकारपरित्यागेनाखण्डं ब्रह्मेति प्रकाशेत चेत्यर्थः । अत्र दृष्टान्तः—स्वप्नेति । स्वप्नद्रष्टुः प्रबोधे सति यद्वदज्ञानकल्पितप्रपञ्चलयः, यद्वच्च दीपादिना तिमिरलयविधौ जीर्णरज्जोर्ज्ञानेन तदज्ञानकल्पितसर्पलयः, तथैवेत्यर्थः । हे कृष्ण! यस्य ते वपुरुक्तप्रकारेण विकसेत्, तस्मै नमस्ते इति योजना ॥ ७॥

एवं सप्रपञ्चनिष्प्रपञ्चभेदेन तत्स्वरूपं स्तुत्वा सर्वनियन्तृत्वेन स्तौति—

**यद्भीत्योदेति सूर्यो दहति च दहनो वाति वायुस्तथान्ये**
**यद्भीताः पद्मजाद्याः पुनरुचितबलीनाहरन्तेऽनुकालम् ।**
**येनैवारोपिताः प्राङ् निजपदमपि ते च्यावितारश्च पश्चात्**
**तस्मै विश्वं नियन्त्रे वयमपि भवते कृष्ण! कुर्मः प्रणामम् ॥८॥**

**यद्भीत्येति** । यस्माद् भीत्या सूर्य उदेति । उचितबलीन् यथाधिकारं विहिताः पूजा आहरन्ते प्रयच्छन्ति । ते पद्मजाद्याः येन प्राङ् निजपदं सत्यलोकादि आरोपिताः प्रापिताः, पश्चाद् द्विपरार्धाद्यवसाने येन च्यावितारः च्युतिं प्रापिताश्च भविष्यन्ति, तस्मै विश्वं नियन्त्रे ब्रह्मादीनामपि नियामकाय सर्वेश्वराय वयमपि भवते हे कृष्ण! प्रणामं कुर्मः ॥ ८ ॥

---

१. 'ति स्फु' ख पाठः. २. 'भिः कार्यस्य कर्तव्यस्य कटकादिभिः क्रियमाणत्वात् स्व' क. पाठः, 'भिः कार्यस्य कटकादिभिः क्रियमाणत्वात् स्व' ग. पाठः.

किञ्च,

त्रैलोक्यं भावयन्तं त्रिगुणमयमिदं त्र्यक्षरस्यैकवाच्यं
त्रीशानामैक्यरूपं त्रिभिरपि निगमैर्गीयमानस्वरूपम् ।
तिस्रोऽवस्था विदन्तं त्रियुगजनिजुषं त्रिक्रमैक्रान्तविश्वं
त्रैकाल्ये भेदहीनं त्रिभिरहमनिशं योगभेदैर्भजे त्वाम् ॥९॥

त्रैलोक्यमिति । इदं त्रिगुणमयं सत्त्वरजस्तमस्तारतम्येन विलक्षणं त्रैलोक्यं भावयन्तं नियमेन सृजन्तं त्र्यक्षरस्य प्रणवस्य एकं प्रधानं वाच्यम् अभिधेयं त्रीशानां त्रिमूर्तीनाम् ऐक्यं स्वरूपं यस्य तम् । "ब्रह्मा विष्णुश्च रुद्रश्च परस्यैव विभूतयः" इति वचनात् । त्रिभिर्निगमैः त्रय्या गीयमानं प्रतिपाद्यमानं रूपं यस्य । तिस्रोऽवस्थाः जाग्रत्स्वप्नसुषुप्तयः, ता वेत्तीति विदन् अवस्थात्रयसाक्षी तम् । कृतयुगे प्रजानां कृतकृत्यतयावतारप्रयोजनाभावादितरेषु त्रिषु त्रेताद्वापरकलियुगेषु जनिम् अवतारं जुषत इति तथा । त्रिभिः क्रमैः पदविक्षेपैः क्रान्तम् आक्रान्तं विश्वं येन । त्रैकाल्ये भूतभविष्यद्वर्तमानेषु कालेषु भेदहीनम् अद्वितीयं, जायतेऽस्तीत्यादिषड्भावविकारहीनं वा । एवम्भूतं त्वाम् अहमनिशं त्रिभिर्योगभेदैः कर्मज्ञानभक्तियोगैः भजे ॥९॥

किञ्च,

सत्यं शुद्धं विबुद्धं जयति तव वपुर्नित्यमुक्तं निरीहं
निर्द्वन्द्वं निर्विकारं निखिलगुणगणव्यञ्जनाधारभूतम् ।
निर्मूलं निर्मलं तन्निरवधिमहिमोल्लासि निर्लीनमन्त-
र्निस्सङ्गानां मुनीनां निरुपमपरमानन्दसान्द्रप्रकाशम् ॥१०॥

सत्यमिति । तव तद्वपुः स्वरूपं जयति आविर्भूतनिरतिशयोत्कर्षं प्रकाशते । सत्यादीनि वपुर्विशेषणानि । सत्यं परमार्थसत्यम् असतः सत्ताप्रदत्वात् । विबुद्धं स्वप्रकाशसिद्धम् । मुक्तावस्थाया जन्यत्वे[२]ऽसत्यत्वप्रसक्तेः नित्यमुक्तम् । निरीहं

१. 'मा' क. ग. पाठः. २. 'त्वेऽनित्य' क. ग. पाठः.

कर्तृत्वभोक्तृत्वादिरहितम्। निर्द्वन्द्वम् अद्वितीयम् । निर्विकारं परिणामादिविक्रियारहितम् । निखिलानां ये गुणगणाः क्षमासत्यदयैश्वर्यादयः, तेषां व्यञ्जनम् उत्पत्तिः, तदाधारभूतम् । यदुपासने हि महागुणानामुत्पत्तिः । निर्मूलं निष्कारणम् । निर्मलं रागादिदोषहीनं, चित्प्रकाशत्वाद् निरस्ताज्ञानम् । निरवधिमहिमोल्लासि कालदेशापरिच्छिन्नवैभवयुक्तम् । निस्सङ्गानां मुनीनामन्तः समाधौ निर्लीनं प्रतिष्ठितम् । निरुपमः परमानन्दः सान्द्रः प्रकाशः सान्द्रावबोधश्च यस्मिन् ॥ १० ॥

अथोक्तरूपं परं ब्रह्म प्राप्तानां न पुनः संसार इत्यभिप्रायेण कालचक्रपरिभ्रमभयनिवृत्तिं प्रार्थयते—

**दुर्वारं द्वादशारं त्रिशतपरिमिलत्षष्टिपर्वाभिवीतं**
**संभ्राम्यत् क्रूरवेगं क्षणमनु जगदाच्छिद्य सन्धावमानम् ।**
**चक्रं ते कालरूपं व्यथयतु न तु मां त्वत्पदैकावलम्बं**
**विष्णो! कारुण्यसिन्धो! पवनपुरपते! पाहि सर्वामयौघात् ॥ ११ ॥**

**दुर्वारमिति** । हे विष्णो! ते कालचक्रं संवत्सरात्मकं चक्रं न तु मां व्यथयतु संसारदुःखं मा कार्षीत् । कीदृशं, दुर्वारं केनाप्यनिवारणीयम्। संवत्सरस्य द्वादश मासाः, तदात्मकद्वादशशिखरयुक्तम् । त्रिशतपरिमिलत्षष्ट्या षष्ट्युत्तरशतत्रयेण दिनैः पर्वभिर्धारासन्धिभिः अभिवीतम् अभिव्याप्तम् । संभ्राम्यद् बंभ्रम्यमाणम् । क्रूरवेगं क्षणमनु प्रतिक्षणं जगदाच्छिद्य आदायादर्शनं नेतुं सन्धावमानम् ॥ ११ ॥

इति सत्यज्ञानादिस्वरूपाद् ब्रह्मणो जगदुत्पत्त्यादिनिरूपणम्

**अष्टनवतितमं दशकं सैकम् ।**

---

अथ नवभिः श्लोकैर्भगवन्महिमा वर्ण्यते—

**विष्णोर्वीर्याणि को वा कथयतु धरणेः कश्च रेणून् मिमीते**
**यस्यैवाङ्घ्रित्रयेण त्रिजगदभिमितं मोदते पूर्णसम्पत् ।**

**योऽसौ विश्वानि धत्ते प्रियमिह परमं धाम तस्याभियायां**
**तद्भक्ता यत्र माद्यन्त्यमृतरसमरन्दस्य यत्र प्रवाहः ॥ १ ॥**

विष्णोरिति । वीर्याणि महिम्नः को वा कथयतु गणयेद्, न कोऽपि । कश्च धरणेः रेणून् मिमीते । तदपि न कोऽपि । यस्य विष्णोः अङ्घ्रित्रयेण त्रिभिः पदन्यासैः त्रिजगत् त्रैलोक्यम् अभिमितं परिच्छिन्नम् । अतो बलेरादाय स्वभुजगुप्ततया पूर्णसम्पद् मोदते सन्तुष्टसकलजनं च वर्तते । किञ्च, योऽसौ विष्णुः विश्वानि सर्वलोकं धत्ते योगैश्वर्येण धारयति, तस्य प्रियं धाम वैकुण्ठम् अभियायाम् अहं प्राप्नुयां, यत्र तद्भक्ता माद्यन्ति । अमृतरसो मोक्षसुखं, तद्रूपस्य मरन्दस्य मधुनो यत्र वैकुण्ठे प्रवाहः सर्वतो निष्यन्दः ॥ १ ॥

**आद्यायाशेषकर्त्रे प्रतिनिमिषनवीनाय भर्त्रे विभूते-**
**र्भक्तात्मा विष्णवे यः प्रदिशति हविरादीनि यज्ञार्चनादौ ।**
**कृष्णाद्यं जन्म यो वा महदिह महतो वर्णयेत् सोऽयमेव**
**प्रीतः पूर्णो यशोभिस्त्वरितमभिसरेत् प्राप्यमन्ते पदं तत् ॥ २ ॥**

आद्यायेति । आदौ भवाय अत एव अशेषकर्त्रे सर्वकारणाय प्रतिनिमिषनवीनाय उपासकानां नित्यनूतनाय विभूतेः श्रियः भर्त्रे । प्रेमलक्षणभक्तियुक्त आत्मा मनो यस्य सः । यस्तथाभूतः उक्तरूपाय विष्णवे यज्ञार्चनादौ हविरादीनि प्रदिशति, यो वा महतो विष्णोः महत् पूजनीयं कृष्णाद्यं जन्म अवतारं वर्णयेत्, सोऽयं भक्त एवेह यथेष्टसुखानुभवेन प्रीतः यशोभिः पूर्णः अन्ते शरीरपाते त्वरितं जन्मान्तरविलम्बमन्तरेण तत् पदं वैकुण्ठलोकम् अभिसरेत् प्राप्नुयाद्, नान्यः ॥

यत एवम्, अतस्तमेव स्तुवीध्वमित्याह —

**हे स्तोतारः! कवीन्द्रास्तमिह खलु यथा चेतयध्वे तथैव**
**व्यक्तं वेदस्य सारं प्रणुवत जननोपात्तलीलाकथाभिः ।**

---

'ते' क. ग. पाठः

**जानन्तश्चास्य नामान्यखिलसुखकराणीति सङ्कीर्तयध्वं**
**हे विष्णो! कीर्तनाद्यैस्तव खलु महतस्तत्त्वबोधं भजेयम् ॥**

**हे स्तोतार** इति । इह ये कवीन्द्राः काव्यकुशलाः अत एव स्तोतारो राजादिवर्णनपराः, ते खलु यूयं यथा चेतयध्वे अवगच्छथ, तथैव जननैरवतारैः उपात्ताभिरङ्गीकृताभिः लीलाभिः तं विष्णुं प्रणुवत स्तुतिं कुरुत । व्यक्तं प्रमाणसिद्धं वेदस्य सारं प्रधानप्रतिपाद्यम् । हे जानन्तः! परमार्थज्ञाः! अस्य विष्णोर्नामान्यखिलसुखकराणि मोक्षप्रदानीत्यतः सङ्कीर्तयध्वम् । हे विष्णो! महतस्तव कीर्तनाद्यैः खलु तत्त्वबोधं तत्त्वज्ञानं भजेयम् ॥ ३ ॥

किञ्च,

**विष्णोः कर्माणि सम्पश्यत मनसि सदा यैः स धर्मानबध्नाद्**
**यानीन्द्रस्यैष भृत्यः प्रियसख इव च व्यातनोत् क्षेमकारी ।**
**वीक्षन्ते योगसिद्धाः परपदमनिशं यस्य सम्यक्प्रकाशं**
**विप्रेन्द्रा जागरूकाः कृतबहुनुतयो यच्च निर्भासयन्ते ॥ ४ ॥**

**विष्णोरिति** । यूयं विष्णोः कर्माणि[1] चरितानि मनसि सदा संपश्यत चिन्तयत । स विष्णुः यैः दुष्टनिग्रहविद्यास्थापनलोकसंग्रहणरूपैः कर्मभिः धर्मान् अभ्युदयनिःश्रेयसार्थान् अबध्नात् तत्तदधिकारिभिः संयोजयामास, तानि कर्माणि संपश्यतेत्यर्थः । एष विष्णुरिन्द्रस्य त्रैलोक्यरक्षायामात्मनाधिकृतस्य भृत्य इव, इन्द्रकर्तृकस्य जगद्रक्षणस्य तदशक्तेः स्वयं करणात् । अत एव महतोपकारेणास्य प्रियसख इव च भगवान् यानि कर्माणि व्यातनोत् चकार । क्षेमकारी एवं जगद्रक्षणशील इत्यर्थः । किञ्च, योगसिद्धाः समाधिनिर्जितसमग्रैश्वर्यादिगुणा मुनयो यस्य परपदं मायासम्बन्धरहितं प्राप्तिस्थानमनिशं वीक्षन्ते पश्यन्ति । सम्यक् प्रकाशं यस्मात् सर्वस्येति परपदं विशेष्यते । यत् परपदं विप्रेन्द्रा जागरूकास्तात्पर्यवन्तः कृतबहुनुतयः सगुणनिर्गुणभेदेन स्तुतिं कुर्वन्तो निर्भासयन्ते प्रकाशयन्ति ॥ ४ ॥

---

१. 'णि म' ख. पाठः.

**नो जातो जायमानोऽपि च समधिगतस्त्वन्महिम्नोऽवसानं**
**देव! श्रेयांसि विद्वान् प्रतिमुहुरपि ते नाम शंसामि विष्णो! ।**
**तं त्वां संस्तौमि नानाविधनुतिवचनैरस्य लोकत्रयस्या-**
**प्यूर्ध्वं विभ्राजमाने विरचितवसतिं तत्र वैकुण्ठलोके ॥५॥**

**नो जात** इति । हे देव! जातो जायमानश्च यः पुरुषः, स कोऽपि त्वन्माहिम्नोऽवसानं नाधिगतः न प्राप्तः । अतोऽहं श्रेयांसि विद्वान् इदेमव श्रेय इति निश्चित्य प्रतिमुहुः अनिशं ते नाम शंसामि सङ्कीर्तयामि । हे विष्णो! तमपरिच्छिन्नमाहिमानं त्वां नानाविधस्तुतिवचनैः संस्तौमि । निर्गुणे मनोनवगाहात् सगुणं त्वां स्तौमीत्यर्थः । अस्य लोकत्रयस्य ब्रह्माण्डस्योर्ध्वं विभ्राजमाने तत्र वैकुण्ठलोके विरचिता वसतिर्वासो यस्य ॥ ५ ॥

अथ श्रीनारायणरूपं स्तौति—

**आपः सृष्ट्यादिजन्याः प्रथममयि विभो! गर्भदेशे दधुस्त्वां**
**यत्र त्वय्येव जीवा जलशयन! हरे! सङ्गता ऐक्यमापन् ।**
**तस्याजस्य प्रभो! ते विनिहितमभवत् पद्ममेकं हि नाभौ**
**दिक्पत्रं यत् किलाहुः कनकधरणिभृत्कर्णिकं लोकरूपम् ॥ ६ ॥**

**आप** इति । सृष्ट्यादिजन्याः 'अप एव ससर्जादौ' (मनु. १.९) इति वचनाद् आपः प्रथममादौ त्वां गर्भदेशे दधुः । यत्र अपां मध्येऽवस्थिते त्वय्येव जीवाः सङ्गताः प्राप्ताः ऐक्यमापन् अनुशयिता अभवन् । कल्पान्ते सर्वजीवा ब्रह्मणा सह जलशायिनि श्रीनारायणे सङ्गता अनुशेरते । तस्य जलशयनस्य अजस्य विष्णोस्ते नाभौ विनिहितमधिष्ठितमेकं पद्ममभवत् । यत् पद्मं लोकरूपमाहुः । तदेवाह—दिशः पत्राणि दलानि यस्य, कनकधरणिभृद् महामेरुः कर्णिका यस्य तत् । श्रीविष्णुरेव कमलजः सन् नाभिकमलेन भुवनमजनयदित्यर्थः ॥ ६ ॥

उक्तरूपं विष्णुमजानतः शोचन्नाह —

**हे लोका विष्णुरेतद् भुवनमजनयत् तन्न जानीथ यूयं**
**युष्माकं ह्यन्तरस्थं किमपि तदपरं विद्यते विष्णुरूपम् ।**
**नीहारप्रख्यमायापरिवृतमनसो मोहिता नामरूपैः**
**प्राणप्रीत्यैकतृप्ताश्चरथ मखपरा हन्त नेच्छा मुकुन्दे ॥७॥**

**हे लोका** इति। हे लोकाः! जनाः! यो विष्णुः एतत् परिदृश्यमानं भुवनमजनयत्, तं विष्णुं यूयं किं न जानीथ। किञ्च, युष्माकमन्तरस्थं शरीरान्तर्भूतमपि तदपरं तस्मादन्यत् संसारधर्मयुक्तं विष्णुरूपं विद्यते। अहो तदपि न जानीथ। किमिति न जानीमः, तत्राह—नीहारेति। आवरणशक्त्या हिमतुल्यया मायया परिवृतं व्याप्तं मनो येषां तथाभूताः सन्तः नामरूपैर्मोहिता मिथ्याभूतेषु शरीरादिष्वहंममेत्यभिमन्यमानाः[1] प्राणानामिन्द्रियाणां प्रीतिरेवैका प्रधानभूता तया तृप्ताः अत एव स्वर्गादिसुखेच्छया मखपराः काम्यकर्मपराः चरथ। हन्त अहो कष्टं मुकुन्दे मोक्षप्रदे विष्णौ नेच्छा॥ ७॥

अथामूर्ता विश्वमूर्तेर्मूर्तिमनुसन्धत्ते—

**मूर्ध्नामक्ष्णां पदानां वहसि खलु सहस्राणि सम्पूर्य विश्वं**
**तत् प्रोत्क्रम्यापि तिष्ठन् परिमितविवरे भासि चित्तान्तरेऽपि।**
**भूतं भव्यं च सर्वं परपुरुष! भवान् किञ्च देहेन्द्रियादि-**
**ष्वाविष्टो ह्युद्गतत्वादमृतसुखरसं चानुभुङ्क्षे त्वमेव॥ ८॥**

**मूर्ध्नामिति**। त्वं विराडभिमानी मूर्ध्नामक्ष्णां पदानां च सहस्राणि वहसि। ब्रह्माण्डानामनेकत्वात् तत्स्थसत्यलोकादिरूपाणां मूर्धादीनामनेकत्वम्। ततो विश्वं ब्रह्माण्डं सम्पूर्य व्याप्य तद् ब्रह्माण्डं प्रोत्क्रम्य अतिक्रम्य तिष्ठन्नपि परिमितविवरे अतिसंकुचिते चित्तान्तरे हृदयाकाशे भासि। हे परमपुरुष! भूतं भव्यं सर्वं भवांश्चैव। किञ्च, देहेन्द्रियादिष्वाविष्टो यस्त्वं विषयरसान् भुङ्क्ते, स त्वमेव तस्मादुद्गतत्वादमृतसुखस्य परमानन्दस्य रसं चाप्यनुभुङ्क्ते॥ ८॥

**यत् तु त्रैलोक्यरूपं दधदपि च ततोनिर्गतानन्तशुद्ध-**[3]
**ज्ञानात्मा वर्तसे त्वं तव खलु महिमा सोऽपि तावान् किमन्यत्।**
**स्तोकस्ते भाग एवाखिलभुवनतया दृश्यते त्र्यंशकल्पं**
**भूयिष्ठं सान्द्रमोदात्मकमुपरि ततो भाति तस्मै नमस्ते॥९॥**

---

१. 'हंमत्यैवाभि' क. पाठः. २. 'स्य ति' क. पाठः. ३. 'तोऽनन्त। शु' व्याख्यानुसारी पाठः. ४. 'वत्' व्याख्यानुसारी पाठः.

यत्त्विति। हे अनन्त! त्रैलोक्यमयं रूपं दधदपि ततो निर्गतो बहिः शुद्धज्ञानात्मा च वर्तसे त्वमिति यत्, सोऽपि तावत् तव खलु महिमा। किमन्यद् न किञ्चिदपि। अपिच, ते स्तोको भागः पादकल्प एवाखिलभुवनतया ब्रह्माण्डरूपेण दृश्यते। त्र्यंशकल्पं प्रायेण त्र्यंशव्यवहारयोग्यं भूयिष्ठम् अधिकतरं ते रूपं सान्द्र-मोदात्मकं परमानन्दरूपं ततो ब्रह्माण्डाद् उपरि बहिर्देशे भाति। तस्मै अपरि-च्छिन्नात्मने ॥ ९ ॥

एवं 'यस्मिन्'(द.९८. श्लो. १)इत्यारभ्य विंशत्या श्लोकैः सगुणनिर्गुणभेदेन भगवन्तं स्तुतिमिषेणानुसन्दधानः स्वस्य तत्रानधिकारमाशङ्कमानोऽभीष्टायां मूर्तौ चित्तमवतारयितुमारभते—

**अव्यक्तं ते स्वरूपं दुरधिगमतमं तत् तु शुद्धैकसत्त्वं**
**व्यक्तं चाप्येतदेव स्फुटममृतरसाम्भोधिकल्लोलतुल्यम्।**
**सर्वोत्कृष्टामभीष्टां तदिह गुणरसेनैव चित्तं हरन्तीं**
**मूर्तिं ते संश्रयेऽहं पवनपुरपते! पाहि मां कृष्ण! रोगात्॥ १०॥**

**अव्यक्तमिति**। ते अव्यक्तं केनापि न व्यज्यत इत्यव्यक्तं ब्रह्मस्वरूपं दुर-धिगमतमम् अतिशयेन दुरधिगमं दुःखेन ज्ञातुं प्राप्तुं वा शक्यं, "क्लेशोऽधिकतर-स्तेषामव्यक्तासक्तचेतसाम्" (भ.गी.१२.५) इति भगवद्वचनात्। तत् शुद्धैकसत्त्वं शुद्धसत्त्वात्मकं तु ते स्वरूपं व्यक्तं ज्ञातुं शक्यम्। अपिच एतदेव श्रीकृष्णादिरूपम् अमृतरसाम्भोधिकल्लोलतुल्यं ब्रह्मानन्दामृतरसाम्भोधेः कल्लोलेन तुल्यं सुखसेव्यम्। यस्मादेवं[2] तत् तस्मात् सर्वोत्कृष्टामभीष्टाम् इह भगवति ये गुणा भक्तवात्सल्यादयः त एव रसाः आस्वादनीयत्वात्, तेनैव चित्तं हरन्तीं मनोहरां ते मूर्तिमहं संश्रये स्तोतुं ध्यातुं वा समारभे। हे पवनपुरपते! श्रीकृष्ण! मां रोगात् संसारलक्षणात् पाहि ॥ १०॥

**इति भगवन्महिमानुवर्णनमेकोनशततमं दशकम्।**

---

१. 'त्मा ब' ख. पाठः. २. 'वे तस्मा' ख. पाठः.

एवं भगवदवतारचरितस्मरणकीर्तनादिभिरुपबृंहितप्रेमलक्षणभक्तिपरिपाकवशेन हृदयाकाशमवतीर्णं स्फुटप्रतीयमानावयववेषविशेषादिकं भगवद्रूपं पुर इवावलोकयन् यथानुभूतं स्तौति —

**अग्रे पश्यामि तेजो निबिडतरकलायावलीलोभनीयं**
**पीयूषाप्लावितोऽहं तदनु तदुदरे दिव्यकैशोरवेषम् ।**
**तारुण्यारम्भरम्यं परमसुखरसास्वादरोमाञ्चिताङ्गै-**
**रावीतं नारदाद्यैर्विलसदुपनिषत्सुन्दरीमण्डलैश्च ॥ १ ॥**

**अग्र** इति । तेजः प्रभामण्डलम् । तदनु तद्दर्शनानन्दरं दिव्यः सात्त्विकः प्रकाशोज्ज्वलः आ षोडशाब्दात् कैशोरः, तत्सम्बन्धी वेषो यस्मिन् । तारुण्यारम्भरम्यं षोडशवर्षीयं किमपि रूपं च पश्यामि । आवीतं परिवारितम् । उपनिषत्सुन्दरीमण्डलैरित्यनेनेदमवगम्यते — परं ब्रह्म श्रीकृष्णः, गोप्यस्तत्प्रतिपादकोपनिषदः, श्रीनारदादयस्तदुपदेष्टारः, ब्रह्माधिकारी ॥ १ ॥

दिव्यकैशोरवेषमिति यदुक्तं, तदेवाह —

**नीलाभं कुञ्चिताग्रं घनममलतरं संयतं चारुभङ्ग्या**
**रत्नोत्तंसाभिरामं वलयितमुदयच्चन्द्रकैः पिञ्छजालैः ।**
**मन्दारस्रङ्निवीतं तव पृथुकबरीभारमालोकयेऽहं**
**स्निग्धश्वेतोर्ध्वपुण्ड्रामपि च सुललितां फालबालेन्दुवीथीम् ॥ २ ॥**

**नीलाभमिति** । घनं निबिडम् । उदयच्चन्द्रकैः प्रकाशमानाग्रदेशस्थचित्रवर्णैः । मन्दारस्रजा सुरकुसुमविरचिताम्लानमालया निवीतं वेष्टितम् ॥ २ ॥

यथानुभूतं नेत्राम्बुजद्वन्द्वं स्तौति —

**हृद्यं पूर्णानुकम्पार्णवमृदुलहरीचञ्चलभ्रूविलासै-**
**रानीलस्निग्धपक्ष्मावलिपरिलसितं नेत्रयुग्मं विभो ! ते ।**
**सान्द्रच्छायं विशालारुणकमलदलाकारमामुग्धतारं**
**कारुण्यालोकलीलाशिशिरितभुवनं क्षिप्यतां मय्यनाथे ॥ ३ ॥**

हृद्यामिति। अनाथे अशरणे ॥ ३ ॥

उत्तुङ्गोल्लासिनासं हरिमणिमुकुरप्रोल्लसद्गण्डपाली-
व्यालोलत्कर्णपाशाञ्चितमकरमणीकुण्डलद्वन्द्वदीप्रम् ।
उन्मीलद्दन्तपङ्क्तिस्फुरदरुणतरच्छायबिम्बाधरान्तः-
प्रीतिप्रस्यन्दिमन्दस्मितशिशिरतरं वक्त्रमुद्भासतां मे ॥ ४ ॥

उत्तुङ्गेति। हरिमणिमुकुरवद् इन्द्रनीलमणिमयदर्पणवत् प्रोल्लसन्त्यां गण्डपाल्यां कपोलदेशे व्यालोलता बिम्बप्रतिबिम्बद्वैरूप्येण दोलायमानेन मकराकारयोर्मणिकुण्डलयोर्द्वन्द्वेन दीप्रं दीपनशीलम् ॥ ४ ॥

बाहुद्वन्द्वेन रत्नोज्ज्वलवलयभृता शोणपाणिप्रवाले-
नोपात्तां वेणुनालीं प्रसृतनखमयूखाङ्गुलीसङ्गशाराम् ।
कृत्वा वक्त्रारविन्दे सुमधुरविकसद्रागमुद्भाव्यमानैः
शब्दब्रह्मामृतैस्त्वं शिशिरितभुवनैः सिञ्च मे कर्णवीथीम् ॥ ५ ॥

बाहुद्वन्द्वेनेति। प्रसृतनखमयूखाङ्गुलीसङ्गशारां प्रसृतनखमयूखानाम् अङ्गुलीनां सङ्गेन शारां शबलवर्णाम्। सुमधुरो विकसन् प्रकाशमानो रागो गीतविशेषो यस्मिन्निति क्रियाविशेषणम्। उद्भाव्यमानैः प्रकाश्यमानैः शब्दब्रह्मामृतैः नादामृतैः ॥ ५ ॥

उत्सर्पत्कौस्तुभश्रीततिभिररुणितं कोमलं कण्ठदेशं
वक्षः श्रीवत्सरम्यं तरलतरसमुद्दीप्रहारप्रतानम् ।
नानावर्णप्रसूनावलिकिसलयिनीं वन्यमालां विलोल-
ल्लोलम्बां लम्बमानामुरसि तव तथा भावये रत्नमालाम् ॥ ६ ॥

उत्सर्पदिति। हारप्रतानं मौक्तिकमालाजालम्। विलोलल्लोलम्बामुरसि तथा रत्नमालां च भावये ॥ ६ ॥

अङ्गे पञ्चाङ्गरागैरतिशयविकसत्सौरभाकृष्टलोकं
　　लीनानेकत्रिलोकीविततिमपि कृशां बिभ्रतं मध्यवल्लीम् ।
शक्राश्मन्यस्ततप्तोज्ज्वलकनकनिभं पीतचेलं दधानं
　　ध्यायामो दीप्तरश्मिस्फुटमणिरशनाकिङ्किणीमण्डितं त्वाम् ॥ ७ ॥

अङ्ग इति । पञ्चाङ्गरागैः हरिचन्दनगोरोचनादिभिः अतिशयेन विकसता व्याप्तेन सौरभेणाकृष्टा लोका येन स तथा । लीनानेकत्रिलोकीम् अन्तर्गतानेकब्रह्माण्डामपि कृशामिति । अयमर्थः— यद्यपीदमपि ब्रह्माण्डं श्रीकृष्णोदरस्थं, तथापि एतद्ब्रह्माण्डान्तस्थानां तदानीन्तनानां स्वमूर्तेरिदन्तया प्रदर्शनं भगवतो योगैश्वर्य[1]वैभवेन । एवञ्च मध्यवल्ल्याः कृशत्वापादनं नास्यै किञ्चिद् भार इति । शक्राश्मेति । भगवन्मूर्तेरिन्द्रनीलश्यामत्वात् पीताम्बरस्य कनकनिभत्वाच्च सञ्जातपरभागमिति भावः । दीप्ताभिः रश्मिभिः मणिदीप्तिभिः स्फुटया प्रकाशमानया ॥ ७ ॥

ऊरू चारू तवोरू घनमसृणरुचौ चित्तचोरौ रमाया
　　विश्वक्षोभं विशङ्क्य ध्रुवमनिशमुभौ पीतचेलावृताङ्गौ ।
आनम्राणां पुरस्तान्न्यसनधृतसमस्तार्थपालीसमुद्ग-
　　च्छायं जानुद्वयं च क्रमपृथुलमनोज्ञे च जङ्घे निषेवे ॥ ८ ॥

ऊरू इति । विश्वक्षोभं लोकोत्तररामणीयकत्वेन द्रष्टृजनपारवश्यं विशङ्क्य । समस्तार्थपालीनां सकलपुरुषार्थसार्थानां यः समुद्गः सम्पुटकः, तस्यच्छाया शोभेव शोभा यस्य ॥ ८ ॥

मञ्जीरं मञ्जुनादैरिव पदभजनं श्रेय इत्यालपन्तं
　　पादाग्रं भ्रान्तिमज्जत्प्रणतजनमनोमन्दरोद्धारकूर्मम् ।
उत्तुङ्गाताम्रराजन्नखरहिमकरज्योत्स्नया चाश्रितानां
　　सन्तापध्वान्तहर्त्रीं ततिमनुकलये मङ्गलामङ्गुलीनाम् ॥ ९ ॥

---

१. 'र्येण । ए' क. ग. पाठः.　२. 'स्यातिभा' क. ग. पाठः.

**मञ्जीरमिति ।** भ्रान्तिरूपेऽब्धौ मज्जतां प्रणतजनानाममृतार्थिनां मनोरूपस्य मन्दरस्य उद्धारे कूर्मम् । सन्तापस्य ध्वान्तस्य अज्ञानस्य च हन्त्रीम् ॥ ९ ॥

**योगीन्द्राणां त्वदङ्गेष्वधिकसुमधुरं मुक्तिभाजां निवासो**
**भक्तानां कामवर्षद्युतरुकिसलयं नाथ! ते पादमूलम् ।**
**नित्यं चित्तस्थितं मे पवनपुरपते! कृष्ण! कारुण्यसिन्धो!**
**हृत्वा निःशेषतापान् प्रदिशतु परमानन्दसन्दोहलक्ष्मीम् ॥ १० ॥**

**योगीन्द्राणामिति ।** योगीन्द्राणां ध्यातॄणां त्वदङ्गेषु मध्येऽधिकसुमधुरम् । मुक्तिभाजां तु निवास आश्रयः । परमानन्दसन्दोहलक्ष्मीं मोक्षम् ॥ १० ॥

एवं स्तुतिमुपसंहृत्य तत्र वैगुण्यादिसम्भवमाशङ्क्य स्तोत्रस्य साद्गुण्यकरणायेश्वरे समर्पयन् वक्तृश्रोतॄणां पठनश्रवणफलमाशास्ते—

**अज्ञात्वा ते महत्त्वं यदिह निगदितं विश्वनाथ! क्षमेथाः**
**स्तोत्रं चैतत् सहस्रोत्तरमधिकतरं त्वत्प्रसादाय भूयात् ।**
**द्वेधा नारायणीयं श्रुतिषु च जनुषा स्तुत्यतावर्णनेन**
**स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥ ११ ॥**

**अज्ञात्वेति ।** द्वेधा नारायणीयं नारायणमधिकृत्य कृतत्वाद् नारायणेन प्रोक्तत्वाच्च । ननु विहितमविहितं वेदं स्तोत्रं त्वत्प्रसादाय भूयादिति समर्प्यत इति चेत्, श्रुतिविहितमेवेत्याह—श्रुतिष्विति । जनुषा अवतारैर्भगवतः स्तुत्यतया वर्णनं विधिर्विद्यते, तेन स्फीतं व्याप्तम्, अथवा श्रुतिषु या जनुषा स्तुत्यता, तस्याः 'हे स्तोतारः' (द. ९९. श्लो. २) इत्यादिशब्दान्तरेण वर्णनेन लीलाव-

---

१. 'नेदं लीलावतारैः स्फी' क. ग. पाठ..   २. 'तं कृतम्, अ' क. ग. पाठः.

तारैश्च स्फीतम् इदं स्तोत्रम् इह वक्तृश्रोतृणाम् आयुरारोग्यं चान्ते सौख्यं मोक्षं च कुरुताम् ॥ ११ ॥ ३८ ॥

**इति केशादिपादवर्णनं शततमं दशकं सैकम्।**

श्रीभागवततद्व्याख्यादृष्टार्था: पदान्यपि ।
स्तोत्रव्याख्यानरूपेण रचितानि परं मया ॥
यन्नाम्ना सम्मतं स्तोत्रं जनानामन्तरान्तरा ।
ताभ्यामेव हृदिस्थाभ्यां मया नेयं कृता कृतिः ॥

इति नारायणीयस्तोत्रव्याख्यायां

**भक्तप्रियाख्यायां**

**द्वादशस्कन्धपरिच्छेदः।**

आदितः श्लोकसंख्या १०३६.

**समाप्तश्चायं ग्रन्थः।**

---

**शुभं भूयात्।**